आत्मबुद्धिं समास्थाय शान्तीभूतो निरामयः । अमृतं विरजःशुद्धमात्मानं प्रतिपद्यते ॥ २१

इति श्रीमहाभारते शान्तिपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

## १९०

युधिष्ठिर उवाच ।

गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह ।
एकैवैषा गतिस्तेषामुत यान्त्यपरामपि ॥ १

भीष्म उवाच ।

शृणुष्वावहितो राजञ्जापकानां गतिं विभो ।
यथा गच्छन्ति निरयमनेकं पुरुषर्षभ ॥ २

यथोक्तमेतत्पूर्वं यो नानुतिष्ठति जापकः ।
एकदेशक्रियश्चात्र निरयं स निगच्छति ॥ ३

अवज्ञानेन कुरुते न तुष्यति न शोचति ।
ईदृशो जापको याति निरयं नात्र संशयः ॥ ४ C. 12. 7177 B. 12. 197. 4 K. 12. 195. 4

---

(for °बुद्धिं). D5.6 आत्मनि ध्यानमास्थाय. ❀ Cn: आत्मबुद्ध्या तत्त्वसाक्षात्कारेण । ❀ — b) Ś1 K1.2.4 V1 ब्रह्मभूतो; K6 Dn1 शांति°; K7 शांतो भूतो; Bo.6.8.9 D4.9 T G1–3.6 M1.5–7 शीती(T1 °तो; G1 °त)-भूतो. D4 निराश्रयः; D6 °मयं. ❀ Cp: निरामयोऽशनायाद्यतीतः । ❀ — c) K7 D4.7.9 T G1.3.6 M1 विरजाः; Cn विरजः- (as in text). Ds1 -शुद्धिम्; G2.3 -शुद्धाम्. ❀ Cn: विरजः, रजोगुणयुक्तं कार्यब्रह्मभावरूपमापेक्षिकममृतम् ...... तदन्यत्, आत्यन्तिकममृतत्वम् ॥ Cp: विरजः त्रिविधपरिच्छेदशून्यम् । यद्वा विरज इति क्लीबलिङ्गनिर्देशोऽलिङ्गत्वद्योतनायात्मनः । ❀ — d) G2 (*sup. lin.* as in text) प्रतिबुध्यते.

Colophon. — *Sub-parvan:* Ś1 K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–5.7–9 T G1–3 M1.5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K1.2.4.6 Bo.6–9 Da3.a4 Dn1 Ds D2–5.8.9 जापकोपाख्यानं; K7 जापकाख्यानं; V1 आध्यात्मं; T2 ध्यानविधिः; M1.6.7 जापकफलावाप्तिः; M5 जापकोपाख्याने स्वरूपकथनं. — *Adhy. no.* (figures, words or both): B7 Dn4 D7.8 T1 G3 M1.5–7 22; Da4 Dn1 23; D2 21; T2 G2 36. — *Śloka no.:* Da4 Dn1.n4 D8 23; Ds1 22.

### 190

1 a) K7 D4.9 यतीनाम् (for गती°). K6 V1 B8 Ds2 D3.5.6.8 उत्तमप्राप्तिः; Da4 °मा ह्याप्तिः; D7 T1 G1.3.6 M1.6 °मावाप्तिः. — b) Bo जपकेषु; G2 जापतेषु. — c) M1 एकैवेषा. K7 त्वेषाम् (for तेषाम्). — d) Bo D5 उपयांति (for उत यान्ति). B7.9 इति (for अपि).

2 b) B8 (marg. as in text) जापकस्य. Ś1 K1.2.4 विधिं तथा; K7 परां गतिं; V1 D7 T G1.3.6 M5.7 गतिं प्रभो. — cd) D4 पथं (before corr. °थां) (for यथा). K6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–6.8.9 निरयाननेकान्. K4 नरके; G1 एकैकं (for अनेकं). D4.9 पुरुषर्षभाः. ❀ Ca: निरयम्, अयेन शुभेन हीनम्, दुःखशबलत्वादैन्द्रादिपदमपि ॥ Cs: निरयं भोगगतिं न मोक्षमित्यभिप्रायः । ❀

3 a) K6 Bo.7 Dn1.n4 Ds D2.3.8 यथोक्तपूर्वं (for °क्तमेतत्). D5 सर्वं (for पूर्वं). Da3.a4 हि (for यो). — b) K1 Da3.a4 नानुतिष्ठंति जापकाः. — c) D5 -क्रियश्चैव; D8 -क्रियास्तत्र. ❀ Ca: एकदेशक्रियः इन्द्रियसंयममात्रम् । ❀ — d) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.6.8 च गच्छति (for निग°). D5.7 G2 निरयं सो(D7 यो)धिगच्छति; M6 निरयानि स गच्छति.

4 a) K4.6 Bo.6–9 Da4 Dn1.n4 Ds D2.3.5.8 G2 M1.6.7 Cp.s अवमानेन; G3 अत्र ज्ञानेन (for अवज्ञा°). — b) D6 प्रीयति; Cp कुप्यति (for तुष्यति). G2 M1.6.7 हृष्यति (for शोचति). K6 Bo.6.7.8 (marg. as in text).9 Da3.a4 Dn1.n4 Ds D2.3.5.8 न प्रीयति न हृष्यति; K7 D4.9 न तु तुष्यति शोचति. ❀ Cp: न तुष्यतीति पाठे जपादल्पमेवेन्द्रादिपदमासादितमिति न तुष्यति । ❀ — d) K7 D4.5.9 नरकं (for निरयं).

5 a) T G1.3 M1.5–7 चापि (for चैव). — b)

C. 12. 7178
B. 12. 197. 5
K. 12. 195. 5

अहंकारकृतश्चैव सर्वे निरयगामिनः ।
परावमानी पुरुषो भविता निरयोपगः ॥ ५
अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः ।
यत्राभिध्यां स कुरुते तं वै निरयमृच्छति ॥ ६
अथैश्वर्यप्रवृत्तः सञ्जापकस्तत्र रज्यते ।
स एव निरयस्तस्य नासौ तस्मात्प्रमुच्यते ॥ ७
रागेण जापको जप्यं कुरुते तत्र मोहितः ।
यत्रास्य रागः पतति तत्र तत्रोपजायते ॥ ८
दुर्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति ।
चलामेव गतिं याति निरयं वाधिगच्छति ॥ ९
अकृतप्रज्ञको बालो मोहं गच्छति जापकः ।
स मोहान्निरयं याति तत्र गत्वानुशोचति ॥ १०
दृढग्राही करोमीति जप्यं जपति जापकः ।
न संपूर्णो न वा युक्तो निरयं सोऽधिगच्छति ॥ ११

---

D4 om. (hapl.) from निरयगामिनः up to भविता (in 5d). — cd) G2 transp. पुरुषो and भविता.

6 a) K6 (marg.) 7 B9 Ds1 अविध्यापूर्वकं; D5 अविद्या°; T1 (*inf. lin.*) अबुद्ध्या°; G2 अविध्य° (sic) (for अभिध्या°). K7 Ds1 D4.6.9 जाप्यं. ❀ Ca: अभिध्या फलानुध्यानम् ॥ Cs: अभिध्या फलसंकल्पः ॥ Cv: अभिध्या, अभितो विषयध्यानम् । ❀ — b) Ś1 K1.2 तत्र; B9 D7 T G1.3 M5 यस्तु; Da4 यस्य (for यश्च). — c) K1 यात्राभिध्यो (sic); M1.6 यत्राभिध्यां. K6 B0.7.8 (marg.) Da3.a4 Dn1.n4 Ds D2.3.8 यत्रास्य रागः पतति; D5.7 योत्र (D7 यत्रा-) मिथ्यां च कुरुते; T1 G1.3.6 यत्राभिध्याय कु°. — d) B6 अर्हति; B9 अर्च्छति; G2 इच्छति (for ऋच्छति). K6 V1 B0.7.8 (marg.) Da3.a4 Dn1.n4 Ds D2.3.8 तत्र तत्रोपपद्यते (V1 °गच्छति); K7 D4.6.9 निरयं तं नि(D6 स)गच्छति; D5.7 T1 G1.3.6 स वै निरयमिच्छ(D5 °मर्ह)ति.

7 D8 om. (hapl.) 7–8. D7 T G1.3.6 read 7–8 after 11. — a) K7 अथैश्वर्यं. K6 V1 B0.6.7.8 (marg. as in text) Da3.a4 Dn1.n4 Ds D2.3.5.7 -प्रवृत्तेषु; T2 G1 M7 -प्रसक्तः सन् (for -प्रवृत्तः सन्). K4 om. सन्. — b) T G1.3.6 M5 यत्र (for तत्र). K7 D4.9 रंस्यते; V1 B6.7.9 रज्यति. Ś1 K1.2.4 जीवस्तस्य तु रज्यति. — Ds2 om. 7c–8d. — c) M7 तत्र (for तस्य). — d) K7 प्रवर्तते; D4 प्रमुद्यते (for °च्यते).

8 Ds2 D8 om. 8 (cf. v. l. 7). For the sequence in D7 T G1.3.6, cf. v. l. 7. — a) Ś1 K1.2.4 रागेन. D4 जापका. Dn1 D5 G2 जाप्यं. — b) V1 T G1.3.6 M1.5–7 यश्च; B9 यदि; G2 यस्तु (for तत्र). — c) G2 तत्र (for यत्र). T2 पतितः (for पतति). — d) K6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds1 D2.3.7 G2 [उ]पपद्यते (for °जायते).

9 b) M1.6.7 स्थूले (for चले). — Da4 om. 9cd. — c) D7 G1.3.6 फलत्यागचितिं याति. ❀ Ca: चलां निकटपाताम् । ❀ — d) K4 T1 G1.3.6 चाधिगच्छति; K6 B0.6–9 Da3 Dn1.n4 Ds D2 G2 M7 वा निय°; K7 D6 चाभिग°; V1 चापि य°; D3 T2 वाधिय°; D5 वाभिय°; D8 चाधिय°; D9 वाभिग°; M1.6 वा निग° (for वाधिग°). D7 निरयश्चानियच्छति.

10 b) Ś1 K1.2.4 B6 बालकः; D4 जापकाः (for जापकः). — K7 D4.9 om. (hapl.) 10c–11b. — c) K2.6 संमोहान्; B8 (marg.) D6 स मोहं. — d) T2 G1 M1.7 यत्र (for तत्र). Ś1 K1.2 G1 न (for [अ]नु-).

11 For the sequence in D7 T G1.3.6, cf. v. l. 7. K7 D4.9 om. 11ab (cf. v. l. 10). — b) K4.6 B7 Da3 Dn1.n4 Ds2 D2.3.7.8 T G1.3 जाप्यं; G2 जप्यां. Ds1 मानवः (for जापकः). — c) T G1–3.6 M1.5–7 स पूर्णो (for संपूर्णो). K6 B0.7.8 Da3.a4 Dn1.n4 D2.3.8 संयुक्तो; K7 V1 B8 (marg.) D5.6.9 M1.5.6 चायुक्तो (for वा यु°). — d) Da4 सा (for सो). K6 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 [ऽ]नु- (for ऽधि-).

12 D7 T G1.3.6 om. the ref. — a) K4.6 B0.6.7.8 (marg.) Da4 Dn1.n4 D2.3.8 Cn अनिवृत्तं (for °मित्तं). B0.6 यच्च; Da4 यत्र (for यत्तद्). ❀ Cn: अनिवृत्तम् स्वाभाविकम् । अनागन्तुकत्वात् । अनिमित्तमिति पाठे स एवार्थः । ❀ — b) T2 स्थितः; M7 हितं (for स्थितम्). ❀ Ca: अव्यक्तम्, अस्मदाद्यनालोचितत्वादव्यक्तम् ॥ Cp: ब्रह्मणि उपनिषदि स्थितं निर्णीतम् ॥ ❀ — c) K6 V1 B0.6–9 Dn1.n4 Ds D2.3.5.7.8 T G1.3.6 M1.5–7 Cp तद्भूतो; K7 D4.6.9 G2 संभूतो; Da3.a4 उद्भूतो (for सद्भूतो). G2 जापकं. K7 D4.9 तस्मात्; D5 T2 G3 (also as in text).6 M7 तत्र (for कस्मात्). ❀ Cp: सद्भूतः सत्स्वरूपापन्नः । ❀ — d) K4.6.7 V1

युधिष्ठिर उवाच ।
अनिमित्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम् ।
सद्भूतो जापकः कस्मात्स शरीरमथाविशेत् ॥ १२

भीष्म उवाच ।
दुष्प्रज्ञानेन निरया बहवः समुदाहृताः ।
प्रशस्तं जापकत्वं च दोषाश्चैते तदात्मकाः ॥ १३

इति श्रीमहाभारते शान्तिपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

# १९१

युधिष्ठिर उवाच ।
कीदृशो जापको याति निरयं वर्णयस्व मे ।
कौतूहलं हि मे जातं तद्भवान्वक्तुमर्हति ॥ १
भीष्म उवाच ।
धर्मस्यांशः प्रसूतोऽसि धर्मिष्ठोऽसि स्वभावतः ।
धर्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ ॥ २
अमूनि यानि स्थानानि देवानां परमात्मनाम् ।
नानासंस्थानवर्णानि नानारूपफलानि च ॥ ३
दिव्यानि कामचारीणि विमानानि सभास्तथा ।
आक्रीडा विविधा राजन्पद्मिन्यश्चामलोदकाः ॥ ४
चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥ ५ C. 12. 7191 B. 12. 198. 5 K. 12. 196. 5

Bo. 7–9 Da3. a4 Dn1. n4 Ds D2–9 T1 G1 2 M1. 5. 6 इह ( for अथ ). B6 T2 G3. 6 M7 शरीरमिव ( B6 °मपि; M7 °मिह ) चाविशेत्.

13 D7 T G1. 3. 6 om. the ref. — a ) Ś1 K1. 2 4 B9 Da3 Ca निष्प्रज्ञा( K1 °जा )नेन; K7 Ds D4. 9 G2 M5. 6. 7 ( marg. as in text ) दुष्प्रस्थानेन. — b ) K1 समुदाकृताः; D9 ( *sup. lin* as in text ) °हताः; T2 °हृतः. — c ) B7 प्रशस्त-. G1 प्रशस्तजापकं चैव. — d ) M5 [ए]व ( for [ए]ते ). Da3. a4 Ds1 तदात्मकः; T2 तथात्मकाः; M7 ( *sup lin* ) तदाश्रयाः.

Colophon. — *Sub-parvan* : Ś1 K1 2 4 6 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name* : Ś1 K1 2. 4. 6. 7 V1 Bo. 6–9 Dn1 Ds D2–6. 8. 9 जापकोपाख्यानं; T2 जापकदोषकथनं; M1. 6 जापकोपाख्याने जापकदोषोपदेशः; M5 जापकानां निरयकथनं; M7 जापकदोषोपदेशः. — *Adhy. no.* ( figures, words or both ) : B7 Dn4 Ds2 D7. 8 T1 G3. 6 M1. 5. 6 23; Dn1 24; Ds1 13; D2 22; G2 37. — *Śloka no.* : Da4 Dn1. n4 13; D8 11.

## 191

1 T1 om. the ref. — a ) K6 V1 Bo. 6. 7. 8(marg.). 9 Dn1. n4 Ds D2. 3. 5. 6. 8 T2 G2. 3. 6 M1. 5–7 कीदृशं ( for °शो ). K6 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 8 G3 M5 निरयं; B9 D5 नरकं ( for जापको ). Da4 यांति. — b ) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M5 जापको; D4. 6 G2 M1. 6. 7 नरकं ( for निरयं ). — c ) D7 T1 G1. 3. 6 कुतूहलं ( for कौतू° ). K6 V1 Bo. 7–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 राजन्मे; K7 मे ब्रह्मंस्; B6 D4–6 मे राजंस् ( for मे जातं ). — d ) K6 Ds2 D6 T1 अर्हसि ( for °ति ).

2 a ) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 G3. 6 धर्मस्यांश-; D6 °स्यांशात्; G1 °स्यांशं ( for °स्यांशः ). D6 प्रवृत्तश्च ( for प्रसूतोऽसि ). — b ) D7 T G3. 6 धर्मज्ञो ( for धर्मिष्ठो ). K7 D4. 6. 9 च ( for ऽसि ). — d ) G3. 6 शृणु च ( for शृणुष्व ). Ś1 K1. 2. 4 B8 ( marg. ) D5. 6 मम ( for ऽनघ ).

3 a ) K4 अमूनि स्थानि यानानि ( sic ). — b ) D7 T G1. 3. 6 देवानाममरा( T2 °ला )त्मनां. — c ) D6 -स्थानानि ( for -संस्थान- ).

4 a ) B6 D5 कामरूपाणि; Dn4 °कारीणि; G1. 2 °चाराणि ( for °चारीणि ). — d ) K6. 7 Bo. 6. 7. 8 ( marg. as in text ). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8. 9 पद्मिन्यश्चैव कांचनाः.

5 a ) ❀ Cp : चतुर्णामिन्द्रयमवरुणकुबेराणाम् । ❀ — b ) K1 शक्रस्य ( for शु° ). — c ) Dn1 Ds1 D6

C. 12. 7192
B. 12. 198. 6
K. 12. 196. 6

रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम् ।
एते वै निरयास्तात स्थानस्य परमात्मनः ॥ ६
अभयं चानिमित्तं च न च क्लेशभयावृतम् ।
द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च ॥ ७
चतुर्लक्षणवर्जं तु चतुष्कारणवर्जितम् ।
अप्रहर्षमनानन्दमशोकं विगतक्लमम् ॥ ८
कालः संपच्यते तत्र न कालस्तत्र वै प्रभुः ।
स कालस्य प्रभू राजन्स्वर्गस्यापि तथेश्वरः ॥ ९
आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ १०
एते ते निरयाः प्रोक्ताः सर्वे एव यथातथम् ।
तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ॥ ११

इति श्रीमहाभारते शान्तिपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

---

विश्वेदेवानां (for विश्वदे°). — d) D7 T G1. 3. 6 तथा (for अपि).

6 a) Da3. a4 चंद्रादित्य- (for रुद्रा°). T2 रुद्रादित्यावसानां च. — d) D6 निरयात्मनः (for परमा°).

7 a) Ds T1 G3. 6 M5 Cs अभवं; G1 अवभं; M6 नभयं (for अभयं). D7 वा (for the first च). ❀ Cs: यत्र प्रविष्टानां भवः संसारो न विद्यते तदभवम् । तत्र हेतुमाह । अनिमित्तं संसारकारणरहितम् । ❀ — b) K4. 6 B7 Da3 Dn1. n4 D2. 3. 6. 8 न तत्; Da4 lacuna; Ds1 तव (for न च). K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 Cpp -समावृतं; M5 -जरावृतं (for -भया°). ❀ Cp: क्लेशा अविद्यादिपञ्चकरूपाः । ❀ — c) K7 (before corr. as in text) Bo. 9 Da4 Ds1 D8 M1. 6. 7 युक्तं; T2 M5 मुक्तस्; G1–3. 6 उक्तं (for मुक्तं). K7 Bo. 6. 8. 9 Da4 Ds1 D4. 6. 9 G2. 6 M1. 6. 7 युक्तम्; Cn मुक्तम् (as in text). — d) K7 D4. 9 वा (for च). Da4 युक्तमष्टाभिरेव च.

8 a) D4 चतुर्लक्षणं (for °ण-). Ś1 K1. 2 D7 T1 G1 M1. 6. 7 -वर्ज्यं (for -वर्जं). Ś1 K1. 2. 7 D4. 9 G2 M1. 6 तच्; Ds D7 T G1. 3. 6 M5. 7 च (for तु). — c) Ds1 अमानंदम्; M7 (sup. lin. as in text) अनांद्यंत (for °नन्दम्). D7 T G1. 3. 6 M5 अप्रतर्क्य (T2 M5 °कर्ष)मनाद्यंतम् (M5 °नंदं). ❀ Ca. p. s: हर्षो बाह्यविषयसमुत्थः, आन्तर आनन्दः । ❀ — d) M5. 7 विशोकं (for अ°). V1 B6–9 विगतज्वरं (for °क्लमम्). ❀ Cn: शोक आन्तरं दुःखम्, क्लमो बाह्यं दुःखम् ॥ Cs: विशोकं मानसपीडारहितम् । विगतक्लमं कायक्लेशरहितम् । ❀

9 a) V1 B6. 9 Da3. a4 D4. 6. 9 G2 M6 कालं (for कालः). Ś1 K1. 2. 4 समृध्यते; K6 Dn1. n4 Ds D2. 3. 5. 8 संपद्यते; B7 स पश्यते; B8 Da3. a4 D4. 6. 9 M6 स पचते; D7 T2 G3. 6 M1. 5 स पच्यते; M7 संपचते; Cv संवहते (for संपच्यते). — b) D7 T1 G3. 6 तस्य (for तत्र). K6 Da3 Dn1. n4 Ds D2. 3. 5. 6. 8 कालस्तत्र न वै प्रभुः. — c) Ś1 K1. 2 सकलस्य (for स कालस्य). B8 (marg. as in text) प्रभु (for प्रभू). — d) K1 स्वर्गस्याति-; K7 D7 T G1. 2 M1. 5–7 सर्वस्यापि; D4. 9 सर्ग°; G3. 6 सर्वव्यापी (for स्वर्गस्यापि). — After 9, Kumbh. ed. Cv ins.:

517* एतद्वै ब्रह्मणः स्थानं जापकस्य महात्मनः ।
तत्रस्थं परमात्मानं ध्यायन्वै सुसमाहितः ।
हिरण्यगर्भसायुज्यं प्राप्नुयाद्वा नृपोत्तम ।

[ (L. 3) Kumbh. ed. हिरण्यगर्भः. ]

10 a) K6 Da4 Dn4 Ds D2. 3. 5. 6. 8 T G1. 3. 6 M1. 5. 7 आत्मा (for आत्म-). ❀ Cs: आत्मकेवलतां प्रकृतिसंपर्कराहित्यम् । ❀ — c) K1 ईदृशे. G1. 3. 6 परम- (for परमं). — d) K7 तस्य; D4–6. 9 तत्र (for ते च). K7 तादृशः; Bo यादृशाः.

11 a) K7 V1 B6–9 Da3. a4 D4. 6. 7. 9 T G1. 3. 6 M1. 5. 6. 7 (sup. lin. as in text) वै (for ते). — b) V1 B6–9 यथाक्रमं; Ds1 यथा तथा (for यथातथम्). — c (G1 स्थानपरस्य; G2 स्थानं पुरस्य. — d) K1 D6 -संज्ञताः (D6 °ता); Da3 Ds1 -संज्ञितः.

Colophon. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 जापकोपाख्यानं; T2 जापकनिरयगमनं; M1. 6. 7 जापकोपाख्याने ईश्वरप्रशंसा. — *Adhy. no.* (figures, words or both): B7 Dn4 Ds2 D7 T1 G1. 3. 6 M1. 5–7 24; Dn1 25; D3. 8 23; T2 G2 38. — *Śloka no.:* Da4 Dn1. n4 D8 11.

# १९२

युधिष्ठिर उवाच ।
कालमृत्युयमानां च ब्राह्मणस्य च सत्तम ।
विवादो व्याहृतः पूर्वं तद्भवान्वक्तुमर्हति ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इक्ष्वाकोः सूर्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च ॥ २
कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे ।
यथा स तेषां संवादो यस्मिन्स्थानेऽपि चाभवत् ॥ ३
ब्राह्मणो जापकः कश्चिद्धर्मवृत्तो महायशाः ।
षडङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ॥ ४
तस्यापरोक्षं विज्ञानं षडङ्गेषु तथैव च ।
वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ॥ ५
सोऽन्त्यं ब्राह्मं तपस्तेपे संहितां संयतो जपन् ।
तस्य वर्षसहस्रं तु नियमेन तथा गतम् ॥ ६
स देव्या दर्शितः साक्षात्प्रीतास्मीति तदा किल ।
जप्यमावर्तयंस्तूष्णीं न च तां किंचिदब्रवीत् ॥ ७
तस्यानुकम्पया देवी प्रीता समभवत्तदा ।
वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ॥ ८ C. 12. 7205 B. 12. 199. 8 K. 12. 197. 8

## 192

1 a) K6 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 ते (for च). — b) K6 7 V1 B0. 6–9 Da3 a4 Dn1. n4 Ds D2. 3 5. 8 इक्ष्वाकोर्ब्राह्मणस्य च. — c) D7 T1 G1. 3. 6 संवादो (for वि°). D9 damaged from व्याहृतः up to न्वक्तु. T2 G1 व्याहृतं (for °तः). — d) M7 तं (for तद्). K1 D4. 9 G1 अर्हसि (for °ति).

2 c) D5 सूर्यवंश्यस्य (for °पुत्रस्य). — d) K1 ब्रह्मणस्य.

3 a) B9 यथा (for तथा). D8 विवादो व्याहृतश्च तथा (hypermetric); M6 तथा कालस्य मृत्योश्च. — b) K1 निबोधसे (for °ध मे). — c) K7 D4–6. 9 च (for स). — d) D4 वा (for ऽपि). Ś1 K2 Ds1 वा (for च). V1 च भारत; D4 [अ]पि भवेत् (for चाभवत्). K1 G2 यस्मिन्स्थाने पिताभवत् (sic). — After 3, Kumbh. ed. ins.:

518* येनैव कारणेनात्र धर्मवादसमन्वितः ।

4 a) D5 ब्रह्मणो; G1 ब्राह्मणे (for °णो). — b) D5 धर्मचित्तो (for °वृत्तो). K4 महायशः; D7 T G1. 3. 6 °तपाः. — c) B6. 9 महाप्रज्ञः (for °प्राज्ञः). — d) Ś1 K1. 2. 4 पैप(K4 पिप्प)लादिकः; D4. 9 पे(D9 पै)ष्पलादिः स; D6 पैपल्यादिः स; D7 T2 G1. 3. 6 पैप्प(G1 °पिप)लादः स (for °लादिः स). G2 काशिकः (for कौ°). ❀ Ca: शाखया पैप्पलादिः, गोत्रतः कौशिकः ॥ Cp. s: पिप्पलादस्यापत्यं पैप्पलादिः, कौशिको गोत्रेण (Cs: कौशिकः विश्वामित्रगोत्रः) । ❀

5 a) Ds2 [अ]परोक्ष (for °रोक्षं). — b) K7 D4. 7. 9 T G1–3. 6 M5. 7 षट्स्वंगेषु (for षडङ्गेषु). K6 V1 B0. 6–9 Da3 a4 Dn1. n4 Ds D2. 3. 8 बभूव ह (for तथैव च). — c) Da4 देवेषु (for वेदेषु). — d) D5 -संश्रितः; D6 -संसृतः (for -संश्रयः).

6 a) Ś1 K1. 2. 4 सत्य-; K6 सोग्रं; K7 सांत्यं; Dn1. n4 D2. 3 Cn सोद्यं; Ds2 D6. 8 सोग्रयं; D4 सोक्ष्यं; D7 T G1–3. 6 M1. 5–7 सोयं; Cp सोऽन्त्यं (as in text). Ś1 -ब्राह्मस्; K1 -ब्रह्मस्; K2 -व्रतस्; K4. 7 D4. 6. 9 G2 ब्रह्म; D5 ब्राह्मयं (for ब्राह्मं). ❀ Cn: सोद्यं, वादोऽर्थज्ञानं, तेन सह सोद्यम् । ❀ — b) Ś1 K1. 2. 4 संश्रितो; V1 D5 T2 संहितो; M7 संहतो (for संयतो). G6 [ऽ]जपत् (for जपन्). — K7 om. 6c–8d.

7 K7 om. 7 (cf. v. l. 6). — a) ❀ Cn: दर्शितः दर्शनेन अनुगृहीतः । ❀ — b) K6 प्रीत्या (for प्रीता). B6. 7. 9 Da4 तथा (for तदा). — c) D5 जाप्यम् (for जप्यम्). D7 T2 G1. 3. 6 आवर्तयत् (for °र्तयंस्). — d) K4. 6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 T G1–3. 6 M1. 5–7 स (for च). G1 तं (for तां).

8 K7 om. 8 (cf. v. l. 6). — a) K1 अस्य (for तस्य). — c) D5 देव- (for वेद-). Cs सावित्री वेदमातास्य. — d) D4–6. 9 तज्जाप्यं. D7 T G1 3. 6 जप्यं समभिपूजयत्. — After 8, Kumbh. ed. Cv ins.:

519* चतुर्भिरक्षरैर्युक्ता सोमपानेऽक्षराष्टका ।
जगद्बीजसमायुक्ता चतुर्विंशाक्षरात्मिका ।

C.12.7205 B.12.199.9 K.12.197.10 समाप्तजप्यस्तूत्थाय शिरसा पादयोस्तथा ।
पपात देव्या धर्मात्मा वचनं चेदमब्रवीत् ॥ ९
दिष्ट्या देवि प्रसन्ना त्वं दर्शनं चागता मम ।
यदि वापि प्रसन्नासि जप्ये मे रमतां मनः ॥ १०

सावित्र्युवाच ।

किं प्रार्थयसि विप्रर्षे किं चेष्टं करवाणि ते ।
प्रब्रूहि जपतां श्रेष्ठ सर्वं तत्ते भविष्यति ॥ ११

भीष्म उवाच ।

इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्मवित् ।
जप्यं प्रति ममेच्छेयं वर्धत्विति पुनः पुनः ॥ १२
मनसश्च समाधिर्मे वर्धेताहरहः शुभे ।
तत्तथेति ततो देवी मधुरं प्रत्यभाषत ॥ १३
इदं चैवापरं प्राह देवी तत्प्रियकाम्यया ।
निरयं नैव यातासि यत्र याता द्विजर्षभाः ॥ १४
यास्यसि ब्रह्मणः स्थानमनिमित्तमनिन्दितम् ।
साधये भविता चैतद्यत्त्वयाहमिहार्थिता ॥ १५
नियतो जप चैकाग्रो धर्मस्त्वां समुपैष्यति ।
कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकम् ।
भविता च विवादोऽत्र तव तेषां च धर्मतः ॥ १६
एवमुक्त्वा भगवती जगाम भवनं स्वकम् ।

9 [a]) K2 समाप्तं; Dn4 D6.7 T G1–3.6 M1.6.7 समाप्य (for °प्त-). K1.2 D7 T G1–3.6 M1.6.7 जप्यं; D5 -जाप्यं (for -जप्यस्). K1.2 उत्थाय; Ds स्तुत्वा च (for तूत्थाय). —[b]) K6.7 Bo.8 Da3.a4 Dn1.n4 Ds1 D2–4.6.8.9 T2 M1.5–7 तदा (for तथा). —[d]) K2 वंदनं (for वचनं).

10 [a]) G2 दृष्टा (for दिष्ट्या). Da4 च (for त्वं). —[b]) G2 च गता (for चागता). D7 T G1–3.6 M1.5–7 [अ]सि मे (for मम). —[c]) K6 V1 Bo Da3 Dn1 Ds D2.3.5.8 M1.5.6 चापि; D6 त्वं मे (for वापि). —[d]) K7 जाप्ये (for जप्ये). Da4 ते (for मे). K1 मम; G2 मतिः (for मनः). T2 जप्यमेव सतां मनः.

11 K4 reads 11–48 after 65. —[a]) K7 D4–6.9 प्रयच्छामि (for प्रार्थयसि). D7 T G1.3.6 विप्र त्वं (for विप्रर्षे). —[b]) B8.9 Da4 किं चेष्टं; D9 (by corr. as in text) कं चेष्टं. —[d]) D4 तत्त्वे (for तत्ते).

12 For the sequence in K4, cf. v. l. 11. Most MSS. om. the ref. —[a]) B6 तया; M1.6.7 ततो (for तदा). —[b]) K1 (before corr.) विप्राः. —[c]) Dn1 जपं (for जप्यं). —[d]) Ś1 K1.2 वर्धत्वति; D7 T1 G1.3.6 °ते हि; T2 G2 M1.5–7 °तेति (for °त्विति).

13 For the sequence in K4, cf. v. l. 11. —[a]) B6–9 Da3 Cp मानसश् (for म°). D7 T1 G1.3.6 तु (for च). —[b]) K1 वरेत; D5 M7 वर्धंत (for वर्धेत). Ds1 मुने (for शुभे). —[c]) K7 Bo.6–9 D4.5.9 T2 G1.2 M1 तं (for तत्). M6 तं तथैवेति सा देवी.

14 For the sequence in K4, cf. v. l. 11. —[a]) Da4 G2 चैव परं; Dn1 वै चापरं (for चैवापरं). —[c]) Da4 Ds निरयान्; D7 G1.3.6 M7 निरये (for °यं). K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–6.8 G2 याता त्वं; D4 (also) T2 यातोसि; G1 यातास्मि (for यातासि). —[d]) D6 यांति (for याता).

15 For the sequence in K4, cf. v. l. 11. —[a]) D7 T1 व्रजसि; G1 यजेहं; G3.6 गंतासि (for यास्यसि). K7 B9 Da4 D4 G3.6 ब्राह्मणः (for ब्र°). —[b]) K2.4 D4.6 मन्निमित्तम्; D8 सन्निमित्तम् (for अनि°). Ś1 K2 Da4 आनिंदित (Da4 °तां); K1 अनिर्दिता; D5 अनामयं; D7 T1 G1 अतंद्रितः; T2 G2.3.6 अनिंदितः (for °दितम्). —[c]) D7 T G1.3.6 M5 साधु ते (for साधये). Bo D6 चैव (for चैतद्). —[d]) V1 B7.8 (marg.).9 Cp [अ]र्चिता; D7 T1 G3.6 [आ]स्थिता; Cpp [अ]र्थिता (as in text).

16 For the sequence in K4, cf. v. l. 11. —[a]) Ds1 D4 G1 वैकाग्रो (for चै°). —[b]) Ds1 D7 G1.2 M1.6 त्वा (for त्वां). K7 D4.6.9 T1 G1–3 M1.5.6 समुपेष्यति; D5 °पैस्यति; D7 °पैक्ष्यति (for °पैष्यति). —[c]) M1.6.7 चैते (for चैव). ❀ Cn : आयुःपरिच्छेदिका देवता कालः । प्राणवियोजिका मृत्युः । पुण्यापुण्यफलदायिका यमः । ❀ —[d]) Da4 न (for ते).

17 For the sequence in K4, cf. v. l. 11. Before 17, K6 V1 Bo.6–9 Da3.a4 Dn4 Ds D2.3.5.8 ins. भीष्म उवाच. —[a]) K1 भागवती; D7 (by corr. as in text) भगवति. —[d]) K1.4 Da3 Dn1.n4 Ds दिव्य- (for दिव्यं). K4.6.7 Bo.8 (marg. as in text) Da3.a4 Dn1.n4 D2.3 G2 M7 तथा (for तदा).

ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तदा ॥ १७
समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः ।
साक्षात्प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् ॥ १८
धर्म उवाच ।
द्विजाते पश्य मां धर्ममहं त्वां द्रष्टुमागतः ।
जप्यस्य च फलं यत्ते संप्राप्तं तच्च मे शृणु ॥ १९
जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः ।
देवानां निरयान्साधो सर्वानुत्क्रम्य यास्यसि ॥ २०
प्राणत्यागं कुरु मुने गच्छ लोकान्यथेप्सितान् ।
त्यक्त्वात्मनः शरीरं च ततो लोकानवाप्स्यसि ॥ २१
ब्राह्मण उवाच ।
कृतं लोकैर्हि मे धर्म गच्छ च त्वं यथासुखम् ।
बहुदुःखसुखं देहं नोत्सृजेयमहं विभो ॥ २२
धर्म उवाच ।
अवश्यं भोः शरीरं ते त्यक्तव्यं मुनिपुंगव ।
स्वर्ग आरोह्यतां विप्र किं वा ते रोचतेऽनघ ॥ २३
ब्राह्मण उवाच ।
न रोचये स्वर्गवासं विना देहादहं विभो । C. 12. 7223 B. 12. 199. 25 K. 12. 197. 28

— After 17, K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D3. 5. 8 Kumbh. ed. ins.:

520* सदा दान्तो जितक्रोधः सत्यसंधोऽनसूयकः ।

18 For the sequence in K4, cf. v. l. 11. — a) Da3 समात्ते (for °प्ते). M7 नियते (for °मे). — b) G2 तथा (for अथ). G1 विप्रः स (for विप्रस्य). — c) T1 प्रियस् (for प्रीतस्). K7 D4–6. 9 M1. 6. 7 ततो; Da4 D7 T1 G1. 3. 6 तथा (for तदा). — d) K1 मर्ध-यामास (for दर्श°).

19 For the sequence in K4, cf. v. l. 11. T2 G3 om. the ref.; V1 reads it on the marg. — a) Da4 तां (for मां). — b) B9 त्वामहं (by transp.); D7 T1 G1. 3 अहं त्वा. — c) K6 G1 M5. 6 जपस्य; D5 जपेन (for जप्यस्य). K4. 6 V1 Bo 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 7. 8 T G1–3. 6 M1. 5–7 [अ]स्य (for च). K4. 6 Bo. 6–8 Da3 Dn1. n4 Ds1 D2. 3. 8 यत्तत्; B9 यत्तु; Da4 यत्र (for यत्ते). — d) Ds1 संप्राप्यं. Ds1 D6 तव; T1 तत्स् (for तच्च).

20 For the sequence in K4, cf. v. l. 11. — a) K1 जित्वा; G1 lacuna (for जिता). D7 T1 G1. 3. 6 जिताः (for त्वया). G1 स्वर्गे (for सर्वे). — c) Ś1 (*sup. lin.* as in text) K1 D2 विनयात् (D2 °न्); K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D3. 5–8 T1 G1–3. 6 M1. 5–7 निलयान् (Da4 °यात्) (for निर°). D5 सद्यः (for साधो). — d) Ś1 K1. 2 M1 उत्क्रम्य.

21 For the sequence in K4, cf. v. l. 11. — c) K7 D4. 6. 9 त्यज्य (for त्यक्त्वा). Da4 M7 [आ]त्मानः.

22 For the sequence in K4, cf. v. l. 11. — a) K4. 6 V1 Bo. 6–9 Da3 Ds D2. 3. 6. 8 किं नु; Da4 Dn1 किं तु; Dn4 किं च (for कृतं). D7 T1 G1. 3. 6 लोकेन; M1 लोके हि (for लोकैर्हि). — b) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 त्वं च (by transp.); D4. 9 तत्त्वं. — c) B9 -दुःखं (for -दुःख). D7 T G1–3. 6 -सहं (for -सुखं). Bo देहान् (for देहं). — d) K2 प्रभो (for विभो). — After 22, M1 reads 24[cd] for the first time, repeating it in its proper place, while Kumbh. ed. ins. after 22:

521* अचलं ते मनः कृत्वा त्यज देहं महामते ।
अनेन किं ते संयोगः कथं मोहं गमिष्यसि ।

23 For the sequence in K4, cf. v. l. 11. G1 om. the ref. G2 यम (for धर्म). — a) B9 om. ते. — b) Da4 -पुंगवं. — c) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T2 G2 स्वर्गम्. K4 B6 आरोहतां; K6 Bo. 7–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 आरोह भो; K7 V1 D4–7. 9 T G1–3. 6 M1. 5–7 आरुह्यतां (for आरो°). Da4 विप्रः; D7 देव. — d) Da3 Dn1. n4 वै (for ते). G1 किं वा देहेन तेनघ.

24 For the sequence in K4, cf. v. l. 11. — a) G1 om. न. D4 रोचत (for रोचये). — b) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8 G1. 2 M1. 7 देहम् (for देहाद्). D6 अयं (for अहं). M5 प्रभो (for विभो). — M1 reads 24[cd] for the first time after 22. — d) ❀ Ca: विनात्मनेत्यात्मशब्दो देहवचनः ॥ Cs: आत्मना शरीरेण । ❀

25 For the sequence in K4, cf. v. l. 11. — a) K1 अहं (for अलं). D5 अलं हि धर्म कृत्वा वै; G3 असंदेहमनाः कृत्वा. — d) K1 शोचति; B6 °ते (for °सि).

C. 12. 7224
B. 12. 199. 25
K. 12. 197. 28

गच्छ धर्म न मे श्रद्धा स्वर्गं गन्तुं विनात्मना ॥ २४
धर्म उवाच ।
अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव ।
गच्छ लोकानरजसो यत्र गत्वा न शोचसि ॥ २५
ब्राह्मण उवाच ।
रमे जपन्महाभाग कृतं लोकैः सनातनैः ।
सशरीरेण गन्तव्यो मया स्वर्गो न वा विभो ॥ २६
धर्म उवाच ।
यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज ।
एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः ॥ २७
भीष्म उवाच ।
अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो ।
ब्राह्मणं तं महाभागमुपागम्येदमब्रुवन् ॥ २८
तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च ।
फलप्राप्तिस्तव श्रेष्ठा यमोऽहं त्वामुपब्रुवे ॥ २९
यथावदस्य जप्यस्य फलं प्राप्तस्त्वमुत्तमम् ।
कालस्ते स्वर्गमारोढुं कालोऽहं त्वामुपागतः ॥ ३०
मृत्युं मा विद्धि धर्मज्ञ रूपिणं स्वयमागतम् ।

---

26 For the sequence in K4, cf. v. l. 11. — [a]) Ś1 K1. 2. 4 V1 Dn1 D7 T1 G1 न मे; D5 रेमे (for रमे). Ś1 जयो; K1. 2 Dn1 G2 जप; D5 तपन् (for जपन्). — [b]) K6 Bo. 6–9 Da3 Ds D2. 3. 8 किं तु; Da4 Dn1. n4 किं तु (for कृतं). — [c]) K7 D4. 9 स्व- (for स-). K6. 7 V1 Bo. 6. 7. 8 (marg. as in text) Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 6. 7 गंतव्यं (for °व्यो). — [d]) K6 V1 Bo. 6. 7 8 (marg. as in text) Da3. a4 Dn1. n4 Ds D2. 3. 5–8 G1. 3. 6 M1. 6. 7 स्वर्गं न; K7 स्वर्गेण; D9 स्वर्गे न (for स्वर्गो न). K4 हि; D7 T G1. 3. 6 M5 चेद् (for वा). D4 विभोः; T2 प्रभो. G2 मया स्वर्गं तदा विभो. — After 26, Kumbh. ed. ins.:

522* एवं ते कार्यसंप्रीतिर्वर्तते मुनिसत्तम ।

27 For the sequence in K4, cf. v. l. 11. — [a]) D7 G1 यदिच्छन् (for यदि त्वं). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 नेच्छसे (for °सि). Ś1 K1. 2. 4 यदि त्वमिच्छसि किं तु. — [c]) D7 T1 G1. 3. 6 च वै (for तथा). — [d]) G2 चायम् (for च त्वाम्). K2. 4 Ds1 D8 T1 G1. 3. 6 उपागतः (for °गताः).

28 For the sequence in K4, cf. v. l. 11. — [b]) T1 G1 यमश्च (for मृत्युश्च). — [c]) G3 तु (for तं). — [d]) K4 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 7. 8 T G1–3. 6 M1. 6. 7 उपगम्य; K7 D4–6. 9 अभि° (for उपा°). V1 B8 (marg.) D5. 7 T G1. 3. 6 M1. 5–7 अब्रवीत् (for अब्रुवन्).

29 For the sequence in K4, cf. v. l. 11. Before 29, MSS. ins. यम उवाच. V1 reads 29–31 on marg. — [a]) K1 G1 तपस्यो; D4 तपसोः. K7 om. (hapl.) सुतप्तस्य. — [c]) D7 T G1. 3. 6 स्वर्ग- (for फल-). K4. 6 D6. 7 T1 G1–3. 6 तव श्रेष्ठ; K7 तवासृष्टा (for तव श्रेष्ठा). — [d]) K1 यामोहं; Da3. a4 यामहं (for यमोऽहं). K1 om. (hapl.) from त्वा up to कालोऽहं (in 30[d]). D4 उपब्रुव; D5 उपागताः; M1 उपब्रुवेत् (for °ब्रुवे). ❀ Cs: उपब्रुवे उपवंद्य ब्रुवे । ❀

30 For the sequence in K4, cf. v. l. 11. Before 30, MSS. ins. काल उवाच. K1 om. up to कालोऽहं (cf. v. l. 29). V1 reads 30 on marg. 30[ab] is damaged in K7. — [a]) K2 यथा वशस्य; D8 D5 यथा वेदस्य; G2 यथावदिह (for °वदस्य). B8 (marg. as in text). 9 Da4 जापस्य (for जप्यस्य). — [b]) D7 प्राप्तिस्; G1 M7 प्राप्तं (for प्राप्तस्). K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 T2 फलं प्राप्तमनुत्तमं; G2 फलावाप्तिरनुत्तमा. — [d]) K4 कामो (for कालो). D7 T G1. 3. 6 M1. 5–7 त्वाहम् (for ऽहं त्वाम्). M1. 5. 6 इहागतः (for उपा°). D5 कालोहं समुपागतः.

31 For the sequence in K4, cf. v. l. 11. Before 31, MSS. ins. मृत्युरुवाच. V1 reads 31 on marg. — [a]) K7 Da4 Dn4 मृत्युर्. D5 विप्रर्षे (for धर्मज्ञ). — [c]) Ś1 K1. 2. 4. 6 V1 Da3 Dn1. n4 Ds2 D2. 3. 8 G1 चोदितो; Ds1 नोदितो (for चोदितं). — [d]) K1 त्वामितो नेत्त सद्यवै (sic).

32 For the sequence in K4, cf. v. l. 11. D4 om. 32. V1 reads the ref. on marg. — [b]) D7 यमात्मने (for महात्मने). — [c]) M1. 5 वाथ; M1 [s]पि च (for चाथ). — [d]) K1 om. कार्यं.

33 For the sequence in K4, cf. v. l. 11. D4. 7 om. the ref. — [a]) Ś1 K1. 2. 4 स (for च). Ś1 K1

कालेन चोदितं विप्र त्वामितो नेतुमद्य वै ॥ ३१

ब्राह्मण उवाच ।

स्वागतं सूर्यपुत्राय कालाय च महात्मने ।
मृत्यवे चाथ धर्माय किं कार्यं करवाणि वः ॥ ३२

भीष्म उवाच ।

अर्घ्यं पाद्यं च दत्त्वा स तेभ्यस्तत्र समागमे ।
अब्रवीत्परमप्रीतः स्वशक्त्या किं करोमि वः ॥ ३३
तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः ।
इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ॥ ३४
सर्वानेव तु राजर्षिः संपूज्याभिप्रणम्य च ।
कुशलप्रश्नमकरोत्सर्वेषां राजसत्तमः ॥ ३५
तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च ।
अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम् ॥ ३६
स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि ।
स्वशक्त्या किं करोमीह तद्भवान्प्रब्रवीतु मे ॥ ३७

राजोवाच ।

राजाहं ब्राह्मणश्च त्वं यदि षट्कर्मसंस्थितः ।
ददामि वसु किंचित्ते प्रार्थितं तद्वदस्व मे ॥ ३८

ब्राह्मण उवाच ।

द्विविधा ब्राह्मणा राजन्धर्मश्च द्विविधः स्मृतः ।
प्रवृत्तश्च निवृत्तश्च निवृत्तोऽस्मि प्रतिग्रहात् ॥ ३९
तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप । C. 12. 7239 B. 12. 199. 41 K. 12. 197. 46

---

2. 4 B9 G3. 6 च; Ds1 (also as in text) यस्; D7 T1 G1 [अ]थ (for स). — c) Ś1 M1 परमः; K1 परमाः (for परम-). K1 प्रीताः. — After 33, D7 T G1. 3. 6 Kumbh. ed. ins.:

523* स्वकार्यनिर्भरा यूयं परोपद्रवहेतवः ।
भवन्तो लोकसामान्याः किमर्थं ब्रूत सत्तमाः ।
धर्म उवाच ।
वयमप्येवमव्यग्रैर्धातुराज्ञापुरःसरैः ।
चोदिता धावमाना वै कर्मभागमनुव्रताः ।
भीष्म उवाच ।

[ (L. 1) T2 -निर्भया (for -निर्भरा). — (L. 2) G1 लोकसंमान्यः (for °सामान्याः). G1 om. the ref. G3. 6 Kumbh. ed. यम (for धर्म). — (L. 3) Kumbh. ed. अत्युग्रा (for अव्यग्रैर्). Kumbh. ed. -पुरःसराः (for °सरैः). — (L. 4) T2 बोधिता (for चोदिता). T2 कर्मभावम् (for °भागम्). ]

34 For the sequence in K4, cf. v. l. 11. — b) G3 उपागताः.

35 For the sequence in K4, cf. v. l. 11. — a) Bo [आ]ह; G2 स (for तु). — b) K6 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 [अ]थ (for [अ]भि-). — d) K7 V1 D4–6. 9 T1 G1 M7 राजसत्तम.

36 For the sequence in K4, cf. v. l. 11. — a) K6. 7 Ds2 D4. 6. 8 सोप्यासनं; Da3. a4 स आसनं (for सोऽथासनं). — c) T2 ब्रह्मविद् (for अब्रवीद्). Da4 ब्रह्मणो (for ब्रा°). M5 प्रीतः (for वाक्यं). — d) D7 T1 G1. 3. 6 -संमितं (for -संविदम्).

37 For the sequence in K4, cf. v. l. 11. Before 37, Ds ins. ब्राह्मण उवाच. Ds1 reads 37–38 twice. — c) D4 श्वशक्त्या. B9 G2 [इ]ति (for [इ]ह). — d) Ds2 यद् (for तद्). K6 V1 Bo. 6–9 Dn1. n4 Ds D2. 3. 8 मां (for मे).

38 For the sequence in K4 and repetition in Ds1, cf. v. l. 11, 37. M5 इक्ष्वाकुः (for राजा). — b) K6 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds2 D2. 3. 8 यदा; B9 Ds1 सदा (for यदि). D4 -संस्थिताः; T2 -संज्ञितः. ❀ Cs: षट्कर्मसंस्थितः अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाधिकारः । ❀ — c) Ś1 K1. 2. 4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5. 6. 8 T1 G1–3. 6 ददानि; T2 तद्दास्ये (for ददामि). D7 T G1. 3. 6 M1. 5–7 किं तेद्य (for किंचित्ते). — d) K6 B7 Dn1. n4 D2. 3. 8 प्रथितं; Ds1 पार्थिवं; G1 प्राथ्यं तं (for प्रार्थितं). D7 T G1. 3. 6 M1. 6 ब्रवीतु; G2 M5. 7 ब्रवीहि (for वदस्व).

39 For the sequence in K4, cf. v. l. 11. — a) D7 T G1. 3. 6 द्विविधो ब्राह्मणो राजन्. — b) Ds2 त्रिविधः; G1 विविधः (for द्वि°). D5 मतः (for स्मृतः). Ds1 कर्म च त्रिविधं स्मृतं. — c) Da4 प्रवृत्तस्य (for °श्च). G1 निवृत्तिश्च (for °त्तश्च). Ś1 K1. 2. 4 Bo. 6 Da3 Dn1. n4 Ds D2–4. 8. 9 T2 प्रवृत्ता( B6 T2 °त्ति )श्च निवृत्ता( B6 T2 °त्ति )श्च. — d) D5 निवर्त्तो (for निवृत्तो). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8

C. 12. 7239 B. 12. 199. 41 K. 12. 197. 47 अहं न प्रतिगृह्णामि किमिष्टं किं ददानि ते ।
ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम् ॥ ४०

राजोवाच ।

क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् ।
प्रयच्छ युद्धमित्येवं वादिनः स्मो द्विजोत्तम ॥ ४१

ब्राह्मण उवाच ।

तुष्यसि त्वं स्वधर्मेण तथा तुष्टा वयं नृप ।
अन्योन्यस्योत्तरं नास्ति यदिष्टं तत्समाचर ॥ ४२

राजोवाच ।

स्वशक्त्याहं ददानीति त्वया पूर्वं प्रभाषितम् ।
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ॥ ४३

ब्राह्मण उवाच ।

युद्धं मम सदा वाणी याचतीति विकत्थसे ।
न च युद्धं मया सार्धं किमर्थं याचसे पुनः ॥ ४४

राजोवाच ।

वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः ।
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ॥ ४५

ब्राह्मण उवाच ।

सैवाद्यापि प्रतिज्ञा मे स्वशक्त्या किं प्रदीयताम् ।
ब्रूहि दास्यामि राजेन्द्र विभवे सति माचिरम् ॥ ४६

राजोवाच ।

यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया ।

---

[ऽ]हं; K7 lacuna (for ऽस्मि).

40 For the sequence in K4, cf. v. l. 11. — [a]) B6. 7. 8 (marg. as in text). 9 तेषां (for तेभ्यः). K2 दारानि (for दानानि). — [b]) K7 यैः (for ये). D6 ह्यतृप्ता (for प्रवृत्ता). — [c]) T2 अक्षं (for अहं). — [d]) K4. 6 V1 Bo Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T1 G1. 3. 6 M1. 5. 7 किं ददामि; K7 D4. 9 करवाणि (for किं ददानि). — T2 om. 40[cd]. — [e]) Ś1 K1. 2 तन् (for त्वं). D4 नृपतिश्रेष्ठं. — [f]) D4. 9 धारयामि (for साध°).

41 For the sequence in K4, cf. v. l. 11. T1 om. 41. — [b]) Dn4 देहामि (for देहीति). — [c]) B6 बुद्धम्; D5 G2 ब्रुद्धिम् (for युद्धम्). D3 इत्येव (for °वं). — [d]) Ś1 K1. 2. 4 G2 वादिनो मे (G2 °नोऽस्मि); V1 D6 °नः स्म; D7 T2 G1. 3 6 M1. 5–7 वादी चास्मि (for वादिनः स्मो). D4 M1 द्विजोत्तमः.

42 For the sequence in K4, cf. v. l. 11. D7 T G1. 3. 6 read 42–43 after 45. — [a]) T2 दुष्यसि; G2 अतुष्टस् (for तुष्यसि). — [b]) G3 यथा (for तथा). T2 पुनः (for नृप). — [c]) K4. 6. 7 V1 Bo Da3. a4 Dn1. n4 Ds D2–4. 6 [अं]तरं (for [उ]त्तरं).

43 For the sequence in K4, D7 T G1. 3. 6, cf. v. l. 11, 42. — [a]) Da4 अशक्तोहं (for स्वशक्त्याहं). T1 सं- (for [अ]हं). K7 Ds1 D3–5. 7. 9 ददामि (for °नि). — [b]) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 उदाहृतं; M5 प्रतिश्रुतं (for प्रभाषितम्). — [c]) K1. 2 G3 M1. 6 त्वा. K2 नीयतां (for दीयतां). — [d]) D5 [अ]र्थं- (for [अ]स्य).

44 For the sequence in K4, cf. v. l. 11. T1 om 44. — [a]) K7 D4 यदा; D9 सदा (for मम). Ś1 K1. 2. 4 ददानीति; K7 D4. 9 कामयसे (for सदा वाणी). — [b]) Ś1 (orig.) K2 वाचसे त्वं; Ś1 (*sup. lin.*) K1 याचसे त्वं; K4 वाचमेत्वं (sic); K6 यावती *; K7 D4. 9 याचसेन्यद्; M6. 7 याचे( M7 °च )तेति (for याचतीति). D6 विकत्थसि; G3. 6 पुनः पुनः (for विकत्थसे). — [c]) Ś1 K1. 2 D9 न च युक्तं (D9 शुद्धं); G2 तच्च युद्धं; G3. 6 विकत्थसे (for न च युद्धं). T2 साध्यं (for सार्धं). — [d]) K6 याचते (for °से).

45 For the sequence in K4, cf. v. l. 11. M5 om. 45. D2 om the ref. — [a]) G2 पार्श्वज्ञा (for वाग्वज्रा). K7 D9 ज्ञेयाः (for प्रोक्ताः). — [b]) K1 Ds1 बहु- (for बाहु-). — [c]) D8 नन्विदं (for तदिदं). — After 45, D7 T G1. 3. 6 read 42–43.

46 For the sequence in K4, cf. v. l. 11. M5 om. the ref. — [a]) D7 T1 G1. 3. 6 सेयमद्य (for सैवाद्यापि). G2 प्रतीका (for प्रतिज्ञा). — [b]) D7 T1 G1 सं- (for किं).

47 For the sequence in K4, cf. v. l. 11. — [a]) D7 G1 यद्यद् (for यत्तद्). G3. 6 पुण्यं; M7 पूजां (for पूर्णं). — [b]) K2. 4 D5 जपितं (for जप्यं वै). Da4 स्वया (for त्वया). G1 जप्याजप्यं जिता त्वया. — [d]) Ś1 K1. 2. 4 अपि (for यदि).

फलं प्राप्तं तत्प्रयच्छ मम दित्सुर्भवान्यदि ॥ ४७

ब्राह्मण उवाच ।

परमं गृह्यतां तस्य फलं यज्जपितं मया ।
अर्धं त्वमविचारेण फलं तस्य समाप्नुहि ॥ ४८

अथ वा सर्वमेवेह जप्यकं मामकं फलम् ।
राजन्प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि ॥ ४९

राजोवाच ।

कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया ।
स्वस्ति तेऽस्तु गमिष्यामि किं च तस्य फलं वद ॥ ५०

ब्राह्मण उवाच ।

फलप्राप्तिं न जानामि दत्तं यज्जपितं मया ।
अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः ॥ ५१

राजोवाच ।

अज्ञातमस्य धर्मस्य फलं मे किं करिष्यति ।
प्राप्नोतु तत्फलं विप्रो नाहमिच्छे ससंशयम् ॥ ५२

ब्राह्मण उवाच ।

नाददेऽपरवक्तव्यं दत्तं वाचा फलं मया ।
वाक्यं प्रमाणं राजर्षे ममापि तव चैव हि ॥ ५३ C. 12. 7254 B. 12. 199. 54 K. 12. 197. 59

---

48 For the sequence in K4, cf. v. l. 11. — [a]) K1 Da8 गुह्यतां (for गृ°). K7 D4–6. 9 तात (for तस्य). — [b]) K7 D4. 6. 9 यज्जप्यं; D5 यत्फलं (by transp.). D5 जपता (for जपितं). — [c]) D8 तम्; T2 G1 M5 तद् (for त्वम्). Ś1 K2 अपि चारेण; K1 अपि चार्धेण (for अविचारेण). — [d]) K4 Da3. a4 Dn4 फलं तस्य ह्यवाप्नुहि; K6. 7 D4. 6. 9 °स्समवाप्नुहि; D7 G1 फलं तस्यामवाप्नुहि.

49 [a]) K7 D5. 7 T G1. 3. 6 M1. 5–7 एवेदं (for °ह). — [b]) K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 7. 8 T G1–3. 6 M1. 5. 6 मामकं; K7 D4. 6 जपजं; D5 जाप्यकं; D9 जप्यस्य; M7 जापकं (for जप्यकं). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 7. 8 T G1–3. 6 M1. 5. 6 जाप(B7 Da4 °प्य)कं (for मामकं). — [c]) K6 कामं त्वां; K7 Da4 D4 काम त्वं (for कामं त्वं). — [d]) K7 D4. 9 यद्यभिप्रेतमिच्छसि.

50 [a]) D4 कृत्यं (for कृतं). D5 सर्वं हि (for सर्वेण). K7 D9 वै (for ते). — [b]) K7 D4. 9 लब्धं; B8. 9 Da4 जाप्यं; T G2. 3. 6 M1. 5–7 दत्तं (for जप्यं). Ś1 K1. 2. 4 जप्यं यज्जपितं त्व(K4 म)या. — [c]) Ds1 नमिष्यामि (for गमि°). — [d]) B8 (marg. as in text) किं चैतस्य; Ds2 किं त्वेतस्य; D7 T G1. 3. 6 M1. 5–7 किं तस्य च; G2 किंचिदस्य (for किं च तस्य).

51 [a]) G1 om. (hapl.) from फल up to the ref. in 53. K4. 7 फलं प्राप्तिं (for फलप्राप्तिं). — [b]) D7 T G3. 6 यद्दत्तं (by transp.); M7 यदेतज्. D5 चापि तन् (for जपितं).

52 G1 om. 52 (cf. v. 1* 51). Ds1 om. 52–53. — [b]) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2–5. 7–9 T G2. 3. 6 M1. 5. 6 किं मे (by transp.). — After 52[ab], Ś1 K1. 2. 4. 6 V1 (marg.) Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5–8 T G2. 3. 6 Kumbh. ed. ins.:

524* फलं ब्रवीषि धर्मस्य न चेज्जप्यकृतस्य माम् ।

[ D7 G2 भवेज् (for न चेज्). D7 T1 G2 -कृतं न (for -कृतस्य). ]

— [c]) Ś1 (*sup. lin.*) K1 G2 प्राप्नोमि (G2 °ति) तत्; K7 D4. 6. 9 प्राप्तुं त्वत्तः (for प्राप्नोतु तत्). Ś1 K1 कथं विप्र; K7 D4. 6. 7. 9 T फलं विप्रं (for फलं विप्रो). — [d]) G3. 6 इच्छामि (for इच्छे स-). T2 ह्यसंशयः; M1 ससंशयः (for °यम्).

53 Ds1 om. 53 (cf. v. l. 52). G1 om. the ref. (cf. v. l. 51). V1 reads 53[a]–56[b] on marg. — [a]) K1 [ऽ]परम्; D9 [ऽ]हं पर-; G2 न च (for ऽपर-). K1 अव्यक्तं; D7 T G1. 3. 6 M1. 5–7 -वित्तं वै; Cv Kumbh. ed. -दत्तं वै (for -वक्तव्यं). — [b]) K1 वृत्तं; K7 दत्त- (for दत्तं). Ś1 K1. 2. 4 वास्य; V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3 चास्य; D8 तस्य (for वाचा). K7 B6 (marg.) D4–6. 9 कृ(D4 क्ष)तं (for फलं). Ds2 यथा; G1 मम (for मया). — G2 om. (hapl.) 53[c]–55[b]. — [c]) Ś1 K1. 2 वाक्च; D4 वाक्य- (for वाक्यं). — [d]) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2–6. 8. 9 ममाद्य (for ममापि). D7 T G1. 3. 6 M5 तवाद्य (M5 °पि) मम चैव ह (D7 हि); M1. 6. 7 मम तुभ्यं च भाषितं. — After 53, Kumbh. ed. ins.:

525* सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदेव ददानीति त्रीण्येतानि सकृत्सकृत् ।

[ = var. 3. 278. 25; Manu, 9. 47. ]

C. 12. 7255 B. 12. 199. 55 K. 12. 197. 61 नाभिसंधिर्मया जप्ये कृतपूर्वः कथंचन ।
जप्यस्य राजशार्दूल कथं ज्ञास्याम्यहं फलम् ॥ ५४
ददस्वेति त्वया चोक्तं ददामीति तथा मया ।
न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ॥ ५५
अथैवं वदतो मेऽद्य वचनं न करिष्यसि ।
महानधर्मो भविता तव राजन्मृषाकृतः ॥ ५६
न युक्तं तु मृषा वाणी त्वया वक्तुमरिंदम ।
तथा मयाप्यभ्यधिकं मृषा वक्तुं न शक्यते ॥ ५७
संश्रुतं च मया पूर्वं ददानीत्यविचारितम् ।
तद्गृहीष्वाविचारेण यदि सत्ये स्थितो भवान् ॥ ५८
इहागम्य हि मां राजञ्जाप्यं फलमयाचिथाः ।
तन्मन्निसृष्टं गृहीष्व भव सत्ये स्थिरोऽपि च ॥ ५९
नायं लोकोऽस्ति न परो न च पूर्वान्स तारयेत् ।
कुत एवावरान्राजन्मृषावादपरायणः ॥ ६०
न यज्ञाध्ययने दानं नियमास्तारयन्ति हि ।
तथा सत्यं परे लोके यथा वै पुरुषर्षभ ॥ ६१
तपांसि यानि चीर्णानि चरिष्यसि च यत्तपः ।
समाः शतैः सहस्रैश्च तत्सत्यान्न विशिष्यते ॥ ६२

54 G2 om. 54 (cf. v. l. 53). V1 reads 54 on marg. — b) K1 T2 कृतपूर्वा (for °पूर्वः). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1 (marg.). n4 Ds D2–6. 8. 9 M1. 5–7 कदाचन (for कथं°). — c) D6. 7 T1 G1. 3. 6 जपस्य; M1. 6. 7 जपता (for जप्यस्य). — d) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 वेत्स्यामि (for ज्ञास्यामि).

55 G2 om. 55ab (cf. v. l. 53). V1 reads 55 on marg. — a) Ś1 K1. 2 प्रोक्तं (for चोक्तं). — b) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 T2 G1 M1. 5–7 ददानि (for °मि). K6 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 8 M5 transp. तथा and मया. — c) D5 वाचा (for वाचं). Da4 द्रवयिष्यामि; D5 पूज° (for दूष°). — d) G3. 6 स्थितो (for स्थिरो). G2 [ऽ]भवत् (for भव).

56 V1 reads 56ab on marg. — a) K6. 7 अथैव; Dn1 तथैवं (for अ°). K7 Ds2 D4. 9 ददतो; Da4 वदंतो (for वदतो). — b) G2 किं (for न). K4 Dn1 करिष्यति (for °ष्यसि). — c) D6 स हीनधर्मो (for महान°).

57 a) V1 Bo. 6–9 Da3. a4 Ds D3. 5. 8 G2 मृषावाणीं; D7 T G1. 3. 6 M1. 5–7 °वाक्यं (for मृषा वाणी). — b) G3 अरिंदमः. — c) D7 त्वया (for तथा). T2 च; G6 वा (for [अ]पि). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 5. 6. 8 अभिहितं; D7 T1 G1. 2 ह्यधिकं (for अभ्यधिकं). — d) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 T G1–3. 6 M1. 5–7 मिथ्या (for मृषा). V1 Da3 Dn1. n4 कर्तुं (for वक्तुं).

58 a) K4 D4 सश्रुतं (for सं°). K7 lacuna; M5 तु (for च). — b) K7 Da4 D4. 7. 9 T1 G1–3. 6 ददामि (for °नि). Ds1 अविवारितं. — d) D6 सद्यो (for सत्ये). K2. 4 M1 स्थिरो (for स्थितो).

59 a) B6 (marg. as in text) इत्यागम्य; T2 इहागत्य; G1 यथागम्य (for इहागम्य). Ś1 K1. 2 हि मा राजन्; D7 T G1–3. 6 M1. 7 महाराज. — b) Ś1 K1. 2 जप्ये; V1 Bo D6 T2 जप्यं (for जाप्यं). Ś1 K1. 2 अयाचि वा; K7 Ds1 D7 T G1. 3. 6 M1. 5–7 अयाचथाः (K7 °चिता; Ds1 °विथाः) (for °चिथाः). — c) K4. 6. 7 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 G3. 6 तन्मे; B7 तस्मै; T2 तस्मिन् (for तन्मन्-). — d) D4 स्थिरा; D7 T1 G1. 3. 6 स्थितो (for स्थिरो). D9 वै (for च). B7. 9 भव सत्यः स्थिरो भव.

60 a) Ś1 K1. 2 [ऽ]स्य (for ऽस्ति). — c) V1 D7 T G1–3. 6 M1. 5–7 [अ]परान् (for [अ]व°). K6. 7 Bo. 6–9 Da3 Dn1. n4 Ds D2–6. 8. 9 कुत एव जनिष्यांस्तु.

61 a) D7 यज्ञाध्ययनं (for °ध्ययने). Da3 om. from दानं up to तथा (in 61c). K6 V1 Bo. 6. 7. 8 (marg.). 9 Da4 Dn1. n4 Ds D2. 3. 5. 6. 8 M1. 5–7 न यज्ञफल(M5 °जप)दानानि. — b) K7 D9 न धर्मास् (for नियमास्). K7 B6 D4–6. 9 M1. 5–7 तं (for हि). — c) K4. 6 V1 Bo. 6–9 Da4 Dn1. n4 Ds D2. 3. 5. 6. 8 G2 M1. 5–7 यथा (for तथा). Ś1 K1. 2 परं; K4 D4 पर-; D2. 3 परो (for परे). — d) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 M1. 6 तथेह; K7 D4. 9 यथेह; G2 M5. 7 तथा वै (for य°). Ś1 (*sup. lin.* as in text) भरतर्षभ (for पुरुष°).

62 a) V1 Cp अचारीश्च (for चीर्णानि). — b) K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 चरिष्यंति (B6 °ते); Cp करिष्यसि (for चरिष्यसि). K2 om. च. — Da3 repeats 62cd after 67a. — c) K6 Bo. 6. 7.

सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः ।
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ॥ ६३
सत्यं वेदेषु जागर्ति फलं सत्ये परं स्मृतम् ।
सत्याद्धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ ६४
सत्यं वेदास्तथाङ्गानि सत्यं यज्ञस्तथा विधिः ।
व्रतचर्यास्तथा सत्यमोंकारः सत्यमेव च ॥ ६५
प्राणिनां जननं सत्यं सत्यं संततिरेव च ।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥ ६६
सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः ।
सत्यं यज्ञस्तपो वेदाः स्तोभा मन्त्राः सरस्वती ॥ ६७
तुलामारोपितो धर्मः सत्यं चैवेति नः श्रुतम् ।
समां कक्षां धारयतो यतः सत्यं ततोऽधिकम् ॥ ६८
यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्धते ।
किमर्थमनृतं कर्म कर्तुं राजंस्त्वमिच्छसि ॥ ६९ C. 12. 7270 B. 12. 199. 70 K. 12. 197. 76

8 (marg. as in text). 9 Da3 (first time). a4 Dn1. n4 Ds2 D2. 3. 5. 8 शतैः (Da4 °रैः) शत-; Ds1 D6 समाः शत-; M7 समशतैः (for समाः शतैः). B8 (marg. as in text) Da3 (second time). a4 तु (for च). — Ś1 K1 om. 62$^{d}$–64$^{c}$. — $^{d}$) K4. 6 Bo. 6. 7. 8 (marg. as in text). 9 Da3 (first time). a4 Dn1. n4 Ds D2. 3. 8 तैः (for तत्). B8 (marg. as in text) सत्यं (for सत्यान्).

63 Ś1 K1 om. 63 (cf. v. l. 62). K2. 4 om. (hapl.) 63$^{ab}$. — $^{a}$) D7 T G1–3. 6 M1. 5–7 Kumbh. ed. एकं परं (for एकाक्षरं). — $^{b}$) D7 T G1–3. 6 M1. 5–7 Kumbh. ed. एकं परं (for एकाक्षरं). — $^{c}$) K2. 4 Da3 D7 T G1–3. 6 M1. 5–7 Kumbh. ed. एकं परो (for एकाक्षरो). — $^{d}$) K3 Da3 D7 T G1–3. 6 M1. 5–7 Kumbh. ed. एकं परं (for एकाक्षरं).

64 Ś1 K1 om. 64$^{abc}$ (cf. v. l. 62). — $^{a}$) V1 B6 (marg.). 7. 8 D7 T1 G1–3. 6 M1. 5–7 देवेषु (for वेदेषु). — $^{b}$) K6 सत्यं (for सत्ये). G3 श्रुतं (for स्मृतम्). — $^{c}$) K2. 4. 7 V1 D4. 7. 9 T G1–3. 6 M1. 5–7 तपो धर्मो (for सत्याद्धर्मो). D6 तपो धर्माश्रमाश्चैव. — $^{d}$) Ds सत्ये सर्वं (by transp.); D6 M1 सत्यं सत्ये. D6 च तिष्ठति.

65 K7 D4. 9 transp. 65$^{ab}$ and 65$^{cd}$. — $^{a}$) Da3 सत्ये; G1 सत्य- (for सत्यं). — $^{b}$) K2. 4 D7 T G1–3. 6 यज्ञास; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 5. 8 M1. 5. 6 विद्यास् (for यज्ञस्). V1 D5 तथाविधि; D7 T1 G1 तथाविधाः. — $^{c}$) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M1. 6. 7 व्रतचर्या (for °चर्यास्). D9 सत्त्वम् (for सत्यम्). — $^{d}$) Ś1 K1. 2. 4 एव हि; Ds उच्यते (for एव च). K7 D4. 6. 9 ओंकारश्च तथाविधः; D5 °रस्य तथा विधिः. — After 65, K4 reads 11–48.

66 $^{b}$) D1 om. सत्यं. B8 (marg. as in text) G3 संनतिर् (for संततिर्).

67 $^{a}$) Ś1 K1. 2. 4 सत्येनाग्निर्दहति च; K7 D4. 6. 9 °नाग्निर्विदहति. — After 67$^{a}$, Da3 repeats 62$^{cd}$. — $^{b}$) D7 T G1–3. 6 M1. 5–7 सत्ये स्वर्गः (G1 M1 °र्गं) (by transp.). Da4 M1. 6 प्रतिष्ठितं. — $^{c}$) D7 T G1–3. 6 M1. 5–7 दानं (for सत्यं). K4. 7 V1 B8 (marg.) D2–4. 6. 7. 9 T G1. 3. 6 M1. 6 यज्ञास् (for यज्ञस्). Ś1 K1. 2. 4 V1 तपो योगः (V1 देवाः); K6 Bo. 6–9 Da4 Ds तथा चैव; D5–8 T G1–3. 6 M1. 5–7 तथा वेदाः (for तपो वेदाः). — $^{d}$) K1. 2. 7 Dn4 Csp (glossed as सामवेदः) स्तोता; Da4 D8 स्तोत्रा; Ds स्तोत्रं; D6 G3. 6 स्तोमा; D7 T G1. 2 सोमा; Cv स्तोभ- (for स्तोभा). ❀ Ca: स्तोभाः श्रुतौ निरर्थका गीतिपूरणार्थाः शब्दाः हाहाहूहू इत्येवमादयः । ❀ ❀ Cs: सरस्वतीशब्देन वेदातिरिक्तविद्यास्थानानि लक्ष्यन्ते । ❀

68 $^{a}$) M5 तुल्यम् (for तुलाम्). Dn4 धर्मे (for धर्मः). — $^{c}$) K1 D7 T G3. 6 M5–7 समां क (K1 का)-क्ष्यां; K4 समकाक्षं; K6 Da3. a4 Cp समकक्षं; K7 Bo. 6–9 Dn1. n4 Ds D2. 3. 5. 6. 8 Cpp समकक्षां; D4. 9 समं कक्षां; G1 समं कक्ष्यां; G2 समं कक्ष्यं (for समां कक्षां). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 तु (D6 तो) लयतो; T2 G1. 3. 6 M1. 5 धारयतोर् (for °यतो). ❀ Cp: समकक्षामिति पाठे तुलामित्यस्य विशेषणम् । ❀

69 $^{a}$) G6 ततो (for यतो). — $^{b}$) M7 वर्तते (for वर्धते). — $^{c}$) K1 reads the portion from कर्म up to नृतं (in 70$^{c}$) twice. — $^{d}$) V1 अर्हसि (for इच्छसि).

70 For repetition in K1, cf. v. l. 69. — $^{a}$) B7 स्थिर-; G1 स्वयं (for स्थिरं). D5 भावे (for भावं). D6 सत्ये भव स्थिरीभावे. — $^{b}$) D7 T G1–3. 6 M5 अनृते (for °तं). K7 D4. 5. 9 वद (D5 °दः); D6 वदीः (for कृथाः). — $^{c}$) Ś1 K1 (both times). 2 D7 T1 G1–3. 6

C. 12. 7271
B. 12. 199. 71
K. 12. 197. 77

सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः ।
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ॥ ७०
यदि जप्यफलं दत्तं मया नेषिष्यसे नृप ।
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ॥ ७१
संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति ।
उभावानृतिकावेतौ न मृषा कर्तुमर्हसि ॥ ७२

राजोवाच ।

योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज ।
दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम् ॥ ७३

ब्राह्मण उवाच ।

न छन्दयामि ते राजन्नापि ते गृहमाव्रजम् ।
इहागम्य तु याचित्वा न गृह्णीषे पुनः कथम् ॥ ७४

धर्म उवाच ।

अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम् ।
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ॥ ७५

स्वर्ग उवाच ।

स्वर्गं मा विद्धि राजेन्द्र रूपिणं स्वयमागतम् ।
अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम् ॥ ७६

राजोवाच ।

कृतं स्वर्गेण मे कार्यं गच्छ स्वर्ग यथासुखम् ।
विप्रो यदीच्छते दातुं प्रतीच्छतु च मे धनम् ॥ ७७

ब्राह्मण उवाच ।

बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः ।
निवृत्तिलक्षणं धर्ममुपासे संहितां जपन् ॥ ७८

---

तस्मात्त्वम्; K7 D4.9 अस्मात्त्वम्; D5.6 त(D6 अ)थैतद् (for कस्मात्त्वम्). K6 Bo.6.8.9 Da3.a4 Ds D3.8 भावं (for वाक्यं). —[d]) Ds1 कुरुते (for °षे). K6 [ऽ]श्रुतं; Ds [ऽ]भृशं; D6 [ऽ]श्रुते (for ऽशुभम्).

71 [a]) Da4 G3 जप्यं फलं; D7 T G1 जाप्यफलं (for जप्य°). G2 व्यर्थं (for दत्तं). —[b]) Ds D5 यदा; D6 सदा (for मया). K6 नेक्षिष्यसे; K7 D4–7.9 T G1.2 M1.5–7 नेच्छसि चेन् (K7 D4.9 भो; D6 मे; T2 M1.5–7 वै); V1 Bo.6–9 Da3.a4 Dn4 नैषि(Da4 °च्छि)ष्यसे; Dn1 Ds नेशिष्यसे (for नेषि°). —[c]) K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 धर्मेभ्यः सं· (for स्वधर्मेभ्यः).

72 [a]) K7 D9 संश्रुतं; G1 संश्रित्य; G3 संस्तुत्य (for संश्रुत्य). K6 [अ]दित्सेत; D7 T1 G1–3.6 दित्सेत्तु (for °त). —[b]) Ds1 D7 नेच्छसि (for °ति). —[c]) Ś1 G1 अनृतकाव्; K2.7 D4.6.7.9 T1 G2.3.6 M1.6 अनृति°; D5 आनृतकाव् (for आनृतिकाव्). —[d]) V1 D4.5.7.9 M1.6.7 वक्तुम् (for कर्तुम्).

73 [d]) M7 गृह्णीयाद् (for °यां).

74 [a]) ❀ Cn: न छन्दयामि प्रतिगृह्णीष्वेति न प्रार्थितवानस्मि । ❀ —[b]) K1.2 G6 [अ]पि (for नापि). Ś1 K1.2.4 आव्रजन्; V1 आगमं; B9 D8 (marg.) आगतं (for आव्रजम्). —[c]) D5.6 उप(D6 °पा)गम्य; D7 T G1–3.6 इहागत्य (for °गम्य). D4 नु (for तु). —[d]) D7 G1 गृह्णीते (for °षे).

75 [a]) D5.8 अविवादस्तु; G2 °द्वेष्वस्तु (for °दोऽस्तु). ❀ Cn: अविवाद इति । राहूपरागादौ प्रतिग्रहमनिच्छति ब्राह्मणे यत्प्रकारान्तरेण दानं तद्दातुः फलावहं प्रतिग्रहीतुश्च न दोषकरमिति भावः । तथा च स्मृतिः — मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् । इति । ❀ —[b]) K1.2 Dn1 वित्त; V1 Bo विद्धि (for वित्तं). K7 D4–7.9 T G1–3.6 M1.5–7 धर्मं मां (K7 मा) वित्तमा(D6 °द्धि आ)गतं. —[c]) V1 reads from द्विजो up to वादोऽस्तु (in 76[c]) on marg. —[d]) K7 D4.9 दत्तफलेन (for सत्य°).

76 V1 reads up to वादोऽस्तु on marg. D7 T G1–3.6 om. the ref. —[c]) T1 om. ऽस्तु. —[d]) Ś1 K1.2 सत्यफलौ (for तुल्य°).

77 [b]) B9 स्वर्गं गच्छ (by transp.); D7 T1 G1.3.6 गच्छ स्वर्गं. K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.6.8 G2 यथागतं (for °सुखम्). —[c]) K7 V1 D7 T2 G1.2 यदिच्छते (K7 °ति); D4.6.9 यदीच्छति (for °च्छते). K6 Bo.6.7.8 (marg. as in text).9 Da3.a4 Dn1.n4 Ds D2.3.5.8 Cp गंतुं; K7 D4.6.9 प्राप्तुं; Cpp दातुं (as in text). —[d]) V1 प्रतीगृह्य (for °च्छतु). K4 स (for च). G6 धनः; M5 फलं (for धनम्). K6.7 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–9 चीर्णं गृह्णातु मे फलं.

78 [a]) T1 बाले; T2 स्वास्थ्ये (for बाल्ये). V1 बाल्यां वा यदि वाज्ञानान्. —[b]) D7 G1 हस्तं (for

C. 12. 7866
B. 12. 217. 25
K 12. 219 32

यथागमं च तत्सर्वं बुद्ध्या तन्नैव बुध्यते ।
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः ।
युक्तो धारणया कश्चित्सत्तां केचिदुपासते ॥ २४
अभ्यस्यन्ति परं देवं विद्युत्संशब्दिताक्षरम् ।
अन्तकाले ह्युपासन्नास्तपसा दग्धकिल्बिषाः ॥ २५
सर्वे एते महात्मानो गच्छन्ति परमां गतिम् ।
सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा ॥ २६
देहं तु परमं विद्याद्विमुक्तमपरिग्रहम् ।
अन्तरिक्षादन्यतरं धारणासक्तमानसम् ॥ २७
मर्त्यलोकाद्विमुच्यन्ते विद्यासंयुक्तमानसाः ।
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् ॥ २८
कषायवर्जितं ज्ञानं येषामुत्पद्यतेऽचलम् ।

G1-3.6 M1.5-7 -चेतसः (for -मानसाः). — [e]) Bo.6-9 Da4 Dn4 Ds D2.3.5.6 Cs ह्रसमानाश्च (for ध्वंस°). ❀ Cn: ध्वंसमानाः च्युताः त्यक्तान्नमयकोशाः ॥ Cs: ह्रसमाना निष्क्रामन्तः । ❀ — [f]) K2.6 नानुपासते; Ds2 तमु°; D7 T G1-3.6 M1.5-7 तदु° (for तानु°).

24 [a]) B9 यथाकामं; D7 °गतश्च; G1.2 °गतं (for °गमं). K6 गंतव्यं; Bo.7.8 (marg.) Da3.a4 Ds2 D2.3.6 मत्वा वै; B6.9 Dn1.n4 Ds1 D5.8 Cpp गत्वा वै (for तत्सर्वं). — [b]) D5 बुध्यं; M7 बुद्धा (for बुद्ध्या). K4 Da4 Dn1.n4 Ds D2.3 तत्रैव; K6 ते नैव; D5 तं नैव; D7 T1 G1-3.6 तत्राव- (for तन्नैव). M7 बुध्यति. — [c]) D2.5 देहांते. — [d]) K7 Dn4 भावितात्म- (for °तात्मा). K4.6 Bo.8 (marg.) Dn1.n4 Ds1 D2.3.6.8 Cp निराश्रयं; D7 ह्यथाश्रयः; T1 G1-3.6 ह्यधःश्रयः (for निराश्रयः). ❀ Cp: निराश्रय इति पाठे कामार्थाद्यनाश्रयः । ❀ — D7 T G1-3.6 om. 24[ef]. — [e]) K6 युक्त्या; V1 Dn1.n4 Ds D2.3 युक्तं; D3 युक्त- (for युक्तो). K6 Dn1.n4 D2.3.5.8 सम्यक् (for कश्चित्). — [f]) K1 सुतां; K4 Bo Da3.a4 M1 सतां; K6 संतः; V1 B6.7.8 (marg. as in text).9 Dn1.n4 Ds D2.8 Cp सतः; D3 ततः; D5 अतः; T2 सक्तां (for सत्तां). V1 Bo.6-9 Da4 Ds D3 कश्चिद् (for केचिद्). ❀ Cp: सत इति पाठे सज्जातत्वात्सदभिन्नतया सर्वे पदार्थाः सन्त एवेति परिणाममतमवलम्ब्योपासत इत्यर्थः । ❀

25 [a]) B6-9 अभ्यस्यंते; Dn4 क्रोधस्यंति (sic); D5 अप्यमेरु (sic); T2 अभ्यसंति; G2 °स्यंत; G3.6 अभिसृत्य; M1.7 अभ्यसंते (for °स्यन्ति). V1 Bo.7.8 D3.4 G2 परे; B9 परो; D4 पदं; D7 T G1 M5.6 [अ]परे (for परं). B6.8 (marg. as in text).9 देहं; B7 चैव; D7 T1 G1.2 चैवं; M5.6 वेदं (for देवं). — [b]) K7 Ds D7 T G1.2 M1.5-7 विद्या-; D9 विद्यात् (for विद्युत्-). G3.6 विद्यया शब्दिताक्षयं. — [c]) D8 अत्र (for अन्त-). K6 V1 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 ह्युपासंते; K7 D4 M6 °संत; D7 T G1-3.6 M1.7 [s]प्युपासंतस् (D7 G1 °तं; G2 °ते; G3.6 °त); M5 ह्युपासंतस् (for °सन्नास्). — [d]) K6.7 D4.9 कल्मषाः (for -किल्बिषाः).

26 [a]) B7 एव (for एते). — V1 reads 26[e]-28[d] on marg. — [c]) K7 D4.9 शूक्ष्मं (for सूक्ष्मं). — [d]) K6 corrupt; K7 अवेक्षे; Da3 अवेक्ष्येत्; D5 अवेक्ष्यं (for °क्षेत्).

27 V1 reads 27 on marg. 7[ab] is damaged in B7. — [a]) Ś1 K1.2.4 वेद्यं तु; Dn1.n4 Cn देहांतं; M5.7 देहे तु (for देहं तु). D7 T G1-3.6 Cp चरमं (for प°). T2 विंद्याद् (for विद्याद्). ❀ Cn: देहान्तं अव्यक्तलयाधिष्ठानम् । देहं तु इति पाठे अव्यक्तमेव ॥ Cp: देहं...विमुक्तं जीवन्मुक्तम् । ❀ ❀ Cp: चरमं चरमकालभवम् । ...... । परममिति पाठे साधकतमम् । ❀ — [b]) Ds1 विरक्तम् (for विमुक्तम्). B8 (marg. as in text).9 Da3.a4 D5 विपरिग्रहात्. — [c]) K7 Bo.6-9 Ds1 अंतरीक्षाद् (for °रिक्षाद्). Ś1 K1.2.4 अन्यतमं (for °तरं). ❀ Ca: अन्तरिक्षादन्यतरम्, आकाशवदवस्थितम् ॥ Cn: अन्तरिक्षं हार्दाकाशः । तमारभ्यान्यतरं ईशं सूत्रात्मानं वा । ❀ — [d]) V1 -मानसः; D7 T G1-3.6 M1.5-7 -चेतसः (M6 °सा; M7 °सं) (for -मानसम्).

28 V1 reads 28 on marg. — [b]) K6.7 V1 Bo.6-9 Dn1.n4 Ds D2-9 T1 G1-3.6 M6.7 -संसक्त-; Da4 -संस्कृत-; T2 -संसिक्त- (for -संयुक्त-). V1 Bo.6-9 Da3.a4 Dn1.n4 D2.3.6.8 G1 -चेतसः (Dn4 °सं; G1 °सा) (for -मानसाः). — [d]) Ds D7 T G1-3.6 ते यांति परमां गतिं. — After 28, V1 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 T G3.6 M1.5-7 Ca.n.p.s ins.:

610* एवमेकायनं धर्ममाहुर्वेदविदो जनाः ।
यथाज्ञानमुपासन्तः सर्वे यान्ति परां गतिम् ।

[(L. 1) G3.6 एकांतिकं (for एकायनं). D5 T1 एकमेवायनं धर्मम् (for the prior half). T G3.6 M1.5-7 धर्मविदो (for वेद°). ❀ Cp: एकायनम्, अपुनरावर्तकम् । ❀ — (L. 2) B8 (marg.) उपासन्ना; Da4 °संते (for °सन्तः).]

ते यान्ति परमाँल्लोकान्विशुध्यन्तो यथाबलम् ॥ २९
भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम् ।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ॥ ३०
ज्ञात्वात्मस्थं हरिं चैव निवर्तन्ते न तेऽव्ययाः ।
प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ॥ ३१
एतावदेतद्विज्ञानमेतदस्ति च नास्ति च ।
तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ॥ ३२
बिसतन्तुर्यथैवायमन्तस्थः सर्वतो बिसे ।
तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा ॥ ३३
सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः ।
तद्वत्संसारसूत्रं हि तृष्णासूच्या निबध्यते ॥ ३४
विकारं प्रकृतिं चैव पुरुषं च सनातनम् ।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥ ३५
प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम् ।
भूतानामनुकम्पार्थं जगाद जगतो हितम् ॥ ३६ C. 12. 7880 B. 12. 217. 38 K. 12. 219. 46

इति श्रीमहाभारते शान्तिपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

---

29 a) G3. 6 कषायवर्जितज्ञानं. — b) T2 एषाम् (for येषाम्). K6. 7 V1 B6 (marg.). 8 Da3. a4 D4. 7. 9 T G1–3. 6 M1. 5–7 [ऽ]मलं (for ऽचलम्). — c) K6. 7 Bo D5 यांति तेपि (hypermetric); D4. 9 यांति ते (by transp.). K4 V1 B6–9 Da3. a4 Dn1. n4 Ds D2–4. 6–8 T G1–3. 6 M1. 5–7 यांति तेपि (B8 Da3. a4 तेपि यांति) पराँल्लोकान्. — d) K1 V1 विशुध्यंते; K4 Dn1. n4 Ds D2. 3. 5. 6. 8 विमुच्यंते (K4 °तो) (for विशुध्यन्तो). Bo. 6–9 (B6. 8 marg. as in text) Cpp -फलं (for -बलम्).

30 ab) D7 T1 G1–3. 6 इमं (for अजं). K6. 7 D4 5. 9 transp. दिव्यं and विष्णुम्. M1. 7 अव्यय- (for अव्यक्त-). Ś1 K1. 2. 4 D5 -संज्ञकं (for -संज्ञितम्). — c) Ś1 K1. 2 तृप्ता ये; K6 D5 सिद्धा ये; K7 D4. 9 तृष्णांते; D8 ते शुद्धा (for शुद्धा ये).

31 a) D7 [आ]त्मानं (for [आ]त्मस्थं). D7 T G1–3. 6 M1. 5–7 परं (for हरिं). K7 D4. 9 देवं (for चैव). — b) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 Cs न निवर्तंति ते(Ds1 ये)ऽव्ययाः (K7 D4. 5. 9 °यात्). — c) Ś1 K1. 2 ते (for तत्). — d) Bo ब्रह्मम् (sic) (for ऽक्षरम्).

32 a) K7 Ds M7 एव (for एतद्). — b) V1 D4. 5. 9 transp. च and न. ❀ Ca: अस्ति सत्तया निरुच्यते । एतदेव च नास्ति अन्यव्यावृत्तिमुखेन अस्थूलमनण्वित्यादिना वेदान्तेषूच्यते ॥ Cn: अस्ति च नास्ति चेत्यनिर्वचनीयमित्युक्तम् ॥ Cs (also Ca): ईश्वरानुगृहीतानामस्ति ततोऽन्येषां नास्ति । ❀ — c) K7 D9 -वशं; Ds2 T2 M7 -बंधं (for -बद्धं).

33 a) K4. 7 Da3. a4 Ds1 D4. 9 बिश-; B9 बिष- (for बिस-). — b) K7 D4. 9 अंततः (for अन्तस्थः). D7 T G1–3. 6 M1. 5–7 संततो (D7 G1. 2 °ते) (for सर्वतो). K7 V1 Da4 D4. 5. 9 वि(Da4 बि)शेत्; B6 Da3 बिशे (for बिसे). — c) K6 अनाद्योयं (for अनाद्यन्तस्). — d) T2 तदा (for तथा).

34 a) K7 D4. 9 शूच्या; G2 सूर्यां (for सूच्या). G1 सूच्यं (for सूत्रं). Dn1 वस्त्रं. — b) K7 संचारयति. Bo वापकः; B9 सायकः; T2 यावकः; G2 वाचकः (for वायकः). — c) K6. 7 D4. 5. 9 च (for हि). K1 तत्सर्वं सारसूत्रं हि. — d) K7 -शोच्या; D4. 9 -शूच्या (for -सूच्या). K7 निबोध्यते; M7 (*sup. lin.*) [अ]नया नयेत् (for निबध्यते). — After 34, Kumbh. ed. ins.:

611* इतस्ततः समाहृत्य रूपं निर्वर्तयिष्यति ।

35 a) Ds1 प्रकृतिश्च (for °कृतिं). — c) Dn4 विजानीयात् (for °नाति). — d) Ś1 K1. 2. 6. 7 D4. 9 वितृप्तो (for °तृष्णो). D4 om. from विमुच्यते up to जगतो (in 36d).

36 D4 om. up to जगतो (cf. v. l. 35). — a) Ds1 प्रकाशो (for °शं). K7 एतम् (for एतद्). B6. 7. 8 (marg. as in text). 9 Da3 प्रकाशकं तु भूतानां. — b) B6. 7. 8 (marg. as in text). 9 Da3 विष्णुर् (for ऋषिर्). — c) Ds D5 T G1–3. 6 M5–7 अनुकंपार्थं (for °कम्पार्थं). D7 भूतानुकंपार्थं तत्त्व. — d) Da4 परमो (for जगतो). Bo Da3. a4 Dn1. n4 D2–4. 6. 8 गतिः (for हितम्).

Colophon. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 6–9 G1. 2. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–8 Da3. a4 Dn1 Ds D2–6. 9 वार्ष्णेयाध्यात्मं समाप्तं; B9

# २११

C. 12. 7881
B. 12. 218. 1
K. 12. 220. 1

युधिष्ठिर उवाच ।
केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः ।
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य मानुषान् ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
येन वृत्तेन वृत्तज्ञः स जगाम महत्सुखम् ॥ २
जनको जनदेवस्तु मिथिलायां जनाधिपः ।
और्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ॥ ३
तस्य स्म शतमाचार्या वसन्ति सततं गृहे ।
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः ॥ ४
स तेषां प्रेत्यभावे च प्रेत्यजातौ विनिश्चये ।
आगमस्थः स भूयिष्ठमात्मतत्त्वे न तुष्यति ॥ ५
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः ।
परिधावन्महीं कृत्स्नां जगाम मिथिलामपि ॥ ६

---

वार्ष्णेयाध्यात्मे; D7 T1 G1.2 मुमुक्षू(G2 °क्षो)पदेशः (D7 G1 adding वार्ष्णेयाध्यात्मं समाप्तं [G1 °प्तः]); D8 वार्ष्णेयाध्यात्मोध्यायः संपूर्णमस्तु; T2 मुक्त्युपदेशः; G3 वार्ष्णेयाध्यायः समाप्तः । वार्ष्णेयाध्यात्मः समाप्तः; G6 अन्यापदेशः …… । वार्ष्णेयाध्यायः समाप्तः; M1.7 वितृष्णा-(M1 °ष्णु)मुक्त्युपदेशः । वार्ष्णेयाध्यात्मं समाप्तं; M5.6 वार्ष्णेयाध्यात्मे तत्त्वचतुष्टयवेदनं । समाप्तं च वार्ष्णेयाध्यात्मं. — *Adhy. no.* (figures, words or both): B7 Dn4 43; Dn1 D7 T1 G1.3.6 M5 44; D6.8 45; G2 58; M1.6 42. — *Śloka no.:* Da4 Dn4 D8 39; Dn1 40; D6 45.

## 211

☞ 12. 211–212 are substantially the same as the Nārada-Sanaṁdana dialogue given in the Bṛhannāradīya Purāṇa, adhy. 45, st. 5–87. The variants from the Purāṇa are listed in Appendix II (No. 2).

1 D6 om. the ref. — a) V1 B0.6–8 Da3.a4 Dn1.n4 Ds D2–4.6.8.9 M1.5–7 वृत्तज्ञ (for °ज्ञो). — K1 om. (hapl.) $1^{bc}$. — b) K7 मिथिलाधिप; Ds2 D5 G1 °लापतिः; G2 °लापकः (for °लाधिपः). — G1 om. (hapl.) $1^{c}$–$3^{b}$. — c) M5 मोक्ष- (for मोक्षं). K4.6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.6.8 M7 मोक्षज्ञो (for धर्मज्ञो). — d) K1 मानुषं; D7 T G2.3.6 M5–7 बुद्धिमान् (for मानुषान्).

2 G1 om. 2 (cf. v. l. 1). — c) K6 B9 D5 धर्मज्ञः (for वृत्तज्ञः). — d) V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 Ca जगाम सु- (for स जगाम). K6 भोगानुत्सृज्य मानुषान् (= $1^{d}$). ❀ Cp: सुखं मोक्षं, मोक्षस्य ब्रह्मसुखात्मकत्वात् । यो वै भूमा तत्सुखमिति श्रुतेः । ❀

3 G1 om. $3^{ab}$ (cf. v. l. 1). — a) G3 om. (hapl.) जनको. ❀ Cn: जनकवंश्यः नाम्ना जनदेवः ॥ Cs: जनदेवनामा । ❀ — b) K6 G3.6 जनाधिप. — c) K7 Da4 D4.5.7.9 ऊर्ध्व- (for और्ध्व-). Ś1 K1.2.6 D9 -दैहिक- (for -देहिक-). Ś1 K1.2.4.7 D7 -कर्माणाम् (for -धर्मा°). — d) Ds1 विचेतने; D8 विचिन्मनो (for विचिन्तने).

4 a) D6 शत. K4 आचार्ये. — d) K1.2 -पाषांड- (for -पाषण्ड-). Ś1 K1 -वासनाः; K2.4.7 B6.8 (both marg.) Da3.a4 D4.9 M1 Ca.np.Cp.sp -वासिनः; Ds D6 -वाचिनः; Cpp -वादिनः (as in text). K6 Dn1.n4 D2.3.8 नानाश्रमनिवासिनः. ❀ Ca.s: पाषण्डवासिनः पाषण्डानां वासना आच्छादकाः स्तम्भकाराः । वस आच्छादने वसु स्तम्भने धात्वोः । (Ca: यद्वा निःश्रेयसं प्रति विमुखत्वेन पाषण्डवासनावन्तः । तथा च पञ्चशिखचार्वाकबौद्धान्राजासौ पूर्वपक्षकारिणो मन्यते) ॥ Cn: पाषण्डवासिन इति पाठे पाषण्डान्वासयन्ति आच्छादयन्ति तिरस्कुर्वन्ति ते तथा । ❀

5 a) Ds1 D7 T G1–3.6 M5 Cnp.Cs न तेषां; D6 एतेषां; Cpp स तेषां (as in text). K1 प्रेति-; T2 पूर्व- (for प्रेत्य-). Ś1 K1.2.4 [ऽ]पि; V1 D4 M5.6 न (for च). — b) Da4 प्रेत- (for प्रेत्य-). K4 -जात्यौ; B9 -भावौ; D6 -ज्ञातौ (for -जातौ). K3.6.7 B6–8 D4.5.9 T2 M1.6.7 च निश्चये; V1 विनिश्चयं; D7 T1 G1–3.6 च निश्चयः (for विनिश्चये). — c) K6 D6 M7 आगमज्ञः (D6 °मिष्यः; M7 °मस्थं); K7 D4.9 शासनस्थः (for आगमस्थः). B8 (marg.).9 स्म; M7 तु (for स). Ds G1.2 भूयिष्ठा (Ds °ष्ठ). — d) G1.2 नात्मतत्त्वेन; Cnp.Cs आत्मतत्त्वेन (for °त्त्वे न). M1.7 Csp आत्मतत्त्वं न वक्ष्यति. ❀ Cs: आत्मतत्त्वं स्वरहस्यं । ❀

6 a) Da3.a4 T1 G1–3.6 अत्र; M6 ततः (for तत्र). K7 पंचशिषो; Ds1 °शिरो; D7 G1 °शिखा (for °शिखो). D4 om. from नाम up to तत्त्वज्ञा (in $7^{b}$). — b)

सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये ।
सुपर्यवसितार्थश्च निर्द्वंद्वो नष्टसंशयः ॥ ७
ऋषीणामाहुरेकं यं कामादवसितं नृषु ।
शाश्वतं सुखमत्यन्तमन्विच्छन्स सुदुर्लभम् ॥ ८
यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम् ।
स मन्ये तेन रूपेण विस्मापयति हि स्वयम् ॥ ९

आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् ॥ १०
तं समासीनमागम्य मण्डलं कापिलं महत् ।
पुरुषावस्थमव्यक्तं परमार्थं निबोधयत् ॥ ११
इष्टिसत्रेण संसिद्धो भूयश्च तपसा मुनिः ।
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः ॥ १२ C. 12. 7893 B. 12. 218. 13 K. 12. 220. 13

---

K7 D5 कपिल( D5 °लो )यो; T1 कापिलेय. —$^{b}$) Dn4 समधावन्; D7 G1. 2 परिधाय (for °धावन्). V1 सर्वां (for कृत्स्नां). ❀ Cn: परिधावन् एकत्र वासमकुर्वन् । ❀ —$^{d}$) Bo Da3 Dn1. n4 Ds D2. 3. 6. 8 अथ (for अपि). K6. 7 V1 B6–9 Da4 D5, 9 जगाम मिथिलाधिपं (B7 °पः).

7 D4 om. up to तत्त्वज्ञा (cf. v. l. 6). —$^{a}$) Cs स च (for सर्व-). ❀ Ca: सर्वसंन्यासाः — वेदसंन्यासः, काम्यनिषिद्धसंन्यासः, और्ध्वदैहिकव्यतिरिक्तकर्ममात्रसंन्यासाश्चेति प्रकाराः । ❀ —$^{b}$) K1 तत्त्वे (for तत्त्व-). —$^{c}$) K2. 4. 7 B6 (marg. as in text) Ds D4. 9 G1. 2 अ( B6 Ds स्व-; G1. 2 स )पर्यवसितार्थश्च; D7 सुपर्यवसितार्थं च.

8 $^{a}$) T2 M1. 5–7 transp. आहुर् and एकं. D4 एकं*; D7 T1 G1–3. 6 आचार्यं (for एकं यं). ❀ Cs: एकं प्रधानम् । ❀ —$^{b}$) D6 त्रिषु (for नृषु). D8 जितकामवृतं नृषु; Bom. ed. यं कामानावृतं नृषु. ❀ Ca: कामादवसितं त्यक्तकाममित्यर्थः ॥ Cn: कामादवसितमिति पाठे यदृच्छया स्थितम् ॥ Cs: कामात्स्वेच्छया नृष्ववसितं मनुष्येषूषितम् । ❀ —$^{c}$) G3 इच्छंतम् (for अत्यन्तम्). —$^{d}$) K4. 6 Da3 Dn1. n4 Ds D2. 7. 8 T G1. 2. 6 M5–7 अन्वि( K6 °नि )च्छंतं; B9 अनिच्छन्स; G3 अन्विष्यंतं; M1 °च्छंतः (for °च्छन्स).

9 $^{a}$) Da4 यथाहुः (for यमाहुः). Dn4 कपिला; D5 M1 कापिलं. —$^{b}$) Da4 Ds1 D4. 9 परमर्षि-; G1 °मेष्ठिं (for °मर्षिं). —$^{c}$) B9 स एव; D7 T G1–3. 6 M7 समेत्य; M5. 6 स एत्य (for स मन्ये). K7 D4. 9 [ऽ]नेन (for तेन). D5 समं त्वेन शरीरेण. —$^{d}$) K7 D4. 9 नः; M1. 6 वा (for हि). D7 T G1–3. 6 M5 (*sup. lin.* as in text) विस्मापयि( D7 °य )तवान्स्वयं.

10 $^{a}$) B9 G1 आसुरैः; T1 °रा (for °रेः). —$^{b}$) D4. 9 स्माहुश्च् (for आहुश्च्). Ś1 K1. 2 -जीवितं (for -जीविनम्). —$^{c}$) K6. 7 Bo. 7 D4. 9 पंचश्रोतसि. ❀ Ca. 8: पञ्चस्रोतसि पञ्चनदीसंज्ञे संगमे ॥ Cn: पञ्चस्रोतांसि विषयकेदारप्रणालिका यस्य तस्मिन्मनसि । Cp. 8: यद्वा अपाने प्राणं, प्राणं मनसि, मनो बुद्धौ, बुद्धिश्च प्रकृतौ, प्रकृतिश्च पुरुषे ॥ Cp: संत्राणलक्षणत्वात् सत्रम् । ❀ —$^{d}$) K6. 7 Dn4 D7 T G1–3. 6 M5. 6 -सहस्रकं (for °स्रिकम्).

11 $^{a}$) K6 D5 M5. 6 तमासीनं समागम्य (M5. 6 °मभ्येत्य); K7 D4. 9 समासीनं समागम्य; Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6 8 यत्र चा( Da4 D2. 8 वा )सीनमागम्य. —$^{b}$) K6 Bo. 6–9 Da3 a4 Dn1. n4 Ds D2. 3. 5–7 transp. मण्डलं and का( Da3. a4 Ds1 D5 क )पिलं. D8 कपिलशिष्यमंडलं. —K6 Dn1. n4 D2 Cal. Kumbh. ed. ins. after 11$^{ab}$: B9 D6 after 15: Da3 after 18: Da4 (cf. v. l. 18) after 12. 209. 15: Ds Ca after 19:

612* पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः ।
पञ्चज्ञः पञ्चकृत्पञ्चगुणः पञ्चशिखः स्मृतः ।

[ (L. 1) Dn4 -स्रोतति; Ds1 D6 -श्रोतसि. B7 पंचशास्त्रे विनिष्णातः (for the prior half). Ds2 Dn4 -विशारद. — (L. 2) Ca पञ्चकृत्यः पञ्चगुणः (for the prior half). D2 स्मृताः; D6 कृतः. ]

— After 612*, Da3. a4 read 13$^{ab}$ (Da4 for the first time, repeating it in its proper place).

—$^{c}$) ❀ Cn: पुरुषा अन्नमयादयः पञ्च अवसन्नतया बाधिततया तिष्ठन्त्यस्मिनिति पुरुषावस्थम् ॥ Cp: पुरुषावस्थं पुरुषे अवस्था अवस्थितिर्यस्य मण्डलस्य । पुरुषान्न परं किंचित्सा काष्ठा (Kaṭha Up. I. 3. 11) इति श्रुतेः । ❀ —$^{d}$) K7 Da3. a4 पुरुषार्थं; D3 परमात्मं (for °मार्थं). Ś1 K1. 2. 4 D4. 9 निबोध तं (D9 तत्); K6 D5. 7 T G1–3. 6 M1. 5–7 अबोधयत्; V1 Bo. 6–9 Da4 Dn1. n4 Ds D2. 3. 6. 8 Cap: न्यवेदयत्; B8 (marg.) Da3 Cpp बुबोध तत् (for निबोधयत्). ❀ Ca: कापिलं कपिलप्रणीतं ज्ञानं मण्डलं तेजोमण्डलधारितया पुरुषाकृत्या...... बोधयामास । ❀

12 $^{a}$) K1 इंद्रि-; K6. 7 Dn1. n4 D2. 3. 8 M1 7 Cn इष्ट-; D7 T G1–3. 6 M5. 6 Kumbh. ed. इष्ट्वा (for इष्टि-). K6 -पुत्रेण (for -सत्रेण). K6 Dn1 संपृष्टो; Bo. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn4 Ds D2. 3. 6. 8 संयुक्तो (for संसिद्धो). ❀ Cn: इष्टसत्रेण आत्मयज्ञेन । हेतौ तृतीया अध्ययनेन वसतीतिवत् । संपृष्टः सम्यक्पृष्टः प्रश्नो यस्य संपृष्टः, आत्मज्ञानार्थं कृतप्रश्न इत्यर्थः । ❀

C. 12. 7894 B. 12. 218. 14 K. 12. 220. 14
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते ।
आसुरिर्मण्डले तस्मिन्प्रतिपेदे तदव्ययम् ॥ १३
तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः ।
ब्राह्मणी कपिला नाम काचिदासीत्कुटुम्बिनी ॥ १४
तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ ।
ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् ॥ १५
एतन्मे भगवानाह कापिलेयाय संभवम् ।
तस्य तत्कापिलेयत्वं सर्ववित्त्वमनुत्तमम् ॥ १६
सामान्यं कपिलो ज्ञात्वा धर्मज्ञानामनुत्तमम् ।
उपेत्य शतमाचार्यान्मोहयामास हेतुभिः ॥ १७
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् ।
उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम् ॥ १८

— $^{b}$) M6 भूयांश्च. K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5–7 T G1–3. 6 M1. 5. 6 [आ]सुरिः; D8 [आ]-सुरीः; M7 [आ]सुरीं (for सुनिः). — $^{c}$) K2 D7 व्यक्तं; K7 व्यक्तिर् (for व्यक्तिं). ❀ Cs: व्यक्तिं विवेकदर्शनमिति यावत् । ❀ — $^{d}$) Bo. 6–9 Da3. a4 Ds D3. 6 Cpp देह- (for देव-). Dn4 -दर्शनं; D5. 7 T G1–3. 6 M5. 6 -दर्शनात् (for -दर्शनः). B8 (marg.) बुबुधे तेन बोधितः. ❀ Cp (reading अदेहदर्शनः): अदेहदर्शनः असंहतात्मज्ञानवान् । अथ वा आदौ देहदर्शने तपसा भूयो बुबुधे । ❀

13 B7 reads 13$^{ab}$ after 18. Da3. a4 read 13$^{ab}$ (Da4 for the first time) after 612*. — $^{a}$) D7 तत् (for यत्). ❀ Cs: एकमवृत्तिविषयम्, अद्वयमविकारम् । ❀ — $^{b}$) B6 (marg. as in text) नानाकारं (for °रूपं). — B7 ins. after 13$^{ab}$ (which follows 18): Da3 ins. after 13$^{ab}$: Da4 Ca after the second occurrence of 13$^{ab}$ following 612*:

613* तन्मे ब्रूहि द्विजश्रेष्ठ त्वं हि वेत्तास्य तत्त्वतः ।
एवं पृष्टः पञ्चशिखः संप्रहृष्टतनूरुहः ।

[ B7 om. line 2. ];

while Kumbh. ed. ins. after 13$^{ab}$:

614* बोधायनपरान्विप्रानृषिभावमुपागतः ।

— V1 reads 13$^{c}$–14$^{b}$ on marg. — $^{c}$) K1 आसुरिं; K2. 7 Dn4 आसुरि- (K7 °री-); B9 Da3. a4 Ca. v आसुरेर् (Bo °रैर्) (for °रिर्). ❀ Cp: मण्डले शास्त्रे । ❀ — $^{d}$) K1. 2. 4 D2. 3 तम् (for तद्).

14 V1 reads 14$^{ab}$ on marg. 14$^{ab}$ is partly damaged in B7. — $^{a}$) K4 Da4 Ds1 पंचशिषः. — $^{b}$) Ś1 K2 मानुष्यः; K1. 4 V1 Bo. 6. 8. 9 Da3. a4 D2. 5. 8 °ष्याः; K7 Dn4 D4. 9 °षी-; D7 T1 G1 मनुष्यो; G2 मानुषो; G3. 6 M5. 6 मनुष्य- (for मानुष्या). D7 T G1. 2 M1. 5–7 वयसा (for पयसा). K7 D4. 7 T G1–3. 6 M1. 5–7 धृतः; D9 वृतः (for भृतः). — $^{c}$) V1 Bo Ds1 कापिली; Ds2 D3. 8 कापिला (for क°). — $^{d}$) M1. 5. 6 कुटुंबिनी.

15 $^{b}$) K4 स्त्रियः; D7 G1–3. 6 विष्णुः (for स्त्रियाः). K2. 4 V1 B6. 8. 9 Da3. a4 स्म (for स). — $^{c}$) Ś1 K1. 2. 4 यतः (for ततः). Ds1 om. स. — $^{d}$) K6 वृद्धिं (for बुद्धिं). — After 15, B9 D6 ins. 612*.

16 $^{a}$) K1 G2 एतं मे; T2 तमेव (for एतन्मे). ❀ Ca. n. p. s: भगवान् मार्कण्डेयः सनत्कुमारो वा । ❀ — $^{b}$) K6. 7 V1 Bo. 6 (marg. as in text). 7–9 Da3 Dn1. n4 Ds D2–6. 8. 9 M1. 5–7 Cap. Cpp. Cs कापिलेयस्य; D7 T G3. 6 °यः स्व-; G1. 2 °यस्व- (for °याय). ❀ Ca. p: कापिलेयायेति षष्ठ्यर्थे चतुर्थी । ❀ — $^{d}$) D6 सर्वसत्त्वम् (for °वित्त्वम्). D7 T G1–3. 6 च भारत; M1 अनुस्मरन् (for °त्तमम्).

17 $^{a}$) K1 स मान्यं; B6 (orig.) सामात्यं; B6 (marg.) सुमहत् (for सामान्यं). K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 Cp जनकं (K7 V1 B8 [marg.] D4. 9 Cp °को) (for कपिलो). Ś1 K1. 2. 4 भूत्वा (for ज्ञात्वा). ❀ Cn: सामान्यं सर्वेष्वाचार्येषु समबुद्धिम् । ❀ — $^{b}$) T2 G2 धर्मज्ञानम् (for °ज्ञानाम्). Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 धर्मं (Ś1 K1. 2. 7 Ds1 D4. 9 सर्वं)-ज्ञो ज्ञानमुत्तमं; M1. 7 धर्मं जि(M7 °मंजि)ज्ञासुरु(M7 °मु)त्तमं. — $^{c}$) B7 Da4 उत्पत्य (for उपेत्य). D8 स तम् (for शतम्). Cpp उत्पतत्त्वरया गत्वा. — After 17, Kumbh. ed. ins.:

615* निराकरिष्णुस्तान्सर्वांस्तेषां हेतुगुणान्बहून् ।
श्रावयामास मतिमान्मुनिः पञ्चशिखो नृप ।

18 $^{a}$) K7 जगतस् (for जनकस्). Da4 त्वनु- (for त्वभि-). K7 D4. 9 -संबद्धः; D6 -संयुक्तं (for -संरक्तः). — $^{b}$) T2 कापिलेयस्य (for °लेयानु-). K6 -दर्शने; K7 D4 -शासनात् (for -दर्शनात्). — $^{c}$) D6 उत्सर्य (for उत्सृज्य). — $^{d}$) T2 तु (for तम्). — B7 reads, after 18, 13$^{ab}$ followed by 613*. Da3 ins. after 18, 612*, followed by 13$^{ab}$, and

तस्मै परमकल्याय प्रणताय च धर्मतः ।
अब्रवीत्परमं मोक्षं यत्तत्सांख्यं विधीयते ॥ १९
जातिनिर्वेदमुक्त्वा हि कर्मनिर्वेदमब्रवीत् ।
कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत् ॥ २०
यदर्थं कर्मसंसर्गः कर्मणां च फलोदयः ।
तदनाश्वासिकं मोघं विनाशि चलमध्रुवम् ॥ २१
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ।
आगमात्परमस्तीति ब्रुवन्नपि पराजितः ॥ २२
अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः ।
आत्मानं मन्यते मोहात्तदसम्यक्परं मतम् ॥ २३
अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ।
अजरोऽयममृत्युश्च राजासौ मन्यते तथा ॥ २४
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे ।
किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम् ॥ २५
प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ।
प्रत्यक्षो ह्यागमोऽभिन्नः कृतान्तो वा न किंचन ॥ २६ C. 12.7907 B. 11.218.27 K. 12.220.28

---

thereafter ins. 613*; Da4 reads after 18, 12. 209. 11–15 followed by 612*, the second occurrence of $13^{ab}$ and then 613*.

19 a) K6 Bo. 6 (marg as in text). 7–9 Dn4 Ds D3. 6 -कल्याणं (for -कल्याय). ❀ Ca: परमकल्याय दृढाय ॥ Cn: समर्थाय । ❀ — b) K7 D4. 9 प्रवणाय; B9 Da3. a4 प्रयताय (for प्रण°). — c) D6 परमो (for °मं). — d) D7 T G1–3. 6 M1. 5–7 यतः (for यत्तत्). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 Cn सांख्ये (for सांख्यं). K4 B6 Dn1. n4 D2. 3. 6 [ऽ]भि- (for वि-). ❀ Cn (reading सांख्ये): उपनिषत्काण्डे । विधीयते अपूर्वतया ज्ञाप्यते, न तु युक्त्या उन्नीयते । ❀ — After 19, Ds Ca ins. 612*.

20 a) D4 ज्ञाति-; D5 याति- (for जाति-). K6 तु; V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6 स (for हि). D8 वैराग्यजननक्त्वा स (sic). — b) V1 उक्तवान् (for अब्रवीत्). — B9 D5 G2. 6 om. (hapl.) $20^{cd}$. — c) K7 V1 D4. 7. 9 T1 G1. 3 M7 हि; Da4 Ds स; M1 [अ]थ (for च).

21 a) K2. 7 D4. 9 G3. 6 M1. 5 (*sup. lin.* as in text). 6. 7 सर्व-; K4 V1 B6–9 Dn1. n4 D2. 3. 5. 6. 8 धर्म- (for कर्म-). K1 -संसर्गाः; G2 M7 -संसर्गं. — b) Da4 कर्मणा. — c) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M1 तम् (for तद्). K6 अनास्वासिकं; Ds1 D5 °श्वासितं; D7 T G1–3 M1. 5–7 °श्वासकं (for °श्वासिकं). K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 M1. 5–7 Ca मोहं; K7 V1 D4. 9 देहं; D7 T G1–3. 6 मोहो (for मोघं). ❀ Cn: तं मोहमब्रवीदिति पूर्वेणान्वयः। ❀ —d) D7 G1 विनाशी. Da4 अब्रुवन् (for अध्रुवम्). T1 विनाशी च मलध्रुवं.

22 a) M1. 7 हि (for च). — d) Ds2 Cs न हि; M7 अति- (for अपि). M6 Cv ब्रुवन्यदपराजितः. ❀ Cs: न हि पराजितः साधु पश्यतीत्यर्थः । ❀

23 a) M1 ह्यात्मना (for °नो). K6 बंधुः; D7 T1 M1. 7 क्लेशं; T2 क्लेशो; G1. 2 क्लेश-; G3. 6 क्लेश्यो; M5. 6 मृत्युं (for मृत्युः). — b) K6 Dn4 D3 मृत्यु- (for मृत्युर्). Bo. 6. 8 (marg. as in text) Da3. a4 D5 Cp (Cpp as in text) अना(Da3 °था)मयः (for जरा°). D7 T G1–3. 6 M1. 7 जन्ममृत्युजरामयं (T2 G3. 6 °यः); M5. 6 क्लेशजन्मजरामयं. ❀ Cp (reading अनामयो): अनामयो महाव्याधिः । पञ्चम्यर्थे बहुव्रीहिः । पाठान्तरे, जरा वयोहानिः, आमयो रोगः । ❀ — d) Cpp असम्यक्तरम्.

24 a) K7 D9 अन्यम्; D7 T1 दैवम्; G1 देवम् (for एवम्). — b) K6 लोको (for लोके). — d) Ds1 राजसौ; D7 T G2. 3. 6 M1 रा(G3 र)जसो; M7 राजसे (for राजासौ). V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 यथा (for तथा). ❀ Cn: यथा राज्ञोऽजरत्वामरत्वाद्याशीरुपचार एवं दृष्टसुखे एव स्वर्गोपचारः । ❀

25 a) B8 D3. 4 M1. 5. 7 वा (for च). M1. 5 एवं; M6 एव (for एतत्). — b) D5 वसति (for असति). V1 लक्षणं; B6. 7. 8 (marg. as in text) Da4 Cp लक्ष्यते (for लक्षणे). ❀ Cp: अस्ति नास्तीति लक्ष्यते । काक्वा नेत्यर्थः । ❀ — c) T1 G1 कम् (for किम्). D7 T G1. 2 M1. 5. 7 तु; G3. 6 M6 तं (for तद्). Da4 भूयो; D4. 9 भूयाल्ल् (for ब्रू°). — d) Bo. 8 Da3. a4 Cp लोकत्रय-; Cpp °यात्रा- (as in text).

26 a) Ś1 K1. 2 एतयोर्; D7 T1 G1. 2 हि तयोर् (for ह्येतयोर्). ❀ Ca: एतयोः अस्तिनास्तिपदयोः । ❀ — b) K1. 2 कृतंतैतिह्ययोरपि; K6 कृतो नैति ह्यो°; K7 D4. 9 कृतांतो हि द्वयो°; V1 Bo. 6. 7. 8 (marg. as in text). 9 Da4 °तो ह्येतयोरपि; D7 T1 G1–3. 6 °तश्च तयो°; M1. 5 दृष्टांतैतिह्ययो°. — c) K4. 6 B8 Da3 Dn1. n4

C. 12. 7908
B. 12. 218. 28
K. 12. 230. 29

यत्र तत्रानुमानेऽस्ति कृतं भावयतेऽपि वा ।
अन्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः ॥ २७
रेतो वटकणीकायां घृतपाकाधिवासनम् ।
जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥ २८
प्रेत्य भूतात्ययश्चैव देवताभ्युपयाचनम् ।
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥ २९
न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमर्त्यस्य हि मर्त्येन सामान्यं नोपपद्यते ॥ ३०

---

Ds2 D2. 3. 5. 8 M5 (*inf. lin.*). 6 प्रत्यक्षेण; D7 T G1–3. 6 °क्षस्य; M1 °क्षं हि; M5 (orig.). 7 °क्षे हि (for °क्षो हि). Bo. 7 [ऽ]थ्यागमो (for ह्या°). — [d]) D7 T G1–3. 6 M1. 5–7 कश्चन (for किंचन).

27 [a]) Ś1 K1. 2. 4 B6–9 Da3. a4 Dn1. n4 D8 D2 G1 M1 यत्र (for तत्र). D7 T G1–3. 6 अनुमानं (for °माने). K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M1. 5–7 [ऽ]स्मिन्; D7 T G1–3. 6 वा (for ऽस्ति). — [b]) Dn4 कृतौ; D7 T G1–3. 6 M5. 6 कथं (for कृतं). K4 B6 Da3 Dn1. n4 Ds1 D2 Cn भावयतो (for °यते). K7 D9 [ऽ]थ (for ऽपि). K6 Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 5. 6. 8 च; Da4 lacuna (for वा). M1. 7 कृतं भावयतामपि. ❀ Cn: भावयतः कृतं, अलम् । भावनयालमित्यर्थः ॥ Cp: कृतमनित्यमचेतनं शरीरं भावयते साधयति, हेतुरिति शेषः । शरीरस्यैव वक्ष्यमाणन्यायेन चलनादि सिध्यति । तस्माच्छरीरादन्यो जीव इत्यास्तिकानामात्मास्तित्ववादिनां मते यः स्मृतः स न भवति । ❀ — [c]) K4 Bo Da3 Dn1. n4 D2. 3. 5. 6. 8 G3. 6 M1. 5. 6 Cn नान्यो (for अन्यो). V1 Bo. 8 (marg. as in text) Da4 D5. 7 T1 G1. 2 M1. 5–7 शरीराद्धि (D5 °त्तु) (for °रस्य). — [d]) B8 (orig.) स्मृताः; B8 (marg.). 9 Da3 Dn1. n4 Ds D2. 3. 5. 6. 8 स्थितः; D7 T G1–3. 6 M5. 6 मतः; M7 मता (for स्मृतः). Bo Ca प्रत्यक्षं ह्येतदुच्यते; M1 नास्तिकानामतो मताः.

28 [a]) M5 (*sup. lin.* as in text). 6 धातुर् (for रेतो). D4. 9 वटः; Ca Cpp [ऽ]वट- (gloss: योनौ) (for वट-). Dn4 -कर्णिकायां; T2 M5. 6 -कणिका च (for -कणीकायां). D7 T1 G1–3. 6 रेतो व(G2 वि)टस्य कणिका. ❀ Cv: रेतोधातुर्वटकणिका । ❀ — [b]) Ś1 K1 घृतं; D6 द्यतः; D7 T1 G1. 2 कृत- (for घृत-). K7 D9 -पाकेधि-; D7 T1 G2. 3 M5 (*inf. lin.*). 6 Cv -धूमाधि-; T2 -धूमादि-; G1 -धूमाति-; M1 -पाकोधि- (for -पाकाधि-). Ś1 K1. 2. 4. 6. 7 D9 -वासितं (K7 D9 °नां) (for -वासनम्). D4 क्षतपाकविवासनो. — [c]) K4. 6. 7 Da3 Dn1. n4 D2. 4. 6. 8. 9 G6 M1. 5. 6 जातिः; Ds1 जातिं; T2 जात-; Cpp याति (gloss: देहं प्राप्नोति) (for जाति-). ❀ Cn: स्मृतिरिति । यथा तर्कमते जडयोरप्यात्ममनसोर्योगादजडं स्मृत्यादिरूपं ज्ञानं जायते तद्वदत्रापि भविष्यति । ❀ — [d]) Bo G3. 6 -भक्षणः; D5. 8 -लक्षणं. D7 T1 G1. 2 सूर्यकांताग्निभ(G1. 2 °भो)क्षणं. ❀ Cs: अम्बुभक्षणं वह्निः विशेषेण वडवाग्नेरिव, तप्तवालुकादयो वा जलं संहरन्ति । ❀

29 [a]) K1 प्रेत-; D8 प्रेत्ये (for प्रेत्य). Bo. 6 (marg. as in text). 7. 8 (marg. as in text). 9 Da4 D6 Cp भूताप्रियश्च; Ds1 D7 T1 G3. 6 M1. 5. 6 Cv भूता(D7 T1 G3. 6 °त्वा)व्ययश्च; T2 भूत्वाव्ययं; G1 भूत्वावयश्च; G2 भूत्वोव्ययश्च (for भूतात्ययश्च). Dn1 Cn प्रेतीभूतेत्ययश्चैव; M7 प्रेत्य भूताभ्ययत्वाच्च. ❀ Cn (reading प्रेतीभूते): प्रेतीभूते देहे चैतन्यात्ययो देहातिरिक्तात्मास्तित्वे प्रमाणमित्यध्याहृत्य योज्यम् । प्रेत्य भूतात्यय इति पाठे, मृत्वा भूतनाशः, यस्मिन्सति देहो न नश्यति असति च नश्यति स देहादन्यः इत्यर्थः ॥ Cp (reading भूताप्रियः): भूतानामप्रियो मरणक्षणः ॥ Cs: भूतात्ययः भूतस्य शरीरस्य प्रलयो भवति । ❀ — [b]) K4 Dn1. n4 Ds1 D2. 3. 8 M1 Cn देवताद्युपयाचनं; K6 °भ्युपपावनं; K7 D4. 9 °भ्युपयाचनां; V1 Ds2 Cv °ता ह्युपयाचनं; Bo. 6. 7. 8 (marg. as in text) Da3. a4 D5 Cp (gloss: आराधनं) °भ्युप(Bo. 7 °ह्युप)पादनं; D6 °ता यूपयाचनं. — [c]) Da3 Cpp ऋते (for मृते). K1. 2. 7 T G3. 6 M1. 5–7 Cpp कर्मणि (for कर्मनि-). G1 -निवृत्तश्च (for °त्तिश्च). ❀ Cs: पाठान्तरे ऋते सत्ये भूतदयादौ कर्मणि वृत्तिः प्रवृत्तिश्च । ❀ — [d]) D7 T G2. 3. 6 प्रमाणत्वे कथं भवेत्.

30 [a]) Ś1 K2. 4 न त्वेतद्-; K1 नन्वेतद्-; K6 V1 Bo. 7. 8 Da4 Dn1 Ds D3. 5 नन्वेते; M1 न चैते (for न त्वेते). — [b]) Ds1 D6 यत्किंचिन् (for ये के°). G2 मृति- (for मूर्ति-). D7 T G1–3. 6 M1. 5 (*inf. lin.* as in text). 7 -संहिताः (for -संस्थिताः). — [c]) Da4 मर्तेन; D6 मर्त्येण. K6 Ds2 D5 T G1–3. 6 M1. 5–7 Cv अमूर्तं(G2 °मृत)स्य हि मूर्तं(T1 G2 तत्त्वे)न; B7 lacuna; D7 अमूर्तस्याहितस्तेन. — [d]) V1 lacuna; Bo Dn1. n4 Ds D3. 6 नोपलभ्यते; D8 °लक्ष्यते (for °पद्यते). ❀ Cs: अतो अमूर्तस्यात्मनः मूर्तं न सामान्यमित्यर्थः ॥ Cv: अमूर्तस्य देहव्यतिरिक्तादृष्टादेः मूर्तेन देहेन सामान्यं नोपपद्यते । ❀

31 [a]) D7 T1 G1. 3. 6 M5. 6 Cs अविद्यां (for °द्या-). Ś1 (*sup. lin.*) K2. 4 -कर्मणश्रेष्टा; K1. 7 V1 Bo. 7–9

अविद्याकर्मचेष्टानां केचिदाहुः पुनर्भवम् ।
कारणं लोभमोहौ तु दोषाणां च निषेवणम् ॥ ३१
अविद्यां क्षेत्रमाहुर्हि कर्म बीजं तथा कृतम् ।
तृष्णासंजननं स्नेह एष तेषां पुनर्भवः ॥ ३२
तस्मिन्व्यूढे च दग्धे च चित्ते मरणधर्मिणि ।
अन्योऽन्याज्जायते देहस्तमाहुः सत्त्वसंक्षयम् ॥ ३३

यदा स रूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मिन्स इत्येव संबन्धः स्यादसंहितः ॥ ३४
एवं सति च का प्रीतिर्दानविद्यातपोबलैः ।
यदन्याचरितं कर्म सर्वमन्यः प्रपद्यते ॥ ३५
यदा ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत् ।
सुखितैर्दुःखितैर्वापि दृश्योऽप्यस्य विनिर्णयः ॥ ३६ C. 12. 7917 B. 12. 218. 37 K. 12. 220. 38

---

Da4 Ds2 D4. 5. 9 M7 °चेष्टा ( V1 D4. 9 °ष्टां ) च; B6 °चिंता च; B8 ( marg. ) Ds1 D7 T1 G1–3. 6 M1. 5. 6 °तृष्णां ( B8 Ds1 M1 °ष्णा ) च; Dn1. n4 D2. 3. 6. 8 °तृष्णानां ( for °चेष्टानां ). — [b] ) Da3. a4 किंचिद् ( for के° ). Da3 Dn1. n4 Ds1 D5. 7 T1 G1–3. 6 M5–7 पुनर्भवे; Ds2 Csp °र्भवेत् ( for °र्भवम् ). — [c] ) K4 ते; K6. 7 D4. 5. 7. 9 T G1–3. 6 M1. 5–7 च ( for तु ). — [d] ) Bom. ed. तु ( for च ). K2 निषेचनं; K4 Ds1 D6 °वनं.

32 [a] ) K1 B7 Dn1 D4. 5. 9 T2 अविद्या ( for °द्यां ). Ds वै ( for हि ). — [b] ) M1 यथा- ( for तथा ). — [c] ) K1 -संसजनं; D7 T1 G2. 3. 6 -संजनित- ( for °ननं ). B6. 7. 8 (marg.) शोकम्; B8 ( orig. ) D7 T G1–3. 6 स्नेहम् ( for स्नेह ).

33 [a] ) B6 ( marg. as in text ) अस्मिन् ( for त° ). K4. 6 B7 Dn1 D2. 3 गूढे; V1 Bo. 6 ( marg. as in text ). 8 ( marg. as in text ). 9 Dn4 Ds1 D6. 7 T2 G1 मूढे; T1 G3. 6 ऊढे; G2 ऊढं ( for व्यूढे ). Ś1 K1 D5 दिग्धे ( for दग्धे ). — [b] ) K6 B7 Dn1. n4 D2. 3. 8 भिन्ने; Ds1 D4 वित्ते; D7 T G1–3. 6 M1. 5–7 देहे ( for चित्ते ). Da4 -धर्मिणी. — [c] ) K1 अन्योन्या; V1 Bo. 6 ( marg. ). 8. 9 Da3. a4 Dn4 Ds2 D2. 3. 8 अन्योस्माज्; B6 ( orig. ) D5. 6 अन्यस्माज्; B7 damaged; D7 T G1–3. 6 M1. 5–7 अन्योसौ ( for अन्योऽन्याज् ). K1 ज्ञायते; T1 G2. 3. 6 म्रियते ( for जा° ). D7 T1 G1–3. 6 M5–7 प्रेतस; T2 प्रेत्य; M1 स्नेहस् ( for देहस् ). — [d] ) G1 तदाहुः ( for तमाहुः ). B8 D7 T1 G1. 2. 6 M1. 5. 6 त( B8 M1 स )त्त्वमक्षयं; D4 सर्वसंक्षयं; D5 सत्त्वलक्षणं; T2 G3 सत्त्वसंप्लवं ( for °संक्षयम् ). ❀ Cn : सत्त्वसंक्षयं मोक्षम् । सत्त्वस्य धीधातोः संक्षयः सम्यगैश्वर्यं निर्विषयप्रवाहित्वं कैवल्यमित्याहुः । ❀

34 [a] ) Ś1 K1. 2. 4. 6 Cv यतः; Da3. a4 सदा; T2 यथा ( for यदा ). K6 V1 Da3 Dn4 D2. 4–6. 8 G3. 6 M1. 5. 6 Cv स्व- ( for स ). M7 रूपकश् ( for °तश् ). Dn1 स्वान्यो; D7 T1 G2 चान्ये ( for चान्यो ). ❀ Cv : रूपतः अणुरूपत्वतः, स्थूलरूपत्वतः । ❀ — [b] ) Da4 जातितं ( for °तः ). K2. 4. 7 V1 Bo. 6. 7. 8 ( marg. as in text ) Dn4 D2–6. 8. 9 श्रुततो; Dn1 शुभतो ( for श्रुतितो ). Ś1 [ऽ]ध्वरः; K1 [ऽ]धनः; K2. 4 [ऽ]धरः; Bo. 6. 7 Da3 M7 ( *inf. lin.* ) [ऽ]ध्वनः; Da4 [ऽ]ध्वजः ( for ऽर्थतः ). ❀ Cn : जातितः आलयविज्ञानं बाह्यविज्ञानमिति तेषामन्यत्वम् ।......। अर्थतः बन्धमोक्षतः विज्ञानानां पृथक्त्वम् ॥ Cv : जातितः चेतनत्वजडत्वजातितः । ...... । अर्थतः सुखभोक्तृत्वतदभावाख्यप्रयोजनाच्च । ❀ — [c] ) Ś1 K1. 2. 6 अस्मि ( for अस्मिन् ). K6 V1 Bo. 6–9 Da3. a4 D5 इ( Da3. a4 हे )त्येवं; K7 D4 एत्येव ( for इ° ). — [d] ) D7 T G1–3. 6 M1. 5. 6 संबोधः; Bom. ed. सर्वं वा ( for संबन्धः ). Dn1. n4 Cn ( gloss : अनभिसंहितं ) असंहितं. ❀ Cs : असंहितः असंनिकृष्टः । ❀

35 [a] ) B8 ( marg. ) Da3 transp. सति and च. — [b] ) Ś1 ( *inf. lin.* as in text ) K1 B8. 9 Da4 ज्ञान- ( for दान- ). K1 -तपोबलः; M1. 7 -तपोर्जने ( for °बलैः ). — [c] ) K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 यदस्याचरितं; D7 T G1–3. 6 M1. 5–7 यद्यदा° ( for यदन्या° ). — [d] ) K4. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 4–6. 8. 9 T2 G1 M1. 5–7 अन्यत्; D7 तत्र; T1 G2. 3. 6 अत्र ( for अन्यः ). K6 Dn1 D4. 7 T1 G2. 3. 6 M5 ( *inf. lin.* as in text ) प्रवर्तते ( for प्रपद्यते ).

36 [a] ) B7 damaged. K4. 6. 7 Bo. 6. 8. 9 Dn1. n4 Ds D2. 3 5. 6. 8 Cn अपि; V1 B8 ( marg. ) Da3. a4 D4. 7. 9 T G1–3. 6 M1. 5–7 यदि ( for यदा ). Ś1 K1 ह्यहम् ( for ह्ययम् ). K6 चान्यैः; D5 [ए]वांधैः; D7 T1 G2. 3. 6 [ए]वान्यो ( for °न्यैः ). — [b] ) Dn1 प्राक्तनैर्; D7 T G1–3. 6 M5–7 दुःखितैर् ( D7 °तो ) ( for प्राकृतैर् ). V1 दुःकृतो ( for दुःखितो ). — G2 om. ( hapl. ) 36[c]–37[b]. — [c] ) T G1. 3. 6 M1. 5–7 Cn सुखितो ( for दुःखितैर् ). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 सुखितो दुः( D7 सु )खितो वापि. — [d] ) K6. 7 B6 ( marg. ) D4. 5. 9 दृश्यो ह्यस्य; V1 Bo. 6–9

C. 12. 7913
B. 12. 218. 38
K. 12. 220. 39

तथा हि मुसलैर्हन्युः शरीरं तत्पुनर्भवेत् ।
पृथग्ज्ञानं यदन्यच्च येनैतन्नोपलभ्यते ॥ ३७
ऋतुः संवत्सरस्तिष्यः शीतोष्णे च प्रियाप्रिये ।
यथातीतानि पश्यन्ति तादृशः सत्त्वसंक्षयः ॥ ३८
जरया हि परीतस्य मृत्युना वा विनाशिना ।
दुर्बलं दुर्बलं पूर्वं गृहस्येव विनश्यति ॥ ३९
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्या विनश्यन्ति स्वं धातुमुपयान्ति च ॥ ४०
लोकयात्राविधानं च दानधर्मफलागमः ।
यदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ४१
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः ।
एतदस्तीदमस्तीति न किंचित्प्रतिपद्यते ॥ ४२

---

Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 दृश्यादृश्य-; D7 T G1. 3. 6 M1. 5–7 दृष्टो ह्यस्य (for दृश्योऽप्यस्य). ❀ Cn: दृश्यः स्पष्टः । ❀

37 G2 om. $37^{ab}$ (cf. v. l. 36). — a) K7 V1 Bo. 7–9 Da4 Ds D4. 5. 9 M7 Cs v यथा (for तथा). K1. 4 मुसुलैर्; K6. 7 V1 Bo. 6. 9 Da3 D4–6 9 मुश (V1 Bo. 6. 9 Da3 °ष)लैर्; Da4 मुदालैर् (for मुस°). D7 T G3. 6 M1. 5. 6 यदा हि (T2 °दा ह; M1. 5. 6 °दाहं) मूलतो हन्यात्; G1 यदा हि मुसलैर्हन्यात्. — b) Ds1 तं; D5. 7 T G1. 3. 6 M1. 5–7 न (for तत्). — c) Ś1 K1. 2 -जाति (for -ज्ञानं). Ś1 K1 यदन्यश्च; B8 (marg.) यथान्यच्च. ❀ Cv (reading यदन्यस्य): अन्यस्य देहादन्यस्य प्रेतयोनिं प्राप्तस्य ज्ञानं सामर्थ्यं हिंसितवानिति ज्ञानं पृथगस्ति तेन कारणेन । ❀ — d) D7 तेन तन्; T G1–3. 6 M5. 6 तेनैतन् (for येनै°). K6 B8 (marg.) Da4 D4 5. 7 T G1–3. 6 M5–7 -पद्यते (for -लभ्यते).

38 a) K7 D9 T2 M1. 5–7 Cv संवत्सरास् (for °त्सरस्). K1 G2 तिष्यः; G1 तीर्थः (for तिष्यः). K4. 6 ऋतुसंवत्सर(K6 °रा)स्तिष्यः; V1 Bo. 6–9 Da3 a4 Dn1. n4 Ds D2. 3. 5. 6. 8 Cn. s ऋतुसंवत्सरौ तिष्यः (Bo D5. 8 तिष्यः; B6. 8. 9 तिष्ये; Da3. a4 तिष्ये). ❀ Cn (reading तिष्यः): तिष्यः कलिरिति युगानामुपलक्षणम् । ❀ — b) Bo. 7–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 [ऽ]थ; B6 D5 वा (for च). — After $38^{ab}$, G2 reads $42^{c}$–$43^{a}$ for the first time, repeating the same in its proper place. — c) Da3. a4 तथा (for यथा). Ds G2 Cv नश्यंति (for प°). K7 D4. 9 यथानीतानि नश्यंति; T G1. 3. 6 M5. 6 यथा हीमानि न°. ❀ Cv: ऋतुत्वाद्यवस्था गच्छति, कालस्तु न नश्यति, तथा जीव इति भावः । ❀ — d) B8 (marg.) Da4 तादृशं. D7 T G1–3. 6 M5 सर्व- (for सत्त्व-). ❀ Cv: सत्त्वसंक्षयः जीवसंक्षयः । ❀

39 a) K1 जरायां; B7 damaged (for जरया). K7 D4 9 वा; V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 T G1–3. 6 M5–7 [अ]भि- (for हि). Da4 -परितस्य; D7 -परीतश्च. — b) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 च; D5 हि (for वा). K6. 7 V1 B6–8 Ds2 D4. 5. 7. 9 T G1–3. 6 M6 विनाशिनः (V1 D7 T1 G2 °तः) (for °शिना). — c) K7 D4. 9 शरीरं; V1 दुर्लभं (for the first दुर्बलं). D5 om. the second दुर्बलं. — d) D5 गृहस्थे च; D7 T1 G2 गृह एव; G1 गृहस्यैव (for °स्येव).

40 c) Ds1 ऋतुपूर्व्या; T G1–3. 6 आनुपूर्व्याद् (for °पूर्व्या). — d) Ś1 K2. 6. 7 Ds1 D4. 9 G3. 6 स्व-; K1 सु- (for स्वं). ❀ Cs: स्वं धातुमुपयान्ति स्वस्वकारणे लीयन्त इत्यर्थः । ❀

41 a) Ś1 K1. 2. 4 -विवातस्य; K6 -विधानस्य; K7 D4. 9 -विघातः स्याद्; V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 6. 8 -विघात(Da4 °ता)श्च (for -विधानं च). — b) Da3 दानधर्मे; Ds2 °कर्म- (for °धर्म-). Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2–6. 8. 9 -फलागमे (for °गमः). — c) K6 V1 Bo. 6–8 Dn1. n4 Ds D2. 3. 5–8 T G1–3. 6 M1. 5–7 तदर्थं (for य°). Ś1 K1. 2. 4 -शास्त्रं च; K7 Ds D4. 9 -शब्दार्थ-; D5 -शब्दश्च (for -शब्दाश्च). — d) T2 तार्किकाः (for लौकिकाः). Ś1 K1. 2. 4 व्यवहारश्च लौकिकः.

42 a) Ś1 K2 च नश्यंते; K1 च एते हि; D7 G2 मतस्यैते; T1 G3 मनस्यैते; T2 °स्येति; M7 मतस्येते (for मन°). D6 इति वाङ्मनसस्येते. — b) ❀ Cs: हेतवः कर्मानुष्ठानकारणानि श्रुतिस्मृतिसदाचाररूपाणि । ❀ — G2 reads $42^{c}$–$43^{a}$ for the first time after $38^{ab}$. — c) G2 (first time) इदम् (for एतद्). D5 एतदस्तीतिमस्तीदं (sic); G1 एतदासीन्ममास्तीति. — d) D5 न च (for न). T2 G1. 2 (first time). 3. 6 M5. 6 कश्चित् (for किंचित्). Bo Dn1. n4 Ds2 D2. 3. 6. 8 प्रति(D2. 3 °त्य)दृश्यते (for °पद्यते).

43 For the first occurrence of $43^{a}$ in G2, cf. v. l. 38. — a) Ś1 K1. 2 विमृष्यताम्; K4 V1 Bo. 6–9 D2. 3. 6 विमृषताम् (D6 °द्); G1 निर्विशताम्;

तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ ४३
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ॥ ४४
अर्थांस्तथात्यन्तसुखावहांश्च
लिप्सन्त एते बहवो विशुल्काः ।
महत्तरं दुःखमभिप्रपन्ना
हित्वामिषं मृत्युवशं प्रयान्ति ॥ ४५
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ ४६
भूव्योमतोयानलवायवो हि
सदा शरीरं परिपालयन्ति ।
इतीदमालक्ष्य कुतो रतिर्भवे-
द्विनाशिनो ह्यस्य न शर्म विद्यते ॥ ४७
इदमनुपधि वाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरभिवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ४८ C. 12.7929 B. 12.218.49 K. 12.220.51

इति श्रीमहाभारते शान्तिपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

G2 (second time) विमर्शताम् (for विमृश°). K1. 2. 4 Bo. 7. 8 (orig.) Da3. a4 Dn1. n4 Ds D2. 3 6. 8 T2 G1. 2 M7 एव (for एवं). — [b]) Ś1 K1. 2. 7 D4. 9 तत्सर्वमभि-; D5 T2 यत्तत्समभि- (for तत्तत्स°). K1 corrupt; M1. 7 -भाषतां (for -धावताम्). — [c]) V1 B9 D7 T1 G3. 6 Csp न विशते; D5 निवसते; D6 G1 निर्विशते (for निविशते). ❀ Cs: निविशते स्थिरा भवति। न विशते इति वा पाठः। ❀ — [d]) B8 (marg. as in text) तन्न (for तत्र). K1. 7 V1 Bo. 6. 7 8 (marg. as in text). 9 Da4 Dn4 Ds D2–5. 9 जीर्यंति (for जीर्यति). D4 om. from वत् up to अर्थांस्त (in 45[a]). D5 वृद्धवत्; M7 काष्ठ° (for वृक्ष°). ❀ Cs: वृक्षवत् वातान्दोलितवृक्षवत् । ❀

44 D4 om. 44 (cf. v. l. 43). — [a]) K7 D9 एवमर्थेषु सर्वेषु. — [c]) B8 उप- (for अप-). B8 (marg.) -पद्यंते (for -कृष्यन्ते). ❀ Cs: आगमैः काम्यकर्मविधिभिः । ❀ — [d]) K6 B7–9 Da3. a4 Ds1 D5. 7 T G1–3. 6 M1. 5–7 हस्तिनो हस्तिपैर् (by transp.). — After 44, Kumbh. ed. ins.:

616* न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।

[Cf. Manu. 2. 94; 1. 693*, lines 6–7; 840*, lines 1–2; Viṣṇu P. 4. 10. 9–10.]

45 D4 om. अर्थांस् (cf. v. l. 43). — [a]) K7 अर्थास् (for अर्थांस्). K1 [अ]भ्यंत-; B6–8 ये तु (for [अ]त्यन्त-). B9 -दुःखावहांश् (for -सुखा°). — [b]) V1 लिप्संति; Ds1 लप्स्यंत; G1 ईप्संत. K6 एके; V1 चैते; G2 एव ते (for एते). K1. 6 Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 5–8 T G2. 3. 6 Cs (gloss: दुःखकृशाः) विशुष्काः; K7 D4. 9 विमुग्धाः; V1 विशुद्धाः; G1 M7 [ऽ]पि शुष्काः (for विशुल्काः). — [c]) Da3 Dn1. n4 D2. 3. 8 अनु-; D6 अति- (for अभि-). — [d]) Ds D5. 6 M1. 5–7 [अ]मृतं; D7 T G1–3. 6 सुखं (for [आ]मिषं). M7 मृत्युमुखं (for °वशं). K7 Da4 प्रयाति.

46 [a]) K6 [ऽ]त्यध्रुव-; T1 ह्यध्रुवं (for ह्यध्रुव-). — [b]) Ś1 K1. 2 मृत्यु-; K4 Dn1. n4 D2. 8 भिन्न- (for मित्र-). — [d]) K7 D9 विहाय (for क्षणेन). B9 G2 वि- (for न). K6 वा (for च).

47 [a]) K6. 7 D4. 5. 9 खं भूमि-; B9 T G1–3. 6 M6 भूर्व्योम-; Da4 पूर्व्योम- (for भूव्योम-). K1 V1 -तोयानिल- (for -तोयानल-). Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 [ऽ]पि; D7 T1 G2 वा (for हि). — [b]) Ś1 K1. 2. 7 Da3. a4 D4. 9 यदा; G1 तदा (for सदा). V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 प्रति- (for परि-). — [c]) K1 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6–8 T G1–3. 6 M1. 5–7 transp. कुतो and रतिः. D5 रतिर्भवेन्न वा. — [d]) K4. 6 Bo. 7 Dn1. n4 Ds D2. 3 5. 6. 8 [ऽ]प्यस्य (for ह्यस्य). G1 om. न. V1 D7 T G1–3. 6 M1. 5–7 Cs (Cs. p as in text) कर्म (for शर्म).

48 [a]) D7 इति (for इदम्). Da4 अनुपधिप-; D7 G1. 2 अनुविधि (for अनुपधि). D8 (marg.) अक्षरं (for अच्छलं). ❀ Cn: अनुपधि, भ्रमविप्रलम्भादिरहितं

# २१२

C. 12 7930
B. 12. 219. 1
K. 12. 222. 1

भीष्म उवाच ।
जनको जनदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ॥ १
भगवन्यदिदं प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ २
सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्द्विजोत्तम ।
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥ ३
असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु ।
कस्मै क्रियेत कल्पेन निश्चयः कोऽत्र तत्त्वतः ॥ ४
तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम् ।
पुनः प्रशमयन्वाक्यैः कविः पञ्चशिखोऽब्रवीत् ॥ ५
उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ।
अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम् ।
वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु ॥ ६

---

वेदमूलकत्वात् । अच्छलं वैदिककर्मकाण्डवन्न मायामूलकम् ॥ Cs : अनुपधि । उपाधिरुपालम्भः, तद्रहितम् । ❀ — b) Da4 आत्मसाधिकं ( for °साक्षिकम् ). — c) K6 D5 M1 अनुवीक्ष्य ( for अभि° ). K1 विस्मिताः ; B8 ( marg. ) सत्वरः. — d) G1 उपयोक्तुम् ( for अनु° ). K7 D9 अमुं ( for इदं ). K1 प्रचक्षमे ( for °क्रमे ).

Colophon. — *Sub-parvan :* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 6–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Ds D2–4. 6. 8. 9 पंचशिख( K7 Da3. a4 °ष )वाक्यं ; M1 जात्यादिनिर्वेदः ; M5. 6 जनकपंचशिखसंवादे जातिनिर्वेदः ; M7 निर्वेदकथनं. — *Adhy. no.* ( figures, words or both ): B7 48 ; Dn1 D7 T1 G1. 3. 6 M5 45 ; Dn4 Ds2 44 ; Ds1 46 ; T2 G2 59 ; M1. 6. 7 43. — *Śloka no. :* Dn1 49 ; Dn4 48 ; D8 47. —After 12. 211, Kumbh. ed. Cv ins. a passage given in App. I ( No. 18 ).

## 212

1 a) K6. 7 D4. 9 नरदेवस् ( for जन° ). — b) Dn1. n4 ज्ञ( Dn4 जा )पिताः ( for ज्ञापितः ). — c) B9 [अ]थ ( for [अ]नु- ). — After $1^{abc}$, G2 reads $5^{bc}$ for the first time, repeating it in its proper place. — d) Ś1 K1. 2 सां( Ś1 सं )पराय- ( for °राये ). V1 [ऽ]ब्रवीत्तु वै ; D4 कथं भवेत् ( for भवाभवौ ). ❀ Ca. s : सांपराये तत्त्वज्ञानप्रतिबन्धिनि संशये ॥ Cv : सांपराये मोक्षविषये । मोक्षसाधनाय मोक्षबाधनाय चेत्यर्थः । ❀

2 Before 2, MSS. ins. जनक उवाच. — a) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 Cn. p. s यदि न ( Da4 नः ) ; D4. 9 यदियं ; Ca °दं ( as in text ). D7 T G1–3. 6 M1. 5–7 प्रोक्तं ( for प्रेत्य ). — d) Da4 om. ज्ञानं. ❀ Ca : एतद्यदि कस्यचिदपि भवति तदा शेषाणां ज्ञानमज्ञानं वा किं करिष्यति । ❀

3 D7 om. ( hapl. ) 3. $3^{ab}$ is partly damaged in B7. — a) K2 सर्वमुच्छेदनिष्ठस्य. — b) K6 पश्यन् ( for पश्य ). Da4 द्विजोत्तमः. — d) V1 B7. 8 T2 G1. 2 M1. 5–7 कं ( for किं ).

4 a) G1 वि- ( for हि ). — b) K1 स सर्गो ( for संसर्गो ). — c) K4 Bo. 7. 8 Dn1. n4 Ds D2. 3. 8 कल्प्येत ; K6 V1 B6 ( marg. ) Cp कल्पेत ; B6 ( orig. ) D5. 7 T G1–3. 6 तत्त्वेन ; B9 कल्येन ; D4. 9 M1. 5. 6 कल्प्येन ; D6 कल्येत ( for कल्पेन ). ❀ Cpp : पटुना कल्पेन शास्त्रेण । ❀ — d) Ds1 निश्चयाः.

5 Before 5, MSS. ins. भीष्म उवाच. — a) Ds1 तपसा ( for तमसा ). K6 T2 M5–7 [अ]भि- ; D7 T1 G1. 2 [अ]पि ( for हि ). D6 प्रतिच्छिन्नं ( for °च्छन्नं ). — G2 reads $5^{bc}$ for the first time after $1^{abc}$. — b) Da3. a4 G1 विश्रांतम् ; G2 ( first time ) विभूत्तम् ( for विभ्रान्तम् ). K1. 2 चात्तरं ; D4 वातुरं ( for चा° ). ❀ Cp : आतुरम् उक्तिप्रत्युक्तिशून्यम् ॥ Cs : कर्तव्यतामूढम् । ❀ — V1 om. $5^{c}$–$12^{d}$. $5^{cd}$ is damaged in B7. — c) Da4 प्रशमयैर् ; G2 ( first time ) प्रथमचन् ( for प्रशमयन् ).

6 V1 om. 6 ( cf. v. l. 5 ). — a) K7 उच्छेदनिष्ठं ; Ds1 °निष्ठो ( for °निष्ठा ). G1 देहेस्ति ; G3 देहस्य ( for नेहास्ति ). — c) D5 त्वपि ( for ह्यपि ). K2 Bo. 6. 8 ( marg. as in text ) T1 ( marg. ) समाचारः ; Cpp °हारः ( as in text ). ❀ Cp : सम्यगाचरणम् समाचारः । ❀ — d) D7 T1 G2. 3. 6 जनि( D7 जानी )तेंद्रिय- ; M1 शारीरें°. — e) D7 T G1–3. 6 M1. 5 ( before corr. ) इत्येवम् ( for अन्योन्यम् ). — f) Ś1 अभ्युपाश्रित्य ; K1. 2. 7 D4. 9 G1. 2 M1 Cpp अन्यपा( K7 °पो )श्रित्य ( K7 °त- ) ; D7 अप्युपा° ( for अप्यपा° ). G1 कः सुधीः ( for कर्मसु ). B6–9

धातवः पञ्चशाखोऽयं खं वायुर्ज्योतिरम्बु भूः ।
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः ॥ ७
आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम् ।
एष पञ्चसमाहारः शरीरमिति नैकधा ।
ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसंग्रहः ॥ ८
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ विकारश्च धातवश्चात्र निःसृताः ॥ ९
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च ।
इन्द्रियाणीति पञ्चैते चित्तपूर्वंगमा गुणाः ॥ १०
तत्र विज्ञानसंयुक्ता त्रिविधा वेदना ध्रुवा । C. 12. 7941 B. 12. 219. 11 K. 12. 222. 14

---

Da3. a4 व्यपाश्रित्य च कर्मसु. ❀ Cn: अन्यतरनाशेऽपि संघातनाश इत्यन्योन्यमपाश्रित्येत्यस्यार्थः ॥ Cs: कर्मसु निमित्तसप्तमी । ❀

7 V1 om. 7 (cf. v. l. 5). —$^{a}$) D7 T2 G2 यावंतः (for धातवः). K6. 7 Ds2 D4. 9 -भूतेषु; Bo 6. 7 8 (marg. as in text). 9 Dn1. n4 Ds1 D2. 3. 5. 6. 8 Cnp -धा तोयं; D7 T G1–3. 6 M1. 5–7 तेषां तु (for -शाखोऽयं). ❀ Cn: धीयते निलीयते कायमेष्विति धातव उपादानानि ॥ Cp: धातवः सर्वेषां कार्याणां विधारकाः । ❀ —$^{b}$) Ds2 ख- (for खं). Ś1 K1. 2. 7 D4. 9 अब्भुवः; Da4 अध्वराः; Ds2 Cs अब्धरा; D7 अंबुभिः (for अम्बु भूः). K6 Bo. 6–9 Da3 Dn1. n4 Ds1 D2. 3. 5. 6. 8 खं वायुर्ज्योतिषो (B9 °षी; D5 °षा) धरा. —$^{c}$) K2 तेन स्वभावेन (hypermetric); B7. 9 तेष्वभावेन (for ते स्व°). B8 (marg.) Da3. a4 Cp (Cpp as in text) युज्यंते (for तिष्ठन्ति). ❀ Cn: स्वभावेन इति सांख्यमताभिप्रायेण, तेषामीश्वरकालयोरभावात् जीवानां चोदासीनत्वात् अदृष्टस्य च कार्यत्वेन कारणाप्रवर्तकत्वात् स्वभावत एव गुणानां प्रवृत्तिरिति मतम् ॥ Cp: स्वस्मादात्मनो भाव उद्भवो येषां ते स्वभावाः कर्माणि । कर्मभ्यः । स्वभावतः अविद्यायाः, न स्वकर्मवशेन ॥ Cs: स्वभावेन स्वकर्मणा । ❀

8 V1 om. 8 (cf. v. l. 5). —$^{a}$) K6 Dn1 D7. 8 T G1–3. 6 M5. 6 आकाशो (for °शं). — 8$^{bcd}$ is damaged in B7. —$^{b}$) Ś1 K1. 4 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 T2 यश्चापि (for यच्चापि). K4 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5. 6. 8 G3 Cp पार्थिवः; K6 Ds1 D4. 7 T1 G2 °व (for °वम्). —$^{d}$) M1 शारीरम्. K6. 7 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 6. 8 M1. 5–7 अपि (for इति). Da4 नेकधाः; D5 पंचधा; D7 T1 G1. 3. 6 नैकथा (for °धा). — After 8$^{cd}$, Kumbh. ed. Cv ins.:

617* अहंवाच्यं द्विजानां यद्विशिष्टं बुद्धिरूपवत् ।
वाचामगोचरं नित्यं ज्ञेयमेवं भविष्यति ।
ज्ञानं ज्ञेयं तथाज्ञानं त्रिविधं ज्ञानमुच्यते ।

[(L. 1) ❀ Cv: अहंवाच्यम् अहमिति शब्देन वाच्यम् । विशिष्टं विशिष्टं दैवम् । ❀ —(L. 3) ❀ Cv: ज्ञानं सामान्यज्ञानं परोक्षज्ञानं च । ज्ञेयं ज्ञानविषय ब्रह्म । असम्यग्ज्ञानं विशिष्टज्ञानमपरोक्षज्ञानं च । ❀]

—$^{e}$) K7 Da4 Ds1 T2 उष्मा; D6 अग्निश्. ❀ Ca: ऊष्मा तेजः, भुक्तान्नपाकादिना शरीरपालकः । ❀ —$^{f}$) G1 त्रिविधाः. Bo. 6. 7. 8 (marg. as in text). 9 Dn1. n4 Ds2 D2. 3. 6. 8 M7 (*sup. lin.*) कार्य- (for कर्म-). G1 -संग्रहाः. ❀ Ca: तस्य कर्मणां गमनागमनादीनां संग्राहकत्वात्कर्मसंग्रहाख्या । ❀

9 V1 om. 9 (cf. v. l. 5). —$^{a}$) D5 [इं]द्रियार्थेषु (for °र्थाश्च). —$^{b}$) K6 मम (for मनः). D5 स्वस्वभावश्च नामतः. ❀ Ca: स्वभावश्च स्वस्माद्भावो न त्वन्यस्मादिति स्वभावो नित्य आत्मा । ❀ ❀ Cs: चेतना निश्चयात्मिका बुद्धिः । ❀ —$^{c}$) K1. 7 D4. 9 M1. 5–7 विकाराश्; G1 विधानश् (for विकारश्). —$^{d}$) G3. 6 यावंतश् (for धातवश्). K1. 4 निस्मृताः; K7 D4. 9 विसृताः; T2 निसृताः; G2 निर्वृताः; M1. 7 (*inf. lin.*) संभृताः; M5. 6 निर्भृताः (for निःसृताः). ❀ Cp: धातवः शरीरधारका इत्यर्थः । यद्वा 'मांसासृक्पूयविण्मूत्रस्नायुविण्मूत्रसंज्ञकाः' सप्त । ❀ — After 9, Kumbh. ed. Cv ins.:

618* प्राणादयस्तथा स्पर्शा न संबाधगतास्तथा ।
पुत्राधीनं भविष्येत चिन्मात्रः स परः पुमान् ।

10 V1 om. 10 (cf. v. l. 5). —$^{a}$) Ds2 श्रवण- (for °णं). —$^{c}$) Ś1 K1. 2 पूर्वं वै (for पञ्चैते). —$^{d}$) Ds1 D4 वित्त- (for चित्त-). K6 Dn1 D2. 8 Cn -पूर्वंगता; K7 D4. 9 °गमाद्; D6 G1. 3. 6 M5. 6 -पूर्वगमा; D7 T G2 -पूर्वाग(T2 °स)मा (for -पूर्वंगमा). Ds2 D5 चित्तपूर्वं गुणागमाः. ❀ Ca: चित्तं पूर्वं गमयति प्रेरयति एतान् इति । गुणभूताः आत्मार्थत्वादेते गुणाः ॥ Cn (reading चित्तपूर्वंगता): चित्तं पूर्वकारणं यस्यार्थगणस्य तं चित्तपूर्वं चित्तमात्रोपादानकं गताः प्राप्ताः गुणाः गुणकार्यभूताः ॥ Cp: चित्तं पूर्वं गमयन्ते, चित्तपूर्वं गच्छन्ति वा । मनोनुगा इत्यर्थः । आत्माधीनत्वाद्गुणाः । ❀

11 V1 om. 11 (cf. v. l. 5). —$^{a}$) K4 [अ]विज्ञान- (for विज्ञान-). T1 G3. 6 M7 -संयुक्तास्. —$^{b}$) Ś1 K1. 2. 4. 6 Bo. 7. 9 Dn1. n4 Ds2 D2. 3. 6. 8 Kumbh.

C. 12. 7941 B. 12. 219. 11 K. 12. 222. 14

सुखदुःखेति यामाहुरदुःखेत्यसुखेति च ॥ ११
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्त्यथ ।
एते ह्यामरणात्पञ्च षड्गुणा ज्ञानसिद्धये ॥ १२
तेषु कर्मनिसर्गश्च सर्वतत्त्वार्थनिश्चयः ।
तमाहुः परमं शुक्रं बुद्धिरित्यव्ययं महत् ॥ १३
इमं गुणसमाहारमात्मभावेन पश्यतः ।
असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति ॥ १४
अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि ।
वर्तते किमधिष्ठाना प्रसक्ता दुःखसंततिः ॥ १५
तत्र सम्यङ्मनो नाम त्यागशास्त्रमनुत्तमम् ।
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥ १६
त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम् ।

---

ed. Cv चेतना; G1 देवना (for वेदना). K6 ध्रुवं; G1. 3. 6 M7 ध्रुवाः (for ध्रुवा). — c) K1 -दुःखे हि (for -दुःखेति). — d) K6 Bo. 6. 7. 8 (marg. as in text). 9 Dn1. n4 Ds D2. 3. 5. 8 अदुःखाम् (for °खेति). K4 D6 सुखेति (for असुखेति). D4 वै (for च). Da3. a4 अदुःखा सुखमेव च; M1 तथा दुःखसुखेति च; M7 अदुःखा चासुखेति च.

12 V1 om. 12 (cf. v. l. 5). — a) Da4 Dn4 D6 T2 G1. 2 M7 शब्द- (for शब्दः). K6. 7 Da4 Ds1 D5 M1 स्पर्शं (for स्पर्शश्च). D7 G3 रूपश्च (for रूपं). — b) K4. 6. 7 Bo. 6. 8 Da3. a4 Dn1. n4 Ds2 D2-4. 6. 8. 9 मूर्तयः; B7 मूर्त्यथः; B8 (orig. as in text). 9 मूर्तिमान्; D5. 7 मूर्तितः; T1 पंचमः; G2 मत्यथ; G3. 6 मत्यथ (for मूर्त्यथ). ❀ Cn: मूर्तयः रूपाश्रयद्रव्याणि, वाय्वाकाशयोरमूर्तत्वश्रुतेर्बाह्येन्द्रियाग्राह्यत्वात् । पञ्च शब्दाद्याः मूर्तिभिः सह षड्गुणाः विषयाः । ❀ — c) Ś1 (before corr.) ह्यात्मगुणात् (for ह्यामरणात्). D7 T G1-3. 6 M1. 5-7 युक्ताः (for पञ्च). — d) K7 D4. 9 कर्मसिद्धये (for ज्ञान°). ❀ Cv (reading षड्गुणज्ञानसिद्धये): मनसा सह षण्णां ज्ञानेन्द्रियाणां गुणभूतं यज्ज्ञानं तस्य सिद्धये । ❀

13 a) K6 -निसर्गाश्च; Da3. a4 Dn1 Ds1 D2. 5. 8 T2 Ca. n -विसर्गश्च (for -नि°). Ś1 K1. 2. 4 तेषु कर्म(K1 °र्मा)णि सर्व(K1 °र्ग)श्च; Bo. 6. 7. 8 (marg. as in text). 9 Dn4 D3. 6 तेषु कर्मणि सिद्ध(B8 Dn4 °द्धि)श्च. ❀ Ca (reading -विसर्गश्च): विसर्गो विशिष्टा पुण्यार्था सृष्टिः ॥ Cn: कर्म स्वर्गसाधनम्, विसर्गः संन्यासो......सर्वतत्त्वार्थनिश्चयो मोक्षहेतुः । ❀ — b) K2 -तत्त्वाथ (for -तत्त्वार्थ-). D7 T1 G2 -दर्शनः; G3. 6 (before corr. as in text) -दर्शिनः (for -निश्चयः). — c) K6 यथाहुः; Da3. a4 D5 यमाहुः; D7 T1 G2 तत्राहुः; M7 तदाहुः (for तमाहुः). B6 M1. 7 (*inf. lin.*) शुद्धं; B8. 9 Da3 Ds Ca. 8 शुक्लं; D5 युक्तं; D7 धर्मं; T1 G2 कर्म (for शुक्रं). ❀ Cn: शुक्रं मोक्षबीजम् । ❀ — After 13ab, Kumbh. ed. Cv ins.:

619* पारे च रजसः प्रभुम् ।
विरागाद्वर्तते तस्मिन्मनो रजसि नित्यगम् ।
तस्मिन्प्रसक्ते संपश्येद्-

— d) ❀ Ca: अव्ययत्वं अव्ययस्यात्मनो बोधहेतुत्वात् । महत् महदाख्या । ❀

14 a) K7 D5 इदं; D6 एवं (for इमं). ❀ Cv: गुणसमाहारं ज्ञानादिगुणसमाहारवन्तं परमात्मानम् । ❀ — b) M7 आत्माभावेन. Ds1 पश्यता; D5 °त; G3. 6 °ति (for °तः). — c) K6 -दर्शनं; K7 D4. 7. 9 T G1-3. 6 M7 -दर्शिनो (G1 °ना); V1 Bo. 6. 9 D5 M1. 5. 6 -दर्शने (for °नैर्). — d) K1 -शाम्यते. — After 14, Kumbh. ed. Cv ins.:

620* तस्मादेतेषु मेधावी न प्रसज्येत बुद्धिमान् ।

15 a) T2 अनात्मेति च; Ca अनात्मे हीति (for °त्मेति च). K6 om. च. D5 अदृष्टं च; D7 T G1-3. 6 M1. 5-7 यदा (T2 °था-) दृष्टं; Cnp ह्यनिष्टं च (for च यद्दृष्टं). ❀ Cn: यद्दृष्टं तदनात्मेति संबन्धः तेन कारणेन अहमिति ममेति च न वर्तते ॥ Cv: आत्मा जीवः स्वयं न भवतीत्यनात्मा । यद्दृष्टं द्वा सुपर्णेत्यादिश्रुतिषु दृष्टम् । तद्ब्रह्मस्वरूपमहं न । ❀ — b) K6 D7 T G1-3. 6 M1. 5-7 Cnp नाहं न च; B9 चेतनाहं; D5 नाहं तेन; Cv तन्नाहं न (for तेनाहं न). Ś1 K2 च; K7 D4. 9 [अ]थं (for [अ]पि). — c) K4. 6 V1 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-8 M1. 5. 7 किमधिष्ठानात्; T2 °ष्ठानं (for °ष्ठाना). — d) M1 प्रतिष्ठा (for प्रसक्ता). ❀ Ca: प्रसक्ता अविच्छेद्या ॥ Cn: प्रतीयमाना । ❀

16 a) K6 Dn1. n4 D2. 5. 8 अत्र; D7 T G2 M5. 6 तत्तु; G1 तं तु; M1 ततः (for तत्र). Da4 -मुखो; Dn1 D2 Cn -वधो; D7 T G2-3. 6 M5. 6 मतं; M7 (*sup. lin.*) मतो (for -मनो). Ds1 नामन् (for नाम). K7 D9 एवं सति समाख्यातं. ❀ Cn: हन्तिर्गुणनार्थे ज्योतिःशास्त्रे प्रसिद्धः । सम्यग्वधो गुणनं पुनः पुनरभ्यस्यन्ते तत्त्वान्यस्मिन्निति सम्यग्वधो नाम सांख्यशास्त्रम् । सम्यङ्मन इति पाठे सम्यक् संदेहनिर्मुक्तं मनो येनेति । ❀ — b) V1 त्यागः;

C. 12. 8790 B. 12. 241[40]. 23 K. 12. 246. 23 अद्भुतानि रसस्पर्शे शीतोष्णे मारुताकृतिः ॥ २१
प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः ।
तांस्तत्त्वविदनादृत्य स्वात्मनैव निवर्तयेत् ॥ २२
कुर्यात्परिचयं योगे त्रैकाल्यं नियतो मुनिः ।
गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत् ॥ २३
संनियम्येन्द्रियग्रामं गोष्ठे भाण्डमना इव ।
एकाग्रश्चिन्तयेन्नित्यं योगान्नोद्वेजयेन्मनः ॥ २४
येनोपायेन शक्येत संनियन्तुं चलं मनः ।
तं तं युक्तो निषेवेत न चैव विचलेत्ततः ॥ २५
शून्या गिरिगुहाश्चैव देवतायतनानि च ।
शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत् ॥ २६
नाभिष्वजेत्परं वाचा कर्मणा मनसापि वा ।
उपेक्षको यताहारो लब्धालब्धे समो भवेत् ॥ २७
यश्चैनमभिनन्देत यश्चैनमपवादयेत् ।
समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम् ॥ २८
न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत् ।

---

स्यैव भ्रमणमिव वा ॥ Cp : आवर्तो विषयान्तररसास्वादः । ❀ — b) Ś1 K1. 2. 4 V1 Bo Ds1 M1 घ्राणं; K7 घ्राण-; Da4 घ्राणः (for घ्राण-). D5 -दर्शनैः. — c) Ś1 K1. 2 V1 Bo. 8 रसस्पर्शौ; D7 T1 G1 रसैः स्पर्शः; T2 M5 रसे स्पर्शे (for रसस्पर्शे). — d) Da3. a4 शीतोष्ण-; D7 T1 G1 °ष्णो (D7 °ष्णौ) (for °ष्णे). K2 मरुताकृतिः.

22 a) Ś1 K1. 7 D4. 6. 9 प्र(K1 D4. 6. 9 प्रा)तिभान्; K2. 4 प्रतितान् (for °भाम्). Ś1 K1. 2. 4 उपसंसर्गाद् (for °सर्गांश्च). D7 T1 G1. 3. 6 प्रतिहारापस(G1 °व)-र्गांश्च. ❀ Ca : प्रतिभा कवित्वोत्कर्षः ॥ Cn : सकलशास्त्रार्थभानम् । ❀ — b) Ś1 K1. 2. 4 उप- (for [अ]प्युप-). D7 T G1. 3. 6 M1. 5–7 प्रतिसंहृत्य योगतः. — c) K6 Dn4 तास् (for तांस्). K2 अनामृत्य (sic); Ds1 D4. 7. 9 T1 G1. 3. 6 °वृत्य (for °दृत्य). — d) K4 Da3. a4 Ds D2. 3. 8 आत्मन्येव; K6 आत्मने च; V1 Bo. 6–9 D4 स्वात्मनेव; D7 T G1. 3. 6 M5 मनसैव; M1. 6. 7 सोऽत्मनैव (for स्वा°). D4 [अ]भि- (for नि-). D5 -वर्धयेत् (for -वर्त°).

23 a) D7 आर्यात् (for कु°). K1. 2 परिचरं; Da4 °चयो (for °चयं). Ś1 K1. 2 योगी (for योगे). — b) K4. 6. 7 Bo. 6–9 Dn1. n4 Ds D2–4. 8. 9 M5. 6 Cn त्रैकाल्ये; Da3. a4 °ल्य-; D5 °लो; D6 °ले; M1 °ल्यो (for °ल्यं). ❀ Cn : त्रैकाल्ये, प्रातः पूर्वरात्रे अपररात्रे च ॥ Cp : त्रैकाल्ये, त्रिकालनिर्वाह्ये । ❀ — d) M1 वृक्षाग्र्येषु.

24 b) K6 कोष्ठं; K7 B6 (marg. as in text). 7. 8 (marg.). 9 Dn1. n4 Ds D2. 3. 8 Cn (gloss : हृदयपुण्डरीके) Cp (gloss : गृहाभ्यन्तरे; Cpp as in text) Cs कोष्ठे (for गोष्ठे). D7 T G1. 3. 6 M5 भांडं मनाग् (for भाण्डमना). K2 गोष्ठे गोपोर्जुनीमिव; M1. 6. 7 कोष्ठे भांडं (M7 कांडे) यथापि च. ❀ Ca : गोष्ठे गोसमूहस्य मध्ये यथा दुग्धादिपूर्णभाण्डे अनेकेभ्यो गोभ्य एकमना रक्षितुं चिन्तयत्येवमनेकोपसर्गपराहतमात्मतत्त्वमेकाग्रश्चिन्तयेत् । ❀ — c) K2. 4. 6 Bo. 8 Da4 Dn1. n4 Ds D2. 3. 8 T1 G1. 6 M1. 6 एकाग्रं (for °ग्रश्). K6 विनयेन्; G1 च जयेन् (for चिन्तयेन्). — d) K2 उद्वेजयेन्; V1 B8 D4. 9 नोद्रेच° (for नोद्वेज°).

25 Ś1 K1. 2. 4 om. (hapl.) 25[ab]; V1 reads the same on marg. — b) K6 संनियंतं. D6 चलेन् (for चलं). B8 नियंतुं चंचलं मनः. — c) K4. 6 V1 Bo. 6. 7. 9 Da3. a4 Dn1 Ds D2. 3. 8 तं च; B8 तत्त्व-; Dn4 तथ; D7 T G1. 3. 6 M1. 5–7 तत्तद् (for तं तं). K4 B7 Dn1 Ds D2. 3. 8 मुक्तो (for युक्तो). — d) K6 निश्चलेत्; T2 विचरेत्; M7 विमलेत् (for विच°).

26 a) M1. 6 शून्यागार- (for शून्या गिरि-). Ds -गुहा (for -गुहाश्). — b) Dn1 दैवतायतनानि च. — D5 om. (hapl.) 26[cd]. — c) Da4 चैकाग्रे; Ds1 D4 वैकाग्रो. M1. 6 क्षेत्रारण्यानि चैकाग्रो. — d) G3 निवासाग्रम् (for °सार्थम्). K7 D4. 9 उपाक्रमेत् (for उप°).

27 a) K6 नाभियजेत्; Dn1 D8 Cp (gloss : आत्मीयत्वेन न गृह्णीयात्) °स्वजेत्; Dn4 °सज्येत्; D4. 9 °ष्यजेत्; M5 °षज्येत् (for °ष्वजेत्). Ś1 K1. 4 परां (K4 °रं) वाचं (for परं वाचा). ❀ Ca : नाभिष्वजेत् न पीडयेत् । ❀ — b) K7 D4–6. 9 T2 M1. 5–7 तथा; V1 गिरा; Ds1 D8 [अ]पि च (for [अ]पि वा). D7 T1 G1. 3. 6 मनसा कर्मणा तथा. — c) K7 D4. 6. 9 जिताहारो (for यता°). — d) K1 लुब्धालुब्धे; D7 T G1. 3. 6 M1. 5–7 लब्धालब्ध- (for °लब्धे).

28 a) Ś1 K1. 4 न (for यश्). Ś1 K1. 2 D7 T1 G1. 3. 6 अभिनिंदेत (for °नन्देत). — b) B7 अति-; Da4 अपि; D7 T1 G1. 3. 6 अभि-; Ca अव- (for अप-). K7 D9 -वाहयेत् (for -वादयेत्). ❀ Cn : अपवादयेत्

समः सर्वेषु भूतेषु सधर्मा मातरिश्वनः ॥ २९
एवं सर्वात्मनः साधोः सर्वत्र समदर्शिनः ।
षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्तते ॥ ३०
वेदनार्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः ।
एतस्मिन्निरतो मार्गे विरमेन्न विमोहितः ॥ ३१
अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥ ३२
अजं पुराणमजरं सनातनं
यदिन्द्रियैरुपलभते नरोऽचलः ।
अणोरणीयो महतो महत्तरं
तदात्मना पश्यति युक्त आत्मवान् ॥ ३३
इदं महर्षेर्वचनं महात्मनो
यथावदुक्तं मनसानुदृश्य च ।
अवेक्ष्य चेयात्परमेष्ठिसात्म्यतां
प्रयान्ति यां भूतगतिं मनीषिणः ॥ ३४ C. 12. 8803 B. 12. 241[40] 36 K. 12. 246. 36

इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

---

निन्देत्, स्वार्थे णिच् । ❀ — c) B8 (marg.) मनस्तयोश्र (for सम°). Dn4 चाशु; D5 वापि (for चापि).

29 a) M1.6.7 प्रहृष्येत्तु (for °ष्येत). — b) K4 lacuna for नालाभेषु. K7 D4.6.9 M1.5–7 वि-; D7 T1 G1.3.6 [अ]थ; T2 [अ]व- (for च). Ś1 K1.2.4 V1 B8 (marg. as in text) D6 संज्वरेत्; B6 (marg.) चिरं तपेत् (for चिन्तयेत्). — d) K2 मातरिश्वना; D6 °रि-ष्वनः. ❀ Ca: मातरिश्वनो वायोः सधर्मा सदृशः । सर्वं स्पृशन्नपि शुचिः गमनशीलो वा । ❀

30 a) Ś1 K1.2 D5 सर्वात्मना; K6 B0.9 सुस्था-त्मनः; V1 B6–8 Da3.a4 Dn1.n4 Ds D2.3.8 स्वस्था°; M7 धर्मा° (for सर्वा°). B9 Da4 Dn4 साधो. — b) K2 -दर्शितः (for °नः). — c) Da4 Dn4 D6 षण्मासा (for °सान्). — d) Ś1 K2 V1 -ब्रह्माभि-; K1 -ब्रह्मादि- (for °ति-).

31 a) K1 वेदनांताः; D6 °नार्तैः; D7 T1 G1.3.6 अनंताश्च (for वेदनार्ताः). V1 परान् (for प्रजा). Ds1 दृष्टाः; D6 सृष्ट्वा (for दृष्ट्वा). — c) Ś1 K1.2.6 V1 B6.7.9 Da3 M7 एकस्मिन् (for एत°). V1 B0.7–9 Da3 Dn1.n4 Ds D2.3.8 विरतो; Da4 विस्तरे; D5 अंतरे; G1 अंतरतो (hypermetric) (for निरतो). Ds1 D8 मार्गौ (for मार्गे). — d) B0 Dn1.n4 Ds D2.3.8 च (for the second वि-). K7 D4.5.9 विहरेद् (D5 °त)-विमोहितः; D6 बिहारादवमो°.

32 a) Ś1 K1.2 D8 (marg. as in text) धर्माप-; K6 V1 D7.9 T G1.3.6 M7 वर्णाप- (for वर्णाव-). Ś1 -कृष्टस्य; Ca -कृष्टा तु (for -कृष्टस्तु). ❀ Ca: वर्णाव-कृष्टाः शूद्राः संकीर्णजातयो वा । ❀ — b) D6 नाडी (sic) (for नारी). — d) Da2 गच्छेते; Da4 °त्य (for तां). D4 (also as in text) पदं (for गतिम्). D7 T G1.3.6 M1.5–7 गच्छेतां परमं पदं.

33 a) Dn4 अंतं (for अजं). K7 B8 (marg. as in text) D4.5.7.9 T1 G1.3.6 परमं (for अजरं). — b) K6 D5 यदींद्रियैर्; D7 T G1.3.6 यतेंद्रि° (for यदि-न्द्रि°). K1 B8 Dn1.n4 Ds D2.3.5.8 उपलभेत; K6 V1 °लभ्यते; B6.7.9 Da3.a4 लभ्यति वा; D7 T G1.3.6 M1.5–7 उपलभ्येत (for °लभते). K6 V1 B0 च निश्चलैः; B8 Dn1.n4 D3 D2.3.8 T2 G3.6 M1.5–7 निश्चलैः; Da4 [आ]त्मनोष्कलः; D5 नरोवलं; D7 T1 G1 निश्चये (for नरोऽचलः). K7 D4.6.9 यदिंद्रियैरनुपलभ्यमीश्वरैः. — c) Ś1 K1.2.4 M1.6 अणोरणीयान् (for °णीयो). K2 मरुतो (for महतो). Ś1 K1.2.4 महत्तरस्. — d) K6 B7.9 Da3 D5.6 Cp (Cpp as in text) तमात्मना; M7 तमात्मानं (for तदात्मना). K6 B0 Da3.a4 Dn1 Ds D2.3.8 मुक्तम्; B8 D7 T1 G1.3.6 युक्तम् (for युक्त).

34 a) Ś1 K1.2.4 Da3.a4 इमं (for इदं). Da3.a4 महर्षिर्. — b) M1.6 यथा यदुक्तं (for यथावदुक्तं). Ś1 K1.2.4.7 विमृश्य (K1.2 °ष्य); D4.6.9 [अ]नुमृश्य; G3.6 M7 [अ]नुपश्य (for °दृश्य). B0.8 (marg. as in text) ते (for च). Dn4 यथावदुक्तमनुदृश्यते च. ❀ Cn: अनुदृश्य गुरुवचनमनु शब्दतोऽर्थतश्च ज्ञात्वा । ❀ — c) K4.6 V1 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.5.8 चेमां; B8 चैनां; B8 (marg.) ते मां; D7 T1 G1.3.6 चैतत् (for चेयात्). K2.4 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.7.8 T1 G1 M1.6.7 -साम्यतां; K6 -सात्वतां; V1 B8 D5 T2 G3.6 -सात्मतां (for -सात्म्यतां). — d) K4.6 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 चाभूत-; D5 त्वं भूत-; D4.6 यां तत्त्व- (for यां भूत-). D2 -गतिर्;

# २३३

C. 12. 8833
B. 12. 242[1]. 1
K. 12. 247. 1

शुक उवाच ।
यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥ १
एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे ।
एतत्त्वन्योन्यवैरूप्ये वर्तते प्रतिकूलतः ॥ २
भीष्म उवाच ।
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ॥ ३
यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ॥ ४
अस्ति धर्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिदं मम भवेदथ ॥ ५
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च सुभाषितः ॥ ६
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ७

---

D7 ·मतिर्; T1 ·मतिं; G1 पतिं; M7 ·मतीर् (for ·गतिं). Da3 मनीषिणाः. ❀ Ca (reading चाभूतगतिं): अभूतगतिं तत्त्वगतिम् । ❀

Colophon: G2 missing; K3. 5 B1–4 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. —*Sub-parvan:* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1. 3. 6 M1. 5–7 मोक्षधर्म. —*Adhy. name:* Ś1 K1. 2. 4 शुकप्रश्नः; K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M5 शुकानुप्रश्नः; M1. 6 शुकानुप्रश्ने ब्रह्मप्रतिपादनं; M7 ब्रह्मप्रतिपादनं. —*Adhy. no.* (figures, words or both): K6 D3 M1. 6. 7 65; Dn1 Ds D7 T1 G1. 3. 6 M5 67; T2 81. —*Śloka no.:* Dn1. n4 35; D8 36.

## 233

☞ This adhy. is missing in G2 (cf. v. l. 12. 222. 19). —With this adhy., cf. Brahmapurāṇa (Ānandāshram) 236. 1–20.

1 a) T1 इतीदं; G1 य इदं (for यदिदं). Da4 देव· (for वेद·). —After $1^{ab}$, D7 T G1. 3. 6 M5 read $2^{cd}$. —c) D4. 9 गतिं (for दिशं). D7 T G1. 3. 6 याति (for यान्ति). —d) Da4 कां वा; D7 T1 G1. 3. 6 यां च (for कां च). T2 गच्छति.

2 D7 reads 2–4 on marg. —a) Da3 वेदितुम् (for वै श्रोतुम्). —b) K7 D4. 6. 9 भगवा(D6 °व)न् (for तद्भवान्). —D7 T G1. 3. 6 M5 read $2^{cd}$ after $1^{ab}$. —c) K4. 6 Bo. 7. 8 Dn1. n4 Ds D3. 5. 7. 8 चान्योन्य·; K7 V1 D4. 6. 9 T2 G1. 3. 6 M1 अन्योन्य·; B6 T2 M5–7 ह्यन्योन्य·; B9 वान्योन्य· (for त्वन्योन्य·). D5. 7 T G1. 3. 6 ·वैरूप्यं (for °प्ये). —d) K4 Bo. 6–8 Dn1. n4 Ds2 D2. 3. 8 वर्तेते (for वर्तते).

3 B9 om. 3–5. D7 reads 3 on marg. Ś1 K1. 2 T1 G1 om. the ref. —a) G1 इत्युक्तं. —c) D7 चैतौ (for एतौ).

4 B9 om. 4 (cf. v. l. 3). D7 reads 4 on marg. —a) T G1. 3. 6 याति (for यान्ति). —b) K7 Da4 D4. 6. 9 गच्छंति च (by transp.); T2 G1 च गच्छति. —Before $4^{cd}$, D7 T1 G1. 3. 6 ins. व्यासः. —c) D7 T G1. 3. 6 शृणु च (for शृणुष्व). K6 विप्र; Bo. 8 (marg.) Dn1. n4 Ds D2. 3. 6. 8 वत्स; B8 (orig.) भूत्वा (for पुत्र). K7 D4. 5. 9 शृणु त्वमेकाग्रमना (D4 °ता). —d) Ś1 K1. 2. 4 गुह्यमेतदनंतरं; K7 T1 G1. 3. 6 गह्वरं ते तदंतरं; D7 गह्वरं तदनंतरं.

5 B9 om. 5 (cf. v. l. 3). —a) B8 (marg.) स्वस्ति (for अस्ति). B8 कर्म (for धर्म). K6 B6–8 Da3. a4 D5. 6 ह्युक्तं; K7 D4. 7. 9 T G1. 3. 6 M1. 5–7 ह्युक्त्वा (for प्रोक्तं). —b) V1 B8 (marg. as in text) तत्रैव; D7 T2 G3. 6 [इ]त्यत्र च (for °त्रैव). Da4 नास्तितश्चैव यो वदेत्; T1 नास्तीत्यत्र वचो वदेत्. —d) D6 इमं (for इदं). K4 T1 यथा; T2 अपि (for अथ).

6 a) K7 D4. 6. 9 तात; D5 अत्र; M5 अपि (for अथ). —d) B8 (marg.) सु·; B9 स्व· (for च). K6. 7 B6–9 D4. 5. 9 Cp (gloss: विस्पष्टतया भाषितः) विभाषितः; D6 सुभावतः; D7 T G1. 3. 6 M1. 5–7 व्यवस्थितः (for सुभाषितः). ❀ Ca (reading स्वभावितः): स्वभावितः, स्वयं मयोक्त इत्येके पाठमर्थं च मन्वते, तच्चिन्त्यम् । ❀

7 D7 G1. 3. 6 om. $7^{a}$–$8^{b}$. —a) Da4 बाध्यते (for ब°). —b) K6 V1 B7. 9 Da3 D4. 6 तु वि·; K7 B6

कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ॥ ८
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।
तेन ते देहजालानि रमयन्त उपासते ॥ ९
ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥ १०
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ ११
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ १२
यत्र तद्ब्रह्म परममव्यक्तमजरं ध्रुवम् ।
अव्याहतमनायासममृतं चावियोगि च ॥ १३
द्वंद्वैर्यत्र न बाध्यन्ते मानसेन च कर्मणा ।
समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः ॥ १४
विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः ।
विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ॥ १५ C. 12. 8818 B. 12. 242[1]. 15 K. 12. 247. 15

---

D5.9 T M5 च वि-; Da4 भुवि; Ds M1.6.7 च प्र- (for तु प्र-). — d) Dn4 D5 पर- (for पार-). K2.4 -दर्शनः; K7 D9 -दृश्वनः (for -दर्शिनः).

8 D7 G1.3.6 om. 8ab (cf. v. l. 7). — c) Da4 विद्याया (for विद्यया). D3 व्यक्तम् (for नित्यम्). — d) K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.8 अव्यक्तं (for अव्ययो). K6 B6.7.8 (marg.).9 Da3.a4 D5 ह्यक्षरात्मकः (B9 °जं); K7 V1 D4.6.7.9 T G1.3.6 M1.5–7 ह्य(M7 [ऽ]व्य)क्षरात्मकः; Bo.8 (orig.) Dn1.n4 Ds D2.3.8 ह्यव्ययात्मकं (for °त्मकः).

9 a) K4 त्वेकं; D7 T1 G1 3.6 त्वेते (for त्वेके). — b) Ś1 K1.2 चाल्प-; Da3.a4 अल्प- (for स्वल्प-). K6 Bo.6.7.8 (marg.).9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 -बुद्धिरता; B8 (orig.) -बुद्धितमा; D7 T G1.3.6 M5 °तया (for °तरा).

10 a) K4.6 Bo Dn1.n4 Ds D2.3.8.9 स्म (for तु). Da4 D4 बुद्धि- (for बुद्धिं). — b) K7 D4.6.9 धर्मे; Da4 कर्म- (for धर्म-). K7 D4.6.9 निपुण-; V1 Bo.6 (marg. as in text).7.9 Dn4 D3 G1 M7 -नैपुण- (for °ण्य-). V1 -दर्शनाः (for -दर्शिनः). ❀ Cs: धर्मनैपुण्यदर्शिनः, धर्मयोः प्रवृत्तिनिवृत्तिरूपयोर्नैपुण्यं संसारप्रदानमोक्षप्रदानशक्तित्वं, तत् पश्यन्तः। ❀ — c) V1 M1 transp. न and ते. D7 T G1.3.6 M5–7 ते कर्म न प्रशंसंति. — d) Ś1 K1.2.4 नद्यां कू(K1 रू)पं (by transp.); K6 कूपे नद्यां; D4.9 T1 G1.3.6 रूपं नद्यां; T2 M1.5–7 कूपं नद्याः. Bo पिबन्नपि; D2.8 पिबंति च; D5.7 °ति ये (for पिबन्निव).

11 D5 om. 11a–12b. — a) Da4 Ds1 D7 T2 कर्मणा (T2 °णां) (for °णः). — b) D4 सुखदुःख- (for °दुःखे). — c) T2 विद्यायास्. — d) Da4 om. (hapl.) from न up to गत्वा (in 12b).

12 Da4 om. up to गत्वा; D5 om. 12ab (for both, cf. v. l. 11). — a) Ś1 K1.2.4 म्रियेत (for म्रियते). — b) Da4 वर्धते (for जायते). — c) K4 जीर्यंते. K6 Bo.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.8 न पुनर्जाय(K6 Bo.9 °र्जीर्यं)ते यत्र. — d) M7 तत्र (for यत्र). K6 Da4 Dn1.n4 Ds D2.3 वर्तते; Bo वर्तयेत् (for वर्धते).

13 a) D5 तत्र (for यत्र). M1.5.6 तद्याति (M6 °द्यांति) (for यत्र तद्). D7 T G1.3.6 M7 तद्याति (G1 °द्यामि; M7 °द्यांति) परमं ब्रह्म. — b) D7 T G1.3.6 पुराणम् (for अव्यक्तम्). K6.7 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–6.8.9 अचलं (for अजरं). — c) Ś1 K1.2.4 अनाहतम्; K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.8 अव्याकृतम्; K7 D6 °हृतम् (for °हतम्). — d) Da3.a4 अनृतं; Dn1 Ds D2.6.8 Cn (Cnp as in text) अव्यक्तं (for अमृतं). Bo च त्रियोगि; Da4 M1.5.6 चापि योगि; Ds D6 अवियोगि; D4 वावि° (for चावि°). D7 T1 G1.3.6 अमृतत्वं च विंदति.

14 a) D7 G1.3.6 द्वंद्वे (for द्वंद्वैर्). K4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 D2–6.8.9 न यत्र (by transp.); B6 (marg.) न नित्यं; D7 G1 यत्र नि-. B7 वध्यंते; D4.7 T2 G1.3.6 M5 बध्यंते (for बा°).

15 a) K2 यः (for ऽन्यः). — b) Ds [ऽ]क्षरः (for ऽपरः). — c) K1 चंद्रसमं (for °मसं). K7 D4.9 स्पर्शे; Da4 दृशे (for दर्शे). — d) Ś1 K1.2.4 वृतं (for स्थितम्). — After 15, D7 T G1.3.6 Kumbh. ed. ins.:

682* विद्यामयं तं पुरुषं नित्यं ज्ञानगुणात्मकम्।

16 a) K6 V1 Bo.8 यदेतद्; Da4 तदेव; M7 तदैतद् (for तदे°). ❀ Ca: ऋषिणा वेदेन ॥ Cn: बृह-

C. 12. 8819
B. 12. 242[1]. 16
K. 12. 247. 16

तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते ।
नवजं शशिनं दृष्ट्वा वक्रं तन्तुमिवाम्बरे ॥ १६
एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमानिति तं विद्धि तात कर्मगुणात्मकम् ॥ १७
देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीयान्नित्यं त्यागजितात्मकम् ॥ १८
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ।
जीवमात्मगुणं विद्यादात्मानं परमात्मनः ॥ १९
सचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्रावर्तयद्यो भुवनानि सप्त ॥ २०

इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

---

दारण्यक( 1. 5. 14 )दर्शिना याज्ञवल्क्येन । ❀ —$^{b}$) D7 T1 G1 -नीयते ( for -मीयते ). —$^{c}$) K6 न च तं; B7. 8 D7 T G1. 3. 6 M5 नवं च ( B7. 8 तु ); Da4 नरजं ( for नवजं ). K2 नवजशिशिनं दृष्ट्वा ( sic ). —$^{d}$) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 T2 M1. 5–7 वक्रतंतुम्; D7 T1 G1. 3. 6 शतक्रतुम् ( for वक्रं तन्तुम् ).

17 $^{a}$) ❀ Ca : भूतानि पञ्च षडिन्द्रियाणि इत्येकादश विकाराः । ❀ —$^{b}$) Da4 कथा-; D7 G1. 3. 6 M7 काल- ( for कला- ). K7 -संभाव- ( for -संभार- ). K1 -संभृताः; K2 -संव्रतः; K7 D5 -संवृतः; Da4 -संस्मृतः; Ds1 -संघृतः ( for -संभृतः ). —$^{c}$) K6 V1 इव ( for इति ). — After 17, D7 T G1. 3. 6 M1. 5–7 Kumbh. ed. Cv ins.:

683* तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ।
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकम् ।

[ ( L. 1 ) D7 T1 G3. 6 तन्व्यां हि; G1 तस्यां हि ( for तस्मिन्यः ). G1. 3. 6 ह्यग्निं. G3. 6 [आ]हितं; M1. 6 [अ]र्पितं. — ( L. 2 ) T2 तु ( for तं ). T2 ज्ञान- ( for त्याग- ). ]

18 $^{a}$) K2 वः ( for यः ). Ś1 K1. 4 संशितस्; V1 B8 ( marg. as in text ) D4. 5. 9 M7 संस्थितस्; D6 संस्तुतस् ( for संश्रितस् ). D7 T1 G1. 3. 6 ह्यस्मिन् ( for त° ). Cp देवोपमः श्रितो ह्यस्मिन्. —$^{b}$) K6 -बिंदुम् ( for -बिन्दुर् ). —$^{c}$) B8 ( marg. ) क्षेत्रज्ञस्; Da4 क्षेत्रे ज्ञं. Dn4 सं- ( for तं ). K7 D4. 5. 7. 9 T G1. 3. 6 विजानीहि ( for °यान् ). —$^{d}$) G1 M1. 6 नित्य- ( for नित्यं ). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 6. 8 योग-; T2 G3 M1. 5–7 ज्ञान- ( for त्याग- ). K7 D9 -गुणात्मकं ( for -जिता° ). D5 नित्यं त्यागायतात्मकं.

19 K7 om. ( ? hapl. ) 19$^{ab}$. D4 transp. 19$^{ab}$ and 19$^{cd}$. —$^{b}$) D7 T1 G1 चैव ( for जीव ). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1. 3. 6 M5 -गुणात्मकं ( G1 °कः ) ( for -गुणानिमान् ). —$^{c}$) Da4 आत्मगुणे ( for °गुणं ). K7 D6 विंद्याद् ( for वि° ).

20 $^{a}$) D7 T G1. 3. 6 M1. 5–7 अचेतनं ( for स° ). B6. 8 ( both marg. ) Ca ( Cap as in text ) -गणं ( for -गुणं ). ❀ Cn : जीवगुणं जीवगुणेन चैतन्येन युक्तम् ॥ Cv : जीवगुणमचेतनम् स्वनिष्ठचैतन्यस्यापि परमाधीनत्वादचेतनमिव जीवगुणं वदन्ति । ❀ — B9 om. ( hapl. ) 20$^{bc}$. —$^{b}$) Ś1 K1. 2. 4 यश्; T2 न ( for स ). K6 Bo. 8 ( marg. ) Da3. a4 Dn1. n4 Ds D2. 3. 8 जीवयते ( for चेष्ट° ). —$^{c}$) D7 T G1. 3. 6 अतः ( for ततः ). Ś1 K1. 2. 4 क्षेत्रविदं; D4 °विदा ( for °विदो ). —$^{d}$) K6 प्रावर्तयन्; V1 Bo. 6 ( marg. ). 7. 8 ( marg. ). 9 Dn1. n4 D2. 3. 7. 8 T G1. 3. 6 M1. 7 प्राकल्पयद् ( for प्रावर्तयद् ).

Colophon : G2 missing; K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan* : Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 T G1. 3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name* : Ś1 K1. 2. 4 शुकप्रश्नः; K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 शुकानुप्रश्नः; M1. 6. 7 शुकानुप्रश्ने विद्याकर्मफलभेदः; M5 शुकानुप्रश्ने क्षराक्षरविवेकः. — *Adhy. no.* ( figures, words or both ): K6 D3 M1. 6. 7 66; Dn1 D7 T1 G1. 3. 6 M5 68; Dn4 Ds2 67; Ds1 6 ( sic ); T2 82. — *Śloka no.*: Dn1. n4 D3 20.

# २३४

शुक उवाच ।
क्षरात्प्रभृति यः सर्गः सगुणानीन्द्रियाणि च ।
बुद्ध्यैश्वर्याभिसर्गार्थं यद्ध्यानं चात्मनः शुभम् ॥ १
भूय एव तु लोकेऽस्मिन्सद्वृत्तिं वृत्तिहैतुकीम् ।
यया सन्तः प्रवर्तन्ते तदिच्छाम्यनुवर्णितम् ॥ २
वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च ।
कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ॥ ३
लोकवृत्तान्ततत्त्वज्ञः पूतोऽहं गुरुशासनात् ।
कृत्वा बुद्धिं वियुक्तात्मा त्यक्ष्याम्यात्मानमव्यथः ॥ ४
व्यास उवाच ।
यैषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् ।
एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ॥ ५
ब्रह्मचर्येण वै लोकाञ्जयन्ति परमर्षयः ।
आत्मनश्च हृदि श्रेयस्त्वन्विच्छ मनसात्मनि ॥ ६ C. 12. 8829 B. 12. 243[2]. 6 K 12. 248. 6

## 234

1 a) G2 पुरा (for क्षरात्). V1 प्रभृतयः (for °ति यः). Ś1 K1. 2 यत्सर्वं (for यः सर्ग.). ❀ Cn: क्षरात् प्रधानात्। ❀ — b) K1 Dn4 सगुणान् (for °णानि). — c) K6 Bo. 6. 7 Dn1 D7. 8 G2 M1. 5. 7 बुद्ध्यैश्वर्याति- (D7 G2 M5. 7 °दि-) (for °र्याभि-). K6 Bo. 6–8 Dn1. n4 Ds D2. 3. 5. 6. 8 -सर्गोयं; V1 B9 -सर्गोथ; D7 T G1–3. 6 M1. 5–7 -संसर्गः (for -सर्गार्थं). Da3. a4 बुद्ध्यैश्वर्यवि (Da4 °नि) सर्गार्थं. ❀ Ca: बुद्ध्यैश्वर्यमणिमादि। ❀ — d) K6 V1 Bo. 6–9 Dn1. n4 Ds D2–5. 7. 8 T G1–3. 6 M1. 5–7 प्रधानश् (D4 T G1. 3. 6 M6. 7 °नं) (for यद्ध्यानं). D7 T1 G1–3. 6 चात्मना (for °नः). K6 V1 Bo. 6–9 Dn1. n4 Ds D2–8 T G1–3. 6 M1. 5–7 श्रुतं (for शुभम्).

2 a) K7 भूत (for भूय). — b) Da4 सद्वृत्तं (for °त्तिं). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 Cp काल-; D6 मोक्ष- (for वृत्ति-). Ś1 K1. 2. 4. 7 D9 M5 -हेतुकीं (M5 °कां); B7 Dn4 -हैतुकं (Dn4 °कां) (for -हैतुकीम्). D7 T G1–3. 6 सद्वृत्तिं है (D7 G1 °त्तिं हे-; G2 °त्तिर्हे) तुकीं (G2 °की) क्रियां (G2 °या). ❀ Cn: कालहैतुकीं युगानुसारिणीम् । ❀ — c) K2 सर्वांतः (hypermetric) (for सन्तः). — d) K3 तद्य-च्छामि; D7 T G1. 3. 6 M5. 7 तामि° (for तदि°). K4. 7 B6. 8 (marg.) Dn1. n4 Ds D2–6. 8. 9 G1 -वर्तितुं; K6 B7. 8 (orig.). 9 Da3. a4 D7 T G3. 6 M1. 5. 7 -वर्णितुं; V1 Bo -वर्तितं (for -वर्णितम्). G2 तामिहाद्यानुवर्णय.

3 a) K2 वेदैर् (for वेदे). Da3. a4 तत् (for तु). — b) K6 धर्म (for कर्म). — c) D7 विजानीयात् (for °यां). — d) Ds तत्त्वं; D4–6. 9 तन्मे (for तच्च). K6 अर्हति. D7 T G1–3. 6 M1. 5–7 तद्भवान्वक्तुमर्हति (G2 °सि).

4 a) K4 -कर्ताश्च (for -वृत्तान्त-). K6 B3. 8 Da3. a4 -तत्त्वज्ञ-; Dn4 -तत्त्वज्ञात्; D7 T G1–3. 6 M1. 5–7 -वृत्तज्ञः (for -तत्त्वज्ञः). — b) Ś1 K1. 2. 4 तव (for गुरु-). — c) K4. 6 V1 B6–9 Dn1. n4 Ds D2. 3. 5. 8 T2 G2 M1. 5–7 विमुक्तात्मा; K7 D4. 6. 7. 9 T1 G1. 3. 6 विशु- (D6 °बु) द्धात्मा; Bo स युक्तात्मा (for वियु°). — d) V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 (before corr. as in text) D2. 3. 5. 8 द्रक्ष्यामि; D4 त्यक्षामि (for त्यक्ष्यामि). K7 D4. 9 अप्यथ; V1 B8 (orig.) D7 T G1–3. 6 M1. 6. 7 आत्मना; Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 अव्ययं; B6 (marg.) आत्मनि; D6 अव्ययं (for °थः). K6 विमुक्तात्मानमव्ययं.

5 a) K4. 6 Bo. 6. 7. 9 Da4 Dn1. n4 Ds D2–6. 8 यथा; V1 M1 येषां; Da3 D7 T G1. 3. 6 M7 एषा; G2 एका; Ca यैषा (as in text). Ś1 K1. 2 बुद्धिः (for वृत्तिः). — b) Ś1 K2 परस्ताद्; G2 प्रय° (for पुर°). Ś1 K1. 2 D7 G1. 2 ब्रह्मणः (K2 °णाः); K4 ब्राह्मणः (for ब्रह्मणा). — c) M1. 5. 6 सैषा (for एषा). M1. 6 पूर्वतरा; M7 °परैः (for °तरैः). K6 G2 सिद्धिर् (for सद्भिर्).

6 a) Ds2 ब्रह्मचर्यं च (for °चर्येण). — c) K6. 7 V1 Bo. 6 (marg.). 7–9 Dn1. n4 Ds D2–6. 8. 9 ततः; B6 Da3. a4 तथा (for हृदि). K6 Bo. 6–9 Da3 Dn1. n4 D2. 3. 8 श्रेयांसि; Da4 श्रेयाणि; D5 श्रेयान् (for श्रेयस्). — d) K4 त्वन्विच्छन्; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3. 5. 7. 8 T G1. 3. 6 M5. 7 अन्विच्छ (Bo °च्य) न्; K7 D4. 6. 9 ह्यन्विच्छन्; Ds चान्विच्छन्; M1. 6 तन्विच्छन् (for त्वन्विच्छ). G2 आस्विञ्जन्मनि सात्मनः.

C. 12. 8830
B. 12. 243(2). 7
K. 12. 248. 7

वने मूलफलाशी च तप्यन्सुविपुलं तपः ।
पुण्यायतनचारी च भूतानामविहिंसकः ॥ ७
विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये ।
काले प्राप्ते चरन्भैक्षं कल्पते ब्रह्मभूयसे ॥ ८
निःस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे ।
अरण्ये विचरैकाकी येन केनचिदाशितः ॥ ९

शुक उवाच ।

यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥ १०
इत्येतच्छ्रोतुमिच्छामि भगवान्प्रब्रवीतु मे ।
कर्मणामविरोधेन कथमेतत्प्रवर्तते ॥ ११

भीष्म उवाच ।

इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम् ।
ऋषिस्तत्पूजयन्वाक्यं पुत्रस्यामिततेजसः ॥ १२
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम् ॥ १३
एको य आश्रमानेताननुतिष्ठेद्यथाविधि ।
अकामद्वेषसंयुक्तः स परत्र महीयते ॥ १४

---

7 a) G2 तेन (for वने). — b) Ś1 K1 तप्यस्य; K2 तस्य सु-; K4 तप्ये स्व-; K7 D4–6. 9 तद्वा सु-; B8 D7 T G1–3. 6 M7 तप्यस्व (for तप्यन्सु-). B7 M7 -विमलं; D7 T G1–3. 6 परमं (for -विपुलं). — d) D6 अवहिंसकः (for अवि°).

8 With 8, cf. 12. 9. 22; Manu. 6. 56. — a) Ś1 सत्रमुसले; K1. 2. 4 सन्नमुसुले; K6 V1 B6–9 Da3 °मुषले; K7 °मूशले; Da4 °मुखले; D4–6. 9 °मुशले (D6 °लं) (for °मुसले). — b) Ds1 G1 वानप्रस्थः; G2 °प्रस्थैः (for °प्रस्थ-). Ds1 प्रतिश्रयेत्. — c) K7 D4. 5. 7. 9 T G1–3. 6 M1. 6 चरेद् (for चरन्). K4. 7 V1 B6–8 Da4 Ds D2–6. 8. 9 G2 भैक्ष्यं (for भैक्षं). — d) Ś1 K4 G3 M7 (*inf. lin.*) कल्पसे; K1. 2 कल्प से; Da4 लक्ष्यसे; M7 (orig.) कल्पने (for °ते). Ś1 K1. 2. 4 -भूतये (for -भूयसे).

9 With 9, cf. Māṇḍūkya-Kārikā 2. 37. — a) K2. 4 निःस्तुतिं (for निःस्तुतिर्). G2 निस्वयं निर्नमस्कारं. — b) K2. 4 परित्यक्त-; M1 °त्यज (for °त्यज्य). Ś1 शुभाशुभः. K1 परित्यक्तशुभाशुभः. — c) K7 D4. 9 अ- (K7 आ)रण्यचरणे( D4. 9 °र ए)काकी. — d) K6 अंशितः; D5 आश्रितः; D6 आसितः (for आशितः).

10 a) Da4 देव- (for वेद-). — b) T2 लोके वादो; G2 लोकवाचा (for °वादे). K1 निरुध्यते. — c) K4 B6 Da3. a4 Dn1 Ds1 D2. 8. 9 वा (for the first च). B6 Da3. a4 वा (for the second च). Dn4 प्रमाणे वा विरुध्येत; D5 अप्रमाणे प्रमाणे वा. — d) K4 विरुते; Dn4 lacuna (for विरुद्धे). K2 विरुद्धे शास्त्रतोर्थतः; B6–8 °द्धे शास्त्रतां गतः (B8 °ते); D7 T G2. 3. 6 °द्धे शास्त्रतः कृतं (T2 कथं).

11 a) B7 Da3 एतत्ते (Da3 °त्तु) (for इत्येतत्). — b) D7 T G1–3. 6 M6 भगवन्; M7 तद्भवान् (for भगवान्). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 प्रमाणं तु( K6 V1 B6. 8. 9 Da3. a4 °णमु-; D6 °णे तु )भयं कथं (Da3. a4 कुतः). — d) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6 8 मोक्षः (for एतत्). D7 G1 प्रवर्धते (for °र्तते).

12 G3 om. the ref. — b) Da4 D6 गंधवत्या. — c) Da4 हृदि (for ऋषिस्). K7 Ds1. s2 (marg. as in text) पूजयद्; M1. 6. 7 पूज्य सद्- (for पूजयन्). — d) Ds1 पुत्राय (for पुत्रस्य). D8 -तेजसा.

13 Before 13, Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3 Dn1. n4 Ds D2–9 T G3. 6 M1. 5–7 ins. व्यास उवाच. — a) K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M5 ब्रह्मचारी गृहस्थश्च (Da4 °स्थ). — c) K6 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 -चारिणः (for -कारिणः). Dn4 सर्व (for सर्वे). — d) ❀ Ca: परमां, तत्त्वसाक्षात्काररलभ्याम्। एतेन कर्मणो ज्ञानेनाविरोधो दर्शितः। या तु कर्मनिन्दैव सा उक्तविधया काम्यनिषिद्धपरतया द्रष्टव्या। ❀

14 a) D4. 9 [ऽ]यम्; D6 तथा (for य). K4. 6 Bo. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 वाप्याश्रमान् (for य आश्र°). G1 एकान् (for एतान्). — b) K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 D2. 3 8 योनुतिष्ठेद्; K7 D4. 9 अनुतिष्ठन्; Ds उपतिष्ठेद्; D7 T G1–3. 6 अधि° (for अनु°). D6 यथा विधिः. — d) K6 Bo Dn1. n4 Ds D2. 3. 8 विधीयते; D7 T1 G1–3. 6 न हीयते (for महीं°).

15 15[ab] = (var.) 12. 20. 4[ao]. D5 om. (hapl.) 15. — a) K7 Dn1 Ds2 चतुष्पदा; Ds1 D4. 9 M1. 5–7 °ष्पादी; D7 T1 G1 °ष्पदे (for °ष्पदी). M1. 7 ह

चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते ॥ १५
आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः ।
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः ॥ १६
कर्मातिरेकेण गुरोरध्येतव्यं बुभूषता ।
दक्षिणो नापवादी स्यादाहूतो गुरुमाश्रयेत् ॥ १७
जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥ १८
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः ।
किंकरः सर्वकारी च सर्वकर्मसु कोविदः ॥ १९
शुचिर्दक्षो गुणोपेतो ब्रूयादिषुरिवात्वरः ।
चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः ॥ २०
नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् ।
न तिष्ठति तथासीत नासुप्ते प्रस्वपेत च ॥ २१

C. 12. 8844
B. 12. 243[2]. 21
K. 12. 248. 21

(for हि). Ś1 Da3 D4. 6 T2 G2 M7 निश्रेणी; D7 निःश्रेणिर्. Dn4 चतुष्पदादिनिःश्रेणी. — b) Da4 D6 प्रतिष्ठिताः. — c) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 6 8. 9 M1. 5. 6 आरुह्य (for आश्रित्य). K1 Da4 निःश्रेणी; D4. 6 T2 G2 निश्रेणीं; D7 निःश्रेणि.

16 a) Da3. a4 आयुषं (for °षस्). K2 D5 च (for तु). — b) K6 Ds1. s2 (before corr.) D5. 6 अनुसूयकः (for अन°). Ś1 K1 Da4 T1 G1. 3 M1. 6 ब्रह्मचर्य( Da4 T1 M6 °र्या )नसूयकः. — d) B8 (marg.) चरेद् (for वसेद्).

17 K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 read 17 after 19. — a) Ś1 K1. 2. 4 धर्मातिरेकेण (K2 °केन; K4 °के च) गुरोर्; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 कर्मातिशेषेण (B8 °देशेन) गुरावू (V1 B9 °रोर्); D5 कर्माविरोधेन गुरोर्; D7 T G1–3. 6 M1. 5–7 कर्मशेषेण तु गुरोर्. — c) Ds2 D6 T2 G1 M1. 5–7 दक्षिणे (for °णो). K4 V1 Bo. 7–9 Da3. a4 Dn1. n4 D2. 3. 5. 6. 8 [ऽ]नप( B8 D6 °य )-वादी; Ds1 [ऽ]नपसादी; Ds2 T G1 नोपसादी (T °दि-); D7 M1. 5–7 नोपवासी; G3. 6 नोपवादी (for नाप°). G2 दक्षिणेनोपसादित्वाद्. — d) Da3. a4 आहुतो; M6 आभूतो. T G1–3. 6 M1. 5–7 आव्रजेत् (for आश्रयेत्). — After 17, M5 reads 22a–23b.

18 a) Da4 G1 जघन्यशायि. — b) K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 T2 G2 M1. 5. 6 उत्थाय (for °यी). Da4 -वेश्मनी. D5 आहूतो गुरुमाश्रयेत् (= 17d). — c) K1 यश्च; D5 पूर्वं (for यच्च). — d) Da4 दानेन (for दासेन).

19 a) Ś1 K1. 4 कृत्यम् (for कृतम्). T1 तं (for तत्). D6 पूर्वं (for सर्वं). D5 कृतकृत्यं च तत्सर्वं. — b) K7 D4. 9 तिष्ठेच्च (for °त). — c) Da4 Dn4 सर्वकारि. K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 स्यात्; D6 lacuna (for च). — After 19, K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 read 17.

20 G3 om. 20a–21b. Ds1 reads 20a–21b twice. — a) K7 D4 -दीक्षा- (for दक्षो). — b) Ś1 K1. 2 भूयाद् (for ब्रू°). K6. 7 V1 Bo. 6–9 Dn1. n4 Ds D2. 3. 5. 8 G2 M1. 5. 6 Cp इष्टम्; Da3. a4 D4. 7. 9 T G1. 6 M7 इषुम् (for इषुर्). K6. 7 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 T G1. 2. 6 M1. 6 7 Cp इवांतरा (V1 Da4 D6 °राः); B8 इवांतरः; D4. 9 इवातुरः; M5 इवांतरं (for इवात्वरः). ❀ Ca: इषुरिवान्तर इति यथा ईश्वरोऽन्तर्गत एवमन्तर्मति भूत्वा ब्रूयात्, न तु बाह्यवचनं वक्तव्यमित्यर्थः ॥ Cp (reading इष्टमिवांतरा; Cpp as in text): अन्तरा निकटे इष्टं प्रियं शनैर्ब्रूयात् । ❀ — Bo om. 20c–21b.

21 For the repetition of 21ab in Ds1, cf. v. l. 20. Bo G3 om. 21ab (cf. v. l. 20). — a) D4–6. 9 अभुक्तवति (for नाभु°). B8 Ds2 D5. 6. 9 नाश्नीयाद् (for चाश्नी°). K1 नानुकुर्वंति चाश्नीयाद्; Da4 नाभुक्तवंती यवाश्नीयाद् (sic). — b) D5 अपीतमपि; D7 T G1–3. 6 M1. 6 न (G1. 2 M1. 6 ना-) पीतवति (for अपीत°). D7 चापिबेत्; G2 वा पि° (for नो पि°). — c) Ś1 K1. 2 अतिष्ठति; K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 M7 Cv नातिष्ठति (for न तिष्ठति). Ś1 K1. 2. 4 च नासीत; K7 D4. 5. 9 तथा तिष्ठेन्; B7 D6 तथाशीत; Da4 यथासीत; M1. 6 तथासीनो (M6 °ने) (for °सीत). ❀ Cv: अतिष्ठति, निद्रातः उत्थानमकुर्वति सति, तथा, यथा निद्राभङ्गो न भवति तथा, आसीत । ❀ — d) Ds2 नास्वपे (for नासुप्ते). K7 D4. 9 M1. 6 प्रस्वपेन्न च; D5. 6 °पीति च; T2 °पेदपि; G2 °पेद्गुरौ (for °पेत च).

22 With 22, cf. Manu. 2. 72. For the sequence in M5, cf. v. l. 17. — b) D6 मृदुः (for मृदु). T2 स्पृशन् (for स्पृशेत्). — c) D7 दक्षिणां (for °णं). Da4 दक्षिणं दक्षिणे चैव. — d) K6 वामं (for सव्यं). K1

C. 12. 8845
B. 12. 243[2].22
K. 12. 248. 22

उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत् ।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत् ॥ २२
अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति ।
इदं करिष्ये भगवन्निदं चापि कृतं मया ॥ २३
इति सर्वमनुज्ञाप्य निवेद्य गुरवे धनम् ।
कुर्यात्कृत्वा च तत्सर्वमाख्येयं गुरवे पुनः ॥ २४
यांस्तु गन्धान्रसान्वापि ब्रह्मचारी न सेवते ।
सेवेत तान्समावृत्त इति धर्मेषु निश्चयः ॥ २५
ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः ।
तान्सर्वाननुगृह्णीयाद्भवेच्चानपगो गुरोः ॥ २६
स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् ।
आश्रमेष्वाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा ॥ २७
वेदव्रतोपवासेन चतुर्थे चायुषो गते ।
गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि ॥ २८
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य धर्मतः ।
द्वितीयमायुषो भागं गृहमेधिव्रती भवेत् ॥ २९

इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

---

सव्येप- (for °न). M1.5–7 पाणिना (for पीडयेत्).

23 For the sequence in M5, cf. v. l. 17. D6 om. $23^{b}$–$24^{a}$. — $^{b}$) K7 V1 Bo.7.8 D4.9 अधीये; Da4 अधिष्व; Ds1 अधीस्व; D5 M1 °त्य (for °ष्व). Da4 G2 भगवान्. K6 अपि (for इति). — $^{d}$) K7 D4 वा (for च). D5 transp. कृतं and मया. — After 23, K4.6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.8 Kumbh. ed. ins.:

684* ब्रह्मंस्तदपि कर्तास्मि यद्भवान्वक्ष्यते पुनः ।

[ B8 (marg.) यदपि (for त°). K6 वक्षते; D5 वांछते. K4 यद्भवान्कर्तुमर्हसि (for the post. half).]

24 D6 om. $24^{a}$ (cf. v. l. 23). K7 D4.9 transp. $24^{ab}$ and $24^{cd}$. — $^{a}$) D8 repeats from सर्वं up to ख्येयं (in $24^{d}$), after इति (in $25^{d}$). D5 इदं कर्मम् (for इति सर्वम्). K7 D4.9 अनुप्राप्य (for °ज्ञाप्य). — $^{b}$) V1 Bo.8 (marg.) Dn1.n4 Ds D2–4.8 (both times) निवेद्य च यथाविधि. — $^{c}$) V1 ततः (for च तत्). — $^{d}$) D5 M5.7 ततः (for पुनः).

25 For the repetition in D8, cf. v. l. 24. — $^{a}$) K7 D4.9 यस्तु (for यांस्तु). D5 ध्रियं गंधान्रसं चापि. — $^{c}$) K6 Da4 D7 G3 सेवते (for सेवेत). V1 समावृत्य (for °वृत्त). — $^{d}$) D8 om. from धर्मेषु up to चारिणः (in $26^{b}$). Ś1 K1.2 सर्वेषु; D7 T1 G1.3.6 धर्मसु- (for धर्मेषु). T2 निश्चयं.

26 D8 om. $26^{ab}$ (cf. v. l. 25). — $^{c}$) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 तान्सर्वानाचरेन्नित्यं. — $^{d}$) K1.2.4 भवेश्च (for भवेच्च). K1 चानापगो; Dn4 च नियमो; D8.9 वानपगो; G1 चानु° (for चान°). D5.7 T1 G3.6 भवेद्वानुपमो गुरोः (D5 °रौ; G3.6 °रुः); G2 निवेद्य चांतिके गुरुः; M1.5–7 भवेच्चानुवशो (M5 °शे) गुरौ (M5.7 °रोः). ❀ Ca: अनपगः समीपस्थः ॥ Cp: नित्यानुवर्ती । ❀

27 $^{a}$) D5 एवं च (for स एवं). — $^{b}$) K6.7 B6 D4–6 उप(K6 °पा)कृत्य; Bo.7–9 Da3.a4 Dn4 Ds D2.3.7.8 T G1–3.6 M7 उपाहृ(D7 °वृ)त्य (for उप°). — $^{c}$) K6 V1 B6–9 Da3.a4 Dn1.n4 Ds D2.3.6.8 आश्रमाद्; K7 D4.5.9 अगत्वा च; Bo अग्राम्येषु; D7 T G1–3.6 M1.5–7 अग्राम्येण (for the first आश्रमेषु). K6.7 V1 Bo.6.7.9 Dn1.n4 Ds D2–4.6.8.9 एव (for एवं).

28 $^{a}$) K2 T1 देव- (for वेद-). Ś1 K1.2.4.7 D4.9 -योगे(Ś1 °जे)न; D5 -वासी च (for -वासेन). — $^{b}$) M1 चतुर्थश्च (for °र्थे). Da4 Ds1 D7 चायुषे; D2 त्वायुषो (for चा°). — $^{c}$) T1 G1.3.6 दद्यात् (for दत्त्वा). — $^{d}$) Bo Da4 समवर्तेद् (for समा°).

29 = (var.) 12. 235. 1. D5.7 om. 29. — $^{a}$) B9 कर्म- (for धर्म-). Ś1 K1 -लुब्धो (for -लब्धैर्). K1 दाने (for दारैर्). — K4 om. (hapl.) from $29^{b}$ up to 12. 235. $1^{c}$. — $^{b}$) T1 G3.6 अग्निम् (for अग्नीन्). Ds D6 आहृत्य (for उत्पाद्य). K6 Bo 6–9 Da3.a4 Dn1.n4 D2.3.8 T G1–3.6 M1.5–7 यत्नतः; Ds सुव्रतः (for धर्मतः). — V1 reads from $29^{c}$ up to 12. 235. $1^{d}$ on marg. — $^{c}$) B8 चायुषो (for आ°). K2 Da4 द्वितीयमानुषो भागं. — $^{d}$) K2 -मेधिव्रतो; V1 B6.7.9 T G1–3.6 M1.5–7 -मेधी व्रती (G1 M1 °तो); B8 -मेधे व्रती; Da4 -मेधी वृतो (for -मेधिव्रती). K7 Bo Dn1.n4 Ds D2–4.8.9 गृहमेधी भवेद्व्रती (K7 D4.9 °दिति); D6 °मेधी गृहे वसेत्.

# २३५

व्यास उवाच ।
द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् ।
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य सुव्रतः ॥ १
गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः ।
कुसूलधान्यः प्रथमः कुम्भीधान्यस्त्वनन्तरम् ॥ २
अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत् ।
तेषां परः परो ज्यायान्धर्मतो लोकजित्तमः ॥ ३
षट्कर्मा वर्तयत्येकस्त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ।
गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते ॥ ४ C. 12. 8858 B. 12. 244[5]. 5 K. 12. 249. 5

---

Colophon om. in K4; K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. V1 reads the colophon on marg. —*Sub-parvan*: Ś1 K1. 2. 6 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. —*Adhy. name*: Ś1 K1. 2 शुकप्रश्नः; K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–6. 8. 9 शुकानुप्रश्नः; M1. 6. 7 ब्रह्मचारिवृत्तं; M5 शुकानुप्रश्ने ब्रह्मचर्याश्रमधर्मोपदेशः. —*Adhy. no.* (figures, words or both): K6 Dn4 Ds2 G2 68; Dn1 Ds1 D7 T1 G1. 3. 6 M5 69; D3 M1. 6. 7 67; T2 83. —*Śloka no.*: Dn1 D8 30; Da3 29.

## 235

1 = (var.) 12. 234. 29. With $1^{ab}$, cf. Manu. 4. $1^{cd}$. K4 om. $1^{abe}$ (cf. v. l. 12. 234. 29). K7 D4. 9 om. 1. V1 reads 1 on marg. G2 वेदव्यासः (for व्यास). D7 G1 transp. $1^{ab}$ and $1^{cd}$. —$^{a}$) D6 om. भागं. K1. 2 द्वितीयामायु( K1 °नु )षो भो( K2 भा )गं; M6. 7 °ये त्वा( M7 °येप्या )युषे भागं ( M7 °गे ). —$^{b}$) D5 गृही (for गृहे). D5 भवेत्; T1 G1–3. 6 वसन् (for वसेत्). Ś1 K1. 2 गृहमेधिव्रतं चरेत्; D7 °मेधिव्रती भवेत्. —K1 reads $1^{cd}$ twice. —$^{c}$) Ś1 K1 (both times) G3 -लुब्धैर्य( G3 °युं )तो (for -लब्धैर्युतो). —$^{d}$) D5. 7 आग्निम्. K6 Bo. 6. 7. 8 (marg. as in text). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 आहृत्य (for उत्पाद्य). Ś1 K1 (both times). 2. 4 चार्चयेत्; Ds1 सुहृतः; D7 T G1–3. 6 M1. 5–7 यत्नतः (for सुव्रतः).

2 $^{a}$) K7 D4. 5. 9 त्वेताश्च; T2 चैताश्च; M5 शस्ता (for चैव). —$^{b}$) Ś1 K1 स्मृतः (for स्मृताः). G2 प्रशस्ताश्च विधित्सतां. —With $2^{cd}$, cf. Manu. 4. $7^{ab}$. —$^{c}$) K7 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds1. s2 (by corr. as in text) D4–6. 8. 9 Cp कुशूल- (for कुसूल-). Ś1 K1. 2. 4 -धान्याः; G2 -धान्यं (for -धान्यः). Ś1 K1. 2. 4 D6 प्रथमाः; G1–3. 6 M7 प्रथमं (for °मः). ❀ Cp: कुशूलः कुब्लेति प्रसिद्धः। ❀ —$^{d}$) K4 कुंभीर्; K6 V1 B7 Dn1 n4 D2. 3 8 कुंभ-; D6 कुंभां (for कुम्भी-). D3 त्वतः परं; D5 T2 M1 त्वनंतरः (for °रम्). Ś1 K1. 2 कुंभीधान्यास्त्वनंतराः; G2 °न्यमनंतरं. ❀ Cp: कुम्भी क्षुद्रः कलशः । ❀

3 With $3^{ab}$, cf. Manu. 4. $7^{cd}$. —$^{a}$) D6 अश्वतनो; G2 °स्थनो (for °स्तनो). ❀ Cn: कापोतीम् उञ्छवृत्तिम् । ❀ —$^{b}$) D7 T G1. 3. 6 M1. 5–7 आस्थितो (for आश्रितो). K6 V1 B6. 7. 9 Da4 Ds D7 T G1–3. 6 Cp आहरन्; K7 D4–6. 9 M1 आचरेत् (for आह°). ❀ Cp: वृत्तिमाहरन्, कालमतिवाहयन् । ❀ —With $3^{cd}$, cf. Manu. 4. $8^{cd}$. —$^{c}$) D7 T G1–3. 6 एषां (for तेषां). K6 परापरो; M6 परं परो (for परः परो). —$^{d}$) D7 धर्मको; T1 G1 धार्मिको (for धर्मतो). Dn1. n4 D2. 3. 8 धर्म- (for लोक-). K6 Dn1 D2. 3 -वित्तमः (for -जित्तमः).

4 With $4^{abcd}$, cf. Manu. 4. 9. —$^{a}$) K7 V1 षट्कर्म. ❀ Cn: षट्, यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः ॥ Cp (also): षट्कर्माणि शिला[ ? लोञ्छ ]याचितकृषिवाणिज्यकुसीदरूपाणि । ❀ —$^{b}$) D7 अन्या; T2 अन्यं (for अन्यः). D5 प्रवर्तयेत् (for °र्तते). ❀ Cp: त्रिभिः उत्थानयाचितायाचितैर्वा । ❀ —K7 reads $4^{cdef}$ on marg. G1 reads $4^{c}$ twice. —$^{c}$) K1 एकाश्च. G1 (first time) त्रिभिरन्यो (for चतुर्थस्तु). Da4 D7 T1 G1 (second time). 2. 3. 6 च (for तु). ❀ Ca. n: द्वाभ्यां यागा( Cn दाना )ध्ययनाभ्याम् । ❀ ❀ Ca: चतुर्थः कापोतीं वृत्तिमाश्रितो गृहस्थः । ❀ —$^{d}$) K6. 7 D4. 5. 9 Cpp ब्रह्मसत्ये ( K6 °त्वे ) (for °सत्रे). D4 व्यवस्थिताः. Ś1 K1. 2. 4 गुरु( K2. 4 ब्रह्म )शुश्रूषणे रतः; V1 B8 (marg.) ब्रह्मसत्य( B8 °त्ये )व्रते स्थितः. ❀ Ca: ब्रह्मसत्रं वेदजपः, आत्मचिन्तनमित्यन्ये ॥ Cp: पाठान्तरे ब्रह्म तत्त्वज्ञानं तदेव सत्यं तत्र स्थितः ॥ Cs: ब्रह्मसत्रे अध्यापने ॥ Cv: ब्रह्मसत्रे ब्राह्मणैः क्रियमाणसत्रयागे । ❀ —$^{e}$) K6 T1 G1. 6 गृहमेधी; B6 °मेध-; B8 (marg. as in text) °मेधे (for °मेधि-). —$^{f}$) Ś1 K1. 2. 4 सुमहांति (for महान्तीह). Bo D6 प्रचक्ष्यते; G2 प्रवर्तयेत्.

C. 12. 8858 B. 12. 244[3]. 5 K. 12. 249. 5

नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ।
प्राणी वा यदि वाप्राणी संस्कारं यजुषार्हति ॥ ५
न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः ।
न भुञ्जीतान्तराकाले नानृतावाह्वयेत्स्त्रियम् ॥ ६
नास्यानश्नन्वसेद्विप्रो गृहे कश्चिदपूजितः ।
तथास्यातिथयः पूज्या हव्यकव्यवहाः सदा ॥ ७
वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः ।
तेषां हव्यं च कव्यं चाप्यर्हणार्थं विधीयते ॥ ८
न खरैः संप्रयातस्य स्वधर्माज्ञानकस्य च ।
अपविद्धाग्निहोत्रस्य गुरोर्वालीककारिणः ॥ ९
संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ १०
विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
अमृतं यज्ञशेषं स्याद्भोजनं हविषा समम् ।
भृत्यशेषं तु योऽश्नाति तमाहुर्विघसाशिनम् ॥ ११

5 a) K2.4 नात्मानं; K6 Bo.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 T G1–3.6 M6.7 ना(G2 आ)त्मार्थं (for °र्थं). — b) Ds1 घातयेन्. K1 फलं (for पशून्). — c) ❀ Ca: प्राणी विहितहविर्मेध्ये पशु', अप्राणी पुरोडाशादिः ॥ Cn: प्राणी छागादिः, अप्राणी अश्वत्थादिः ॥ Cv: प्राणी पैतृकाद्यर्थमानीतः प्राणी, अप्राणी नित्यभोजनार्थमानीतं व्रीह्यादिकम् । ❀ — d) B7 partly damaged. B8 (marg.) संघातिर् (for संस्कारं). D7 T1 G1 विदुषा; M1.6 यजुषो (for °षा). D8 संस्कारं यजुहार्षति (sic).

6 a) Ś1 K2 प्रसुपेज् (for प्रस्वपेज्). — b) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 -रात्रिषु (for -रात्रयोः). — c) K7 D4.6.9 भुंज्याद् (for भुञ्जीत). ❀ Ca: अन्तरा सायंप्रातर्भोजनद्वयमध्ये । ❀ — d) T1 नानृताम्.

7 With 7[ab], cf. Manu. 3. 105[cd]; 4. 29. — a) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 गृहे (for वसेद्). G2 नानानस्वपन्विप्रो (sic). — b) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 वसेत् (for गृहे). — c) Ds2 अथ (for तथा). Ś1 K1.2.4 उपास्यास्तिथयः पूज्या; K7 D4–6.9 पूज्या ह्य(D5 °ज्यास्त्व)तिथयस्त(D4.9 °स्त्व)स्य. — d) M7 -कव्यं (for -कव्य-).

8 With 8[abef], cf. Manu. 4. 31. — a) K7 -वृतस्नाताः; Dn4 -व्रतस्नात- (for °स्नाताः). — e) K7 V1 D4–7.9 T G1–3.6 M1.5–7 स्वकर्म-; B9 Da4 सधर्म- (for स्व°). — e) Ś1 K1 कव्यं (for हव्यं). K1 हव्यं (for कव्यं). K6 V1 B8 वा (for च). — f) K2 [अ]प्यर्हनार्थं; T2 [अ]भ्यर्हणार्थं; G2 प्रहर्षार्थं (for [अ]प्यर्हणार्थं).

9 a) K1 नावरैः; G2 ते नरैः (for न खरैः). D7 T1 G1 संप्रघा(T1 °खा)तस्य (for °यातस्य). ❀ Cn: नखरैः नखैः, दम्भार्थं नखलोमधरस्य । ❀ — b) K1 स्वधर्माज्ञातकस्य; K4 V1 Bo.6 (marg.) Da3.a4 Dn1.n4 Ds D2.3.8 Ca.Cpp स्वधर्म(K4 °धर्मा-; V1 °कर्म)ज्ञापकस्य; K6 (orig.).7 D4.5.9 स्वक(K6 [sup. lin.].7 D9 °ध)र्मोज्झितकस्य; K6 (before corr.) B6 (orig.).9 Cp स्व(Cp अ)कर्मजनितस्य; B8 D7 T G1.3.6 M1.5–7 स्वक(B8 [marg.] T2 °ध)र्मख्या(G1 °ख्या)पकस्य; D6 स्वकर्मार्जितस्य; G2 स्वकर्मख्यापितस्य (for स्वधर्माज्ञानकस्य). K6 Bo.6.7.9 Da3.a4 Ds D8 T G1–3.6 M1.5–7 वा (for च). ❀ Ca: स्वधर्मज्ञापकस्य, ममैतावान्धर्मः कृत इति कथकस्य ॥ Cp: अकर्मजनितस्य, अकर्मलब्धवृत्तेः । ❀ — d) K6 वाफल-; T2 G2 M7 वाळीक- (for वालीक-). D5.7 -धारिणः (for -कारिणः).

10 With 10, cf. Manu. 4. 32. — b) T1 G1 अत्र- (for एव). K7 D4.5.7.9 शस्यते; Da4 सिष्यते (for शि°). — c) K2 M1.6.7 अथ वा (for तथैव). Da4 G2 पाच(G2 पव)मानेभ्यः; D6.7 [अ]पच्यमा°. ❀ Cn.p.s: अपचमानेभ्यः ब्रह्मचारिसंन्यासिभ्यः (Cp °भिक्षुभ्यः; Cs °परिव्राजकेभ्यः) । ❀ — d) K4 -मेधिनः; Dn4 -मेधिनां.

11 With 11, cf. 3. 2. 58: B. 13. 93. 8. D5 om. 11. 11[ab] = (var.) Manu. 3. 285[ab]. — a) K6 विघशासो; Da4 °साशि (for °साशी). — b) K6.7 D4.6 वामृत- (for चा°). Dn4 G1.3.6 -भोजनं (for °नः). — c) Da4 अनृतं (for अमृतं). Ś1 M7 -शेषः स्याद्; T1 G1.3.6 -शेषस्य (for -शेषं स्याद्). — d) T G1.3.6 भोजनं हविषः स्मृतं. — e) G2 भुक्त- (for भृत्य-). D4.9 नु (for तु). M5 [ऽ]श्नीयात् (for ऽश्नाति). — f) K7 विघसासिनं. — After 11, K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 Editions ins.:

685* विघसं भृत्यशेषं तु यज्ञशेषमथामृतम् ।

[ = (var.) Manu. 3. 285[cd]. D5 विघसा (for °सं). Da3 om. (hapl.) षं तु यज्ञशे. B6 Da3 a4 तथा (for अथ). ]

स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ।
ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः ॥ १२
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ।
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ॥ १३
दुहित्रा दासवर्गेण विवादं न समाचरेत् ।
एतान्विमुच्य संवादान्सर्वपापैः प्रमुच्यते ॥ १४
एतैर्जितैस्तु जयति सर्वाँल्लोकान्न संशयः ।
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ॥ १५
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ।
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः ॥ १६
संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ ।
वृद्धबालातुरकृशास्त्वाकाशे प्रभविष्णवः ॥ १७
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ।
छाया स्वा दासवर्गस्तु दुहिता कृपणं परम् ॥ १८
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः ।
गृहधर्मरतो विद्वान्धर्मनित्यो जितक्लमः ॥ १९     C. 12. 8874 B. 12. 244[3]. 21 K. 12. 249. 21

---

12 $^{a}$) M7 नित्यम् (for दान्तो). — $^{b}$) K1. 2 Da4 ह्यनसूयु-; D4 ह्यनुसूयूर्; M7 क्षनसूयुर् (for ह्यन°). K7 D4. 9 यतेंद्रियः; G3 जितेंद्रियं (for जितेन्द्रियः). — $12^{cd}$ = Manu. 4. $179^{ab}$. — $^{c}$) K7 -पुरुहिताचार्यैर्; G2 -पुरोहिताचार्य- (for °चार्यैर्). — $^{d}$) D5 -संभृतैः; D7 -संस्तुतैः (for -संश्रितैः). Da4 मातुलातिसमन्वितैः.

13 = Manu. 4. $179^{c}$–$180^{b}$. — $^{a}$) K2 -बालातुरा. K7 वाद्यैर् (for वैद्यैर्). T G1–3. 6 M1. 5–7 बालवृद्धातुरैर्वैद्यैर्. — $^{b}$) D5 G1 M1 -संबंध- (for -संबन्धि-). — $^{c}$) D5. 7 जामात्रा; D6 जानीभिर्; T1 ज्ञातीभिर्; G1 जामि°; G2 जानाभिर्; M7 (*sup. lin.* as in text) जाती° (for जामी°). ❀ Ca (reading यामीभिः): यामी कुलस्त्री ॥ Cn: जामीभिः सगोत्रस्त्रीभिः । ❀ — $^{d}$) K4 Da4 G2 भ्राता (for भ्रात्रा).

14 = (var.) Manu. 4. $180^{c}$–$181^{b}$. — $^{a}$) K2 दुहित्र्या; G2 °ता (for °त्रा). T1 वास-; G2 सास- (for दास-). — $^{b}$) D5. 7 न विवा(D5 °षा)दं तु योजयेत्; T G1–3. 6 M1. 5–7 विवादं ना(T2 °दान्ना)नुयोजयेत्. ❀ Ca (reading विवादान्): संरम्भपूर्वकवादान् । ❀ — $^{c}$) Dn1 T G1–3. 6 एतैर् (for एतान्). K4 संवायुन् (for °दान्). ❀ Cn: संवादान् अंशाद्यर्थं कलहान् । ❀ — $^{d}$) K6 Bo. 6. 7. 9 Da3 Dn1. n4 D2. 3. 6. 8 M7 विमुच्यते (for प्रमु°).

15 = (var.) Manu. 4. $181^{c}$–$182^{b}$. — $^{a}$) K4. 7 V1 B6 (marg.). 8 Dn1 Ds D2. 3. 6. 8 T2 G1. 3. 6 जितस्; G2 जितं (for जितैस्). — $^{d}$) K4 D4 प्रजापत्ये; B7 प्राजापत्य- (for °पत्ये). D2. 3 तथा (for पिता).

16 = (var.) Manu. 4. $182^{c}$–$183^{b}$. — $^{a}$) K1 त्विंद्रि- (for त्विन्द्र-). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 -लोकस्य (for -लोकेशो). — $^{b}$) K1 चर्त्विजाः. — In Ś1, the portion from $16^{c}$ up to 12. 236. $19^{a}$ is written *sec. m.* — $^{c}$) D7 यामयो; G1. 3. 6 ज्ञातयो (for जामयो). — $^{d}$) B6 (marg.) लोक- (for वैश्व-). K1 -देवं तु; D2 -दैवे तु; T1 G1–3. 6 -देवेषु; M1. 6. 7 -देवस्य (for -देवे तु). D7 G2. 6 (*sup. lin.*) जातयः; G3 जामयः (for ज्ञातयः).

17 $17^{ab}$ = (var.) Manu. 4. $183^{cd}$. — $^{a}$) Ś1 समधि-; D6 संबंध- (for संबन्धि-). — $^{b}$) Ds1 -मातुलैः (for -मातुलौ). G2 पृथिव्यां मातुला मताः. — $^{d}$) Ś1 K1. 2 G2 आकाशे; D4. 9 स्वाकाशे; M1 स्वाकाश- (for °शे).

18 = (var.) Manu. 4. $184^{c}$–$185^{b}$. — $^{a}$) Ś1 भ्रात्रा. Ś1 ज्येष्ठा; G2 ज्येष्ठ- (for ज्येष्ठः). B9 पिता; Ds1 पुत्रा; G2 पुत्रो (for पित्रा). — $^{b}$) G2 भ्रातृ- (for भार्या). K7 T2 G1. 2 M7 पुत्र- (for पुत्रः). M5 तथा (for स्वका). — With $18^{cd}$, cf. Śāṅkhāyana Ś. Sūtra 15. 17. 12. — $^{c}$) K7 छायां (for छाया). K7 वा; Da3. a4 D2. 3 (before corr.). 5. 7 T2 G3. 6 स्व-; G2 स्वं; Ca (gloss: आत्मीयः; Cap as in text) स्वः (for स्वा). K4 -वर्यस्तु; K6 V1 Bo. 7–9 Da3 Dn1. n4 Ds D2. 3. 8 M6 -वर्ग(Ds1 °र्गा)श्च; Da4 -वर्गस्य; D5. 7 -वर्गोस्ति (for -वर्गस्तु). T1 छायासमा दासवर्गा; G1 स्वदासवर्गस्तु सदा. — $^{d}$) K1 कृपणा; Dn4 M1 कृपणां; T1 रोपणं (for कृपणं). Da4 पुरां (for परम्). ❀ Ca: कृपणं कृपापात्रम् । ❀

19 $19^{ab}$ = (var.) Manu. 4. $185^{cd}$. — $^{a}$) G2 तस्मात्तैरधि(*sup. lin.* °भि)तः क्षिप्ता. — $^{b}$) T1 G1. 3. 6 अपज्वरः; M6 अस° (for असं°). — $^{c}$) K6 D4. 9 -कर्म- (for -धर्म-). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 -परो; D6 -रयो (for -रतो). D5. 7 धीमान् (for विद्वान्). — $^{d}$) K7 D9 धर्मैं (for धर्म-).

C. 12. 8875 B. 12. 244[3]. 22 K. 12. 249. 22 न चार्थबद्धः कर्माणि धर्मं वा कंचिदाचरेत् ।
गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम् ॥ २०
परस्परं तथैवाहुश्चातुराश्रम्यमेव तत् ।
ये चोक्ता नियमास्तेषां सर्वं कार्यं बुभूषता ॥ २१
कुम्भीधान्यैरुञ्छशिलैः कापोतीं चास्थितैस्तथा ।
यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्धते ॥ २२
दश पूर्वान्दश परान्पुनाति च पितामहान् ।
गृहस्थवृत्तयस्त्वेता वर्तयेद्यो गतव्यथः ॥ २३
स चक्रचरलोकानां सदृशीं प्राप्नुयाद्गतिम् ।
यतेन्द्रियाणामथ वा गतिरेषा विधीयते ॥ २४
स्वर्गलोको गृहस्थानामुदारमनसां हितः ।
स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः ॥ २५

---

K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 ॰शीलो; K7 ॰निले (for ॰नित्यो).

20 a) K1 तदार्थ॰; K6 न चानु॰; B6 (marg. as in text) न चात्स॰ (for न चार्थ॰). Da4 Dn4 ॰बद्ध॰; D6 ॰बृद्धः; T1 G1–3. 6 ॰बंध॰; T2 M1. 6 ॰बंधः; M5 ॰बंधं ॰वृद्धः (for ॰बद्धः). D5. 7 आत्मबद्धमकर्माणि. — b) K6. 7 B7. 8 Dn1. n4 Ds2 D3–5. 7–9 धर्मवान् (for धर्मं वा). K4. 7 V1 Da3. a4 D2–4. 9 T G1. 3. 6 M1. 6. 7 किंचिद्; Dn1. n4 Ds2 D3 (also). 5 कश्चिद् (for कंचिद्). — c) Ds1 गृहस्थस्य (hypermetric) (for गृहस्थ॰). G2 गृहवृत्तिरनिवृत्तिस॰. — d) Da4 D4 निश्रेयसं; G2 स्वस्त्ययनं. Ś1 K1. 2. 4 मतं; K7 D4. 6. 9 फलं (for परम्).

21 a) Da3. a4 Dn1 D8 परं परं (for परस्परं). G2 [आ]स्थै (for [आ]हुश्). ❀ Cn: परस्परमित्यपपाठः । परं परं श्रेयः ॥ Cs: परस्परं तथैवाहुः प्रत्येकं निःश्रेयसमाहुः। चातुराश्रम्यमेव तद्वृत्तिचतुष्टयम् । ❀ — b) D6 चातुराश्रमम्; G2 हेतुराश्रम्यम्. K7 D4. 6. 9 तु; G2 ताः (for तत्). G1 चतुराश्रम्य वै तत् (sic). — c) Ś1 अथोक्ता; K1. 2. 4 Dn1. n4 Ds D8 यथोक्ता; G2 यच्चोक्ता (for ये चोक्ता). K1 नियमस्. — d) K1. 4 Dn4 सर्वंकार्य॰; K7 D4. 9 T2 सर्वे कार्या; Bo. 6. 7. 9 Da4 D6. 7 T1 G1. 3. 6 सर्वकार्यं (for सर्वं कार्यं). K6 बुभुत्सतां; B8. 7. 9 Da4 Ds1 D6 बुभूषतां (for ॰षता).

22 a) K1 Da4 Dn1 Ds1 D2–4. 8. 9 कुंभ॰ (for कुम्भी॰). Ś1 K2. 4 ॰धान्या (for ॰धान्यैर्). Dn4 D6 उच्छ॰ (for उञ्छ॰). Ś1 K2. 4 ॰शिलाः; K1 G2 M1. 5–7 ॰सिलैः; V1 B6–9 Da4 Dn4 Ds D2. 8 ॰शीलैः; G1 ॰सिलैः (for ॰शिलैः). ❀ Cs: उञ्छशी[शि]लैः उञ्छः धान्यशः आदानम्, शी[शि]लः शिलापृष्ठपतितस्यादानम् । ❀ — b) B7 Da3 D8 कापोती (for ॰तीं). K6. 7 B9 Da3. a4 D5. 7 वास्थितैस्; B8 Ds2 आस्थि॰; Dn1 D2 चास्थितास् (D2 ॰तिस्); D4. 6 ॰ते (for ॰तैस्). D5 M1 तदा (for तथा). Ś1 K1. 2. 4 कापोतीवृ(Ś1 ॰पोतीं वृ)त्तिमाश्रिताः (K1 ॰स्थितैः). — c) G1 चैव (for चैते). D5. 7 G2 भवंति (for वसन्ति). K2 D2. 5 G3. 6 अर्थास्; Da4 अर्हास्; G2 आशु॰. — d) G2 अनु॰ (for अभि॰). G2 M6 ॰वर्तते (for ॰वर्धते).

23 a) Ś1 K2 T1 दश पूर्वा; K4. 6 B7 Da3. a4 D2. 3. 8 पू(K6 स)र्वान्दश (by transp.); Bo. 6. 9 Dn1. n4 Ds M1. 6 पूर्वापरान्. K7 परा (for परान्). Cv पूर्वापरान्दश परान् (gloss: परान् अन्यूनान्). — b) T1 G2. 3. 6 पुनंति; G1 पुनंती (for पुनाति). G2 स्व॰ (for च). — c) Ś1 K2. 4 ॰वृत्तीयस्तु; K1 ॰वृत्तीभिस्तु; K6 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 ॰वृत्तीश्चापि (for ॰वृत्तयस्तु). M1 एतान् (for एता). B8 गृहस्थवृत्तीस्त्वेताश्च; T G1–3. 6 ॰वृत्तिं चा(G1 ॰द्धिं चा॰; G2 ॰त्तिं यो)प्येतां; M5 ॰वृत्तिश्चाप्येता; M7 ॰वृत्तिमेतां वै. — d) Ś1 K1. 2. 4 वर्तयेत; G2 याति यो वै (for वर्तयेद्यो).

24 a) T2 शक्र॰ (for चक्र॰). K1. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 ॰धर॰; T G1–3. 6 ॰चार॰ (for ॰चर॰). ❀ Ca: चक्रधराः सदा शकटेन चक्रवता तीर्थयात्राशीला ये चरन्ति ते। गन्धर्वादयो वा ॥ Cn: चक्रधराश्चक्रवर्तिनो मान्धात्रादयः ॥ Cp: चक्रधरो विष्णुः। चक्रधराः सूर्यादयो गणदेवाः॥ Cs: चक्रधरलोकानां ग्रहनक्षत्रतारकादिलोकानाम् । ❀ — b) K4. 7 V1 Bo. 8 Da3 Dn1. n4 D2–4. 6. 8. 9 T2 M1. 5–7 आप्नुयाद् (for प्रा॰). — c) V1 Bo. 6 (marg.). 8 Dn1. n4 Ds D2. 3. 5–8 T1 G2. 3. 6 जितेंद्रियाणाम् (for यतेन्द्रि॰). — d) Dn1 M1. 6 एषां; Ds1 एव (for एषा).

25 D7 om. (hapl.) 25. D4 reads 25 twice. — a) D5 स्वर्गो (for स्वर्ग॰). K1 T2 G2. 3. 6 M1. 5. 6 ॰लोके; K6 G1 ॰लोक॰ (for ॰लोको). — G2 om. (hapl.) 25b–26a. D6 reads 25b–26b on marg. — b) Bo (marg.) ॰मनसो; M7 ॰मनसा (for ॰मनसां). K1 हिताः; K2 हितां; K7 D4–6. 9 स्मृतः; B8 (marg.) गतिं; T G1. 6 M5 इह; G3 इव (for हितः). — c) K1. 6 स्वर्गे (for स्वर्गो). — d) T2 देव॰ (for वेद॰). Ś1 ॰दृष्टिषु; K1 ॰दृष्टिः सु॰; K2 ॰दृष्टिः स॰ (for ॰दृष्टः सु॰). K7 D4. 9 स्वयंभुवा (K7 ॰व॰); B8 (marg. as in text) Da4 सुपूजितः; M1. 5 (*inf. lin.*). 6. 7 स(M5. 7 सु)कल्पितः

C. 12. 9648
B. 12. 270[69].13
K 12. 275. 13

प्रागगर्भाधानान्मन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
अविश्रम्भेषु वर्तन्ते विश्रम्भेष्वप्यसंशयम् ॥ १२
दाहः पुनः संश्रयणे संस्थिते पात्रभोजनम् ।
दानं गवां पशूनां वा पिण्डानां चाप्सु मज्जनम् ॥ १३
अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरः स्मृताः ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥ १४
एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ।
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ॥ १५
श्रिया विहीनैरलसैः पण्डितैरपलापितम् ।
वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥ १६

---

(for °तिषु). — G2 om. (hapl.) 12ᶜ–15ᵈ. — ᶜ) K1 B7 Dn1 अविसंभेषु; K2 B8.9 °स्रब्धेषु; K6 M1.6.7 °संस्रेषु; K7 D4.9 °श्रस्तेषु; Ds D3.6 T G1.3 M5 Ca.p (gloss [both]: जीवत्सु) °श्वस्तेषु; D5 °श्रद्धेषु (for °श्रम्भेषु). B9 D4 om. from वर्त up to विश्रम्भे (in 12ᵈ). Dn4 वर्तंत. ❀ Ca.s (reading अविश्वस्तेषु): [Ca: अविश्वस्तेषु, जीवत्सु। Cs: कर्मविश्वासहीनेषु संन्यासिष्वपि, वर्तन्ते प्रवर्तन्ते मन्त्राः] ॥ Cn: अविश्रम्भेषु, मानान्तरागम्येषु स्वर्गादिषु । ❀ — ᵈ) K1.2 B6 विस्रब्धेषु; K4 विश्रब्धेषु; K6 विस्रस्ते च; K7 D9 विश्रस्तेषु; V1 Bo.7 Dn1 विसंभेषु; Dn4 D3.6 T2 G1.3 M5 Ca.p (gloss [both]: मृतेषु) विश्वस्तेषु; Ds1 विश्रंतेषु; D5 विश्रम्येषु; M1.6.7 विस्रस्तेषु (for विश्रम्भेषु). Ds D3.8 [अ]संशयः; T G3 संश्रिताः; G1 संश्रताः (for [अ]संशयम्). ❀ Cn: विश्रम्भेषु ऐहिकेषु वृष्ट्यादिषु साध्येषु । ❀

13 Ś1 missing (cf. v.l. 11). G2 om. 13 (cf. v.l. 12). — ᵃ) K1 दाहाः; Dn1 Ds2 D8 (before corr.).6 दाहे; T G1.3 दानं; Cn.p (gloss: अन्त्येष्टिरूपः).s दाहः (as in text). K1.4 संश्रयेण; K7 °यणं; Ds T G1.3 Cs (gloss: अस्थिसंचयनं) संग्रहणं; D4.9 संश्रवणं; D5.7 °वणे; M1.5–7 संचयनं; Cn.p संश्रयणे (as in text). ❀ Ca: दाहो मन्त्रवान् अन्त्येष्टिविधया प्रथमः संस्कारः। ततः संश्रयणे सपिण्डने पितृभावः संस्कारसाध्यः। ❀ — ᵇ) K1.2.4.7 D4.9 T2 संश्रिताः; K6 V1 Bo.6–9 Da3.a4 D5.7 संश्रितः; Dn1.n4 Ds D2.3.6.8 Cn संश्रिते; T1 G3 संश्रिता; G1 संश्रता (for संस्थिते). K1 पत्रि-; K4 पत्र-; M1.6 वात्र; M5 चात्र (for पात्र-). Dn1.n4 D2.3.6.8 M6 Cn -भोजने; T2 -भोजनाः (for -भोजनम्). ❀ Cn: देहे पुनः संश्रिते सति पात्रं जलं, भोजनं च, ते उभे तर्पणनित्यश्राद्धादिरूपेण देये ॥ Ca.p: प्रतिवर्षं मृताहनि पात्रभूतानां (Ca °भूतस्य) ब्राह्मणानां (Ca °णस्य) भोजनम् । ❀ — K7 om. 13ᶜᵈ. — ᶜ) Dn1.n4 Ds2 D3.6.8 दाने (for दानं). B6.8 (marg. as in text).9 Da4 D4.9 M1.5–7 च; T G1.3 हि (for वा). K1.2.4 दानं शु(K2 °नं श्व-; K4 °हं शु)नां गवां चैव; D5.7 Ca दानं गवां शुनां चैव. ❀ Ca: गवामित्युत्तमसंप्रदानलक्षकं, शुनामिति नीचवर्णस्योपलक्षणम् ॥ Cn: गवां वैतरण्यादीनां, पशूनां वा गोवृषादीनामुत्सर्गः ॥ Cp: दानं गवां, गोभ्यः पिण्डादीनां दानमित्यर्थः । पशूनां छागादिभ्यः। अप्सु वा मज्जनम् । तदुक्तम्—पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा । ❀ — ᵈ) K2 Dn1.n4 अप्सु; K6 Ds1 D2.4 वाप्सु; D5.7 च सु- (for चाप्सु). K1 निमज्जनं (hypermetric); Dn1.n4 Ds2 D3.6 मज्जने; G1 भोजनं (for मज्जनम्).

14 Ś1 missing (cf. v.l. 11). G2 om. 14 (cf. v.l. 12). — ᵃ) K1 आर्चिश्मं(*sup. lin.* as in text)-तो; Da4 °ष्मांतो; Ds1 °ष्मतो; G1 °ष्मदो (for °ष्मन्तो). — ᵇ) K1.2.4 D7.9 क्रव्यादः; K6 काव्यदाः; D2 कव्यादाः (for क्र°). K6 Bo.6.7.8 (marg.) 9 Da3.a4 Dn1.n4 Ds D2 3.5–8 तथा (for स्मृताः). — ᶜ) T1 G1 भूतस्य (for मृतस्य). K1.2.4 उपपद्यंते; K6.7 D4.5.7.9 अनुवर्तंते (for °मन्यन्ते). — ᵈ) K1.2.4 V1 विधि- (for मन्त्रा). Dn1 Ds M5 -मंत्रश्च; T2 मंत्रस्य (for -मन्त्राश्च). ❀ Cs (reading मन्त्रामन्त्रश्च): मन्त्रैरामन्त्रः आमन्त्रणं मांसभक्षणार्थं पितृणाम् ॥ Cv (reading मन्त्रामन्त्राश्च): मन्त्राः मन्त्रसहितकर्माणि, अमन्त्राः मन्त्रं विना तूष्णीं क्रियमाणकर्माणि, उपवीतस्य सव्यापसव्यकरणादीनि। ❀ ❀ Ca: कारणं, धर्माचरणयोः । ❀

15 Ś1 missing (cf. v.l. 11). G2 om. 15 (cf. v. l. 12). — ᵃ) D7 क्रोशस्तु; G1 क्रोशात् (for क्रोशत्सु). G1 om. सु. D4.9 G3 M6 देवेषु; D5.7 सर्वेषु (for वेदेषु). — ᵇ) Ds1 तु (for ऽस्ति). — ᶜ) Bo ऋणमंतो (for °वन्तो). T2 यथा (for यदा). K1.2.4 विप्राः; Da4 D6 मर्त्यैः (for मर्त्याः).

16 With 16, cf. 12. 10. 20. Ś1 missing (cf. v. l. 11). — ᵃ) G1–3 क्रिया- (for श्रिया). K1.2.4 चपलैः (for अलसैः). ❀ Cp: श्रिया विहीनैरलसैरिति विशेषणाभ्यां कर्मासामर्थ्यं सूचितम् । ❀ — ᵇ) M5 पिष्टितैर् (for पण्डितैर्). K4 D4.9 अपलापितं (D4.9 °तैः); K6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5–8 संप्रवर्तितं (K7 °तंनं); M7 अल्पलापितान् (for अपलापितम्). T1 G1.3 पितरो ह्यपलापि(G1 °वि)ताः; T2 पिंडदानपलापितान्; G2 पितरो न पलायिताः. ❀ Cp: पण्डितैरिति विशेषणाद्यौक्तित्वं सूचितम् ॥ Cv (reading पण्डि-

न वै पापैर्हियते कृष्यते वा
यो ब्राह्मणो यजते वेदशास्त्रैः ।
ऊर्ध्वं यज्ञः पशुभिः सार्धमेति
संतर्पितस्तर्पयते च कामैः ॥ १७
न वेदानां परिभवान्न शाठ्येन न मायया ।
महत्प्राप्नोति पुरुषो ब्रह्म ब्रह्मणि विन्दति ॥ १८

कपिल उवाच ।
दर्शं च पौर्णमासं च अग्निहोत्रं च धीमताम् ।
चातुर्मास्यानि चैवासंस्तेषु यज्ञः सनातनः ॥ १९
अनारम्भाः सुधृतयः शुचयो ब्रह्मसंश्रिताः ।
ब्रह्मणैव स्म ते देवांस्तर्पयन्त्यमृतैषिणः ॥ २०
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः । C. 12. 9657 B. 12. 270[69].22 K. 12. 275. 22

तैश्चपलायितम् ): चपलायितं चञ्चलीकृतम् । ✻ — c ) K1 वेदवादापतिज्ञातं; K2 °परिज्ञातं; V1 Cp ( gloss : अप्रामाणिकत्वं सूचितम् ) °वादपरिज्ञानं; D4.9 M1.5-7 वेदादेवापविज्ञानं ( D4.9 °तं ); T1 G1-3 वेदा (G1 °द-) वेदापवि( G2.3 °रि )ज्ञानं; T2 वेदा देवाश्च विज्ञानं. — d ) D1 lacuna; D5.7 G3 सत्यमास( D7 °ष )म् ( for सत्या° ).

17 Ś1 missing (cf. v. l. 11). — a ) G2 पात्रे ( for पापैर् ). K6 कृष्यते; D3 T2 M1.6 हीयते; D5.7 Cp ( gloss : वशीक्रियते ) क्रियते; T1 G1-3 श्रूयते ( for ह्रियते ). K1.2.4 लिप्यते; K6 ह्रियते; K7 D4.9 दूयते; V1 रिष्यते; T G2.3 Cs गृह्यते; G1 ग्रहते; Cp ( gloss : धर्ममार्गादाकृष्यते ) कृष्यते ( as in text ). — b ) K6 यद्; Ds1 lacuna ( for यो ). B8 वा यजते; M1.6.7 नी( M1 नि )यते ( for यजते ). K2 देव- ( for वेद- ). ✻ Ca : वेदशास्त्रैः, वेदैरेव शास्त्रैः । अथ वा वेदैः ऋगादिभिः, शास्त्रैः स्मृतिप्रधानेतिहासमीमांसान्यायादिभिः ॥ Cs : वेदशास्त्रैः, वेदचोदनाभिः । ✻ — c ) K1 तूर्ध्वं; D6 ऊर्ध्व- ( for ऊर्ध्वं ). K1 Da3.a4 D5.7 M7 यज्ञात्; K4 यज्ञाः; Dn1.n4 D2.3.6.8 यज्ञैः; T G1-3 M5 यजन्; M1.6 यज्ञं ( for यज्ञः ). D5 lacuna; D7 सार्धमेभिः ( for °मेति ). — d ) K7 D4.9 स तं पुनस्; V1 न तं पुनस् ( for संतर्पितस् ). K7 D4.5.7.9 तर्पयतीह ( for °ते च ). B6 च कामं; M1.6.7 न कामं ( M7 °मान् ) ( for च कामैः ). K1.2.4 न तं पुरस्त( K4 °स्ता )र्कयते च कामः; T G1-3 M5 ततः पुनस्तर्कि( T2 M5 °स्तर्क )यते न कामं.

18 Ś1 missing (cf. v. l. 11). — a ) V1 B6.8 ( marg. as in text ).9 Da3.a4 Cp देवानां ( for वेदानां ). K2 M7 परिभावान् ( for °भवान् ). ✻ Cn : परिभवात्, अनादरात् ॥ Cp : वञ्चनात् ॥ Cs : निन्दनात् । ✻ — b ) K1 B9 सा( K1 शा )ध्येन; Ds1 D4.9 शाप्येन ( for शाठ्येन ). G2 माययन् ( for मायया ). K2 न शाठेन म* यथा; D5.7 शाठ्येन न च मायया. — d ) Bo Da3 Dn1.n4 D6 ब्रह्मणि ( Dn4 °णे ) ब्रह्म ( by transp. ); Ds D2.3.8 M5 Cv ब्राह्मणो ब्रह्म. M1.6 ब्रह्मन् ( for ब्रह्म ). K2 ब्रह्मण; K4 °नि ( for °णि ). K4 वर्धते ( for विन्दति ). ✻ Cp.s : ब्रह्मणि वेदे साक्षात्प्रतिपादितम् ( Cs : प्रकाशितम् ) ब्रह्म, परमात्मानम् ( Cs : कैवल्यम् ) । ✻

19 Ś1 missing (cf. v. l. 11). T1 G2 om. the ref. — a ) K1.2 दार्शं; K4.7 Da4 D2.4.5.7.9 T G1-3 M5 दर्शश्च ( for दर्शं ). B6 D5.7 T G1-3 M5 पौ( T2 G2 M5 पू )र्णमासश्च; Ds1 पूर्णमासं; M1.6.7 पौर्णमास्यं ( for °मासं ). — b ) K2 त्वग्निहोत्रं; D2 अग्निहोत्रे; M5 [अ]प्यग्निहोत्रं ( for अग्नि° ). Bo Da3 Dn1.n4 D2.3.6.8 धीमतः; T G1-3 °ता ( for °ताम् ). — c ) K2 चातुर्मासानि. G2 चैवाहं ( for °संस् ). — d ) K1.2.4 येषु; K7 D4.9 M7 ( sup. lin. ) एष ( for तेषु ). K4 यज्ञ-; K6 Bo.6-9 Dn1 D2.3.5-8 धर्मः; Da3 ब्रह्म-; Da4 Dn4 धर्म-; T1 G1 यज्ञे ( for यज्ञः ).

20 Ś1 missing (cf. v. l. 11). — a ) K4 अनारंभे; Da4 आ*रंभा. K2 सुध्यतयः; K4 सुवृत्तयः ( for सुधृतयः ). ✻ Cp : सुधृतयः, शोभना धृतिः बहिर्विक्षेपराहित्यं येषाम् । ✻ — b ) K6 V1 B6.7.9 Da3.a4 -संस्थिताः; Bo.8 ( marg. ) Dn1.n4 Ds D2.3.5-8 M1.6 -संज्ञिताः; G1 -संश्रताः ( for -संश्रिताः ). B8 शुचयो ब्रह्मणि स्थिताः. — c ) K7 ब्राह्मणा. K1.2 स ( for स्म ). Ds2 तान् ( for ते ). Dn1 Ds1 D4 देवास् ( for देवांस् ). T G1-3 M5 ब्रा( T1 G3 ब्र )ह्मणा एव तान्देवांस्. — d ) D5.7 तर्पयति. K1.2.4 Cp ( Cpp as in text ) अमृतैरपि; K7 D4.9 T G1-3 M5 Ca °रिव; D8 मनीषिणः ( for [अ]मृतै° ). ✻ Cp : अमृतैषिणः, अविनश्वरफलार्थिनः । ✻

21 = ( var. ) 12. 231. 23; 254. 32; B. 13. 113. 7. Quoted in Śaṁkara's Br. Sū. Bhāṣya under iv. 2. 14. Ś1 missing ( cf. v. l. 11 ). D5 om. ( hapl. ) 21. — b ) T2 G2 M5 सर्वं; M1.6.7 सम्यग् ( for सर्व- ). T G1-3 M5 ज्ञानेन ( for -भूतानि ). D4 पश्यति ( for °तः ). — c ) K1.2.4 हि ( for [अ]पि ). ✻ Ca : इवार्थे अपिशब्दः । ✻ — d ) K1.2 चापदस्य; T1 G1-3 M5 ह्यपदस्य ( for अ° ). ✻ Cp : अपदस्य त्यक्तमिथ्यावलम्बस्य, पदैषिणः परमपुरुषार्थस्य [ एषिणः ] ॥ Cv : अपदस्य लौकिक-

C. 12. 9657 B. 12. 270[69]. 22 K. 12. 275. 22 देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २१

चतुर्द्वारं पुरुषं चतुर्मुखं
चतुर्धा चैनमुपयाति निन्दा ।
बाहुभ्यां वाच उदरादुपस्था-
त्तेषां द्वारं द्वारपालो बुभूषेत् ॥ २२

नाक्षैर्दीव्येन्नाददीतान्यवित्तं
न वायोनीयस्य शृतं प्रगृह्णेत् ।
क्रुद्धो न चैव प्रहरेत धीमां-
स्तथास्य तत्पाणिपादं सुगुप्तम् ॥ २३

नाक्रोशमर्छेन्न मृषा वदेच्च
न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त-
स्तथास्य वाग्द्वारमथो सुगुप्तम् ॥ २४

नानाशनः स्यान्न महाशनः स्या-

---

स्थानाशारहितस्य, पदैषिणः मुक्तिपदैषिणः । ❀

22 Ś$_1$ missing (cf. v. l. 11). —$^a$) G$_2$ om. चतु. K$_{1.2.4}$ हि पुरं; K$_6$ पुरुषं च; G$_2$ परं* (for पुरुषं). K$_4$ तु चतुर्मुखं (for चतुर्मुखं). ❀ Ca. p: चतुर्द्वारं, चत्वारि बाहुवदनोदरोपस्था (Cp: °पस्थरूपाणि द्वाराणि) द्वारमिवानर्थस्य । ❀ —$^b$) D$_{5.7}$ चतुर्थाश्च (for °र्धा). T G$_1$ M$_5$ चतुर्मुखे( G$_1$ °खो )नैनम्; G$_{2.3}$ °मुखेनैवम्; M$_{1.6.7}$ °मूर्धैवैनम् (for °र्धा चैनम्). K$_1$ एतम्; K$_{2.4}$ एनम्; K$_7$ D$_{4.9}$ एवैनम् (for चैनम्). K$_1$ D$_{a4}$ D$_{5.7.9}$ M$_1$ उपयांति (for °याति). K$_6$ B$_{6.7-9}$ बाधा; B$_{0.8.9}$ (last two marg.) D$_{a3.a4}$ D$_{n1.n4}$ D$_s$ D$_{2.3.8}$ वाचा; D$_{5.7}$ G$_3$ नित्यं; D$_6$ चैव; M$_{1.6}$ निष्ठां; M$_7$ निष्ठा (for निन्दा). Kumbh. ed. चतुर्मुखो नैनमुपैति निंदा. ❀ Cn: चतुर्धा विराट्सूत्रान्तर्यामिशुद्धरूपेण। ❀ —$^c$) K$_1$ वच; K$_6$ D$_{s2}$ D$_6$ वाचम्; D$_5$ चानु; T$_1$ G$_{1.2}$ M$_{1.5.6}$ चैवम्; T$_2$ G$_3$ चैनम् (for वाच). K$_{4.6}$ D$_{s1}$ उदाराद् (for उद°). D$_{5.7}$ उपास्यते (for उपस्थात्). M$_7$ वाशव्या तुभ्यामुपरामुदस्था (sic). ❀ Cs: उदरादुपस्थादिति तृतीयार्थे पञ्चमी । ❀ —$^d$) K$_6$ तेषां द्वारैर्; T$_1$ वाचैवैतद्; T$_2$ M$_5$ वाचा चैव; G$_{1-3}$ वाचैव; M$_{1.6}$ तेषां च द्वारं (for तेषां द्वारं). K$_4$ द्वारपाले (for °पालो). D$_{5.7}$ तेषां द्वारं द्वारपालैः सुगुप्तं. ❀ Cp: बुभूषेत् संवृणुयात् । ❀

23 Ś$_1$ missing (cf. v. l. 11). —$^a$) K$_4$ माक्षं; K$_6$ नाक्षौ (for नाक्षैर्). K$_2$ देवीन्; K$_4$ दैव्या; K$_6$ देव्येन्; K$_7$ G$_1$ दिव्यैर्; B$_7$ दीव्येर्; B$_9$ M$_7$ दीव्यैर्; D$_{s1}$ दिव्येन् (for दीव्येन्). K$_{1.2}$ नाददेत; G$_2$ °धीत (for °दीत). G$_2$ om. from न्यवित्तं up to भाषो (in 24$^c$). K$_6$ [अ]न्यवित्तं; D$_3$ [अ]न्यवृत्तं; D$_{5.7}$ [अ]थ वित्तं; G$_1$ [अ]न्यवित्ता (for °वित्तं). —$^b$) K$_{1.2.6.7}$ V$_1$ B$_{6.8.9}$ D$_{a4}$ D$_{s2}$ D$_{3.9}$ च (for वा). K$_2$ [अ]प्यग्नीयस्य; D$_{a3.a4}$ [अ]योनियस्य; Cv °निजस्य (for °नीयस्य). K$_{1.2}$ B$_{6.8.9}$ स्रुवं; K$_6$ V$_1$ D$_{a4}$ D$_{s1}$ Cs श्रुवं; K$_7$ B$_{0.7}$ D$_{s2}$ D$_{2-4.6.9}$ श्रुतं; Cv सुतां (for शृतं). K$_{1.2.4}$ V$_1$ प्रगृह्येत्; B$_0$ °ह्णीयात्; D$_{n1}$ D$_{s2}$ D$_{2.3}$ Cn प्रगृह्णात्; D$_{n4}$ D$_8$ °ह्णन्; D$_{s1}$ °ह्णान् (for °ह्णेत्). D$_{5.7}$ न (D$_5$ om.) गृह्णीयाद्धीनयोनेः श्रुतं च; T G$_{1.3}$ M$_5$ ना( T$_1$ G$_3$ न- ; G$_1$ [अ]न्य )योनिजस्येह ध्रु( T$_2$ M$_5$ स्रु )वं प्रगृह्णेत्; M$_{1.6}$ नायोनिजस्यैव स्रुवं प्रगृह्णेत्; M$_7$ न योनिहीनस्येह ध्रुवं प्रगृह्णेत्. ❀ Cn: शृतं, हविः प्रगृह्णात्, प्रतिगृह्णीयात् । पञ्चमलकारोऽयम् ॥ Cs (reading श्रुवं): हीनजन्मानं न याजयेदित्यर्थः । ❀ —$^c$) B$_9$ [ऽ]पि (for न). K$_{1.2}$ चेह; K$_6$ B$_6$ D$_{5.7}$ T G$_{1.3}$ M$_{1.5.6}$ [ए]व; K$_7$ D$_9$ चैवं; B$_9$ नैव (for चैव). K$_6$ प्रहरेद् (for °रेत). K$_6$ V$_1$ B$_{6-9}$ D$_{a4}$ D$_{5.7}$ T G$_{1.3}$ M$_{1.5-7}$ विद्वांस् (for धीमांस्). —$^d$) B$_0$ तस्यास्य (for तथास्य). K$_7$ D$_{a4}$ D$_9$ [अ]स्य स्यात्; B$_6$ चास्य; B$_9$ D$_{5.7}$ ह्यस्य; D$_4$ [अ]स्य सत्; T$_1$ G$_{1.3}$ तस्य (for [अ]स्य तत्). D$_4$ पाणिपदे; T G$_{1.3}$ पाणि( G$_1$ °ण्य )द्वारं (for °पादं). K$_4$ सुतप्तं (for सुगुप्तम्). K$_6$ तथा ह्यस्य स्यात्पाणिपादं प्रसुप्तं. ❀ Cp: पाणिपादमित्युक्तेः पादगुप्तिरपि कुत्सितदेशगमननिवृत्त्या विवक्षिता । ❀

24 Ś$_1$ missing (cf. v. l. 11). G$_2$ om. up to भाषो (cf. v. l. 23). K$_7$ om. (hapl.) 24. —$^a$) K$_6$ B$_{6.7.8}$ (marg. as in text).$_9$ D$_{a3.a4}$ ना( K$_6$ न )क्रोधम्; T$_2$ lacuna (for नाक्रोशम्). K$_4$ D$_{3.5.9}$ आच्छें( D$_9$ °छें )न्; B$_6$ (marg.) T$_1$ G$_{1.3}$ M$_{1.5-7}$ इच्छेन्; B$_9$ अर्हेन्; D$_{n1.n4}$ D$_s$ D$_2$ T$_2$ ऋच्छेन्; D$_8$ ऋर्छेन् (for अर्छेन्). B$_{0.8}$ (marg.) D$_{n1}$ D$_{s2}$ D$_{3.5-7}$ वृथा (for मृषा). ❀ Cp (reading न क्रोधमर्छेत्): क्रोधपूर्वं न वदेदित्यर्थः । ❀ —$^b$) D$_8$ पेशुनं; M$_6$ पैशुन्यं (for पैशुनं). K$_{1.2.4}$ परवादं; D$_{a3.a4}$ नानु° (for जन°). T$_1$ G$_{1.3}$ M$_{1.6.7}$ न (for च). ❀ Cp: जनवादं जनैः सह ग्राम्यकथाम् । ❀ —$^c$) T$_1$ G$_1$ तस्य (for सत्य-). T$_1$ -वृत्तम्; G$_3$ -व्रतम् (for -व्रतो). T G$_{1.3}$ [अ]मितभाषी; M$_{1.6}$ मितभाषे (for °भाषो). G$_2$ [ऽ]प्रमत्तास्. —$^d$) M$_1$ तथास्यो (for °स्य). D$_{5.7}$ तथास्य वाग्जातमथो नु गुप्तं.

दलोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाददीत
तथास्य स्याज्जाठरी द्वारगुप्तिः ॥ २५
न वीरपत्नीं विहरेत नारीं
न चापि नारीमनृतावाह्वयीत ।
भार्याव्रतं ह्यात्मनि धारयीत
तथास्योपस्थद्वारगुप्तिर्भवेत ॥ २६
द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।
उपस्थमुदरं बाहू वाक्चतुर्थी स वै द्विजः ॥ २७
मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥ २८
अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ॥ २९
द्वंद्वारामेषु सर्वेषु य एको रमते मुनिः ।
परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥ ३०
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या । C. 12. 9667 B. 12. 270[69]. 32 K. 12. 275. 32

25 Ś1 missing (cf. v. l. 11). —a) K4 नामामनः; T2 नानाशनाः (for °शनः). —b) K1.2 नलोलुपः (for अलो°). K1.2.4.7 D4.9 साधुरिहागतः; V1 °भिः संगतः; T G1.3 M1.5–7 °रनागसः; Cp साधु निरागसः (for साधुभिरागतः). G2 अलोलुपः सादरनागसः स्यात्. — D4 reads 25c–26b twice. —c) K6 V1 B6.8 Da4 D5.7 अथाददीत; B9 उपा°; D6 इहाददान (for °ददीत). —d) M7 तदा (for तथा). D5.7 ततस्तस्या (for तथास्य स्याज्). K1.2.4.7 D9 M1.6 सा; T1 G1–3 तज्; M7 स्यां (for स्याज्). Ds1 जागरी; D4 (both times) जावरी; T G1–3 M5–7 जठर-; M1 जठरे (for जाठरी). K1 द्वारातप्तिः; G2 -द्वारगुप्तं (for द्वारगुप्तिः).

26 Ś1 missing (cf. v. l. 11). For the repetition in D4, cf. v. l. 25. —a) Da4 -पत्नी (for -पत्नीं). ❀ Cn: हे वीर, युधिष्ठिर(!)। पत्नीं यज्ञसंबन्धवतीं नारीं न विहरेत, न विभजेत, तदुपरि स्त्र्यन्तरकरणेन धर्मार्थकामेषु तां विभागवतीं न कुर्यात् ॥ Cp: वीरपत्नीमन्यपूर्वां न विवहेत्, न परिगृह्णीयात्। ❀ —b) T G1.3 M5 चैव (M5 चापि) भार्याम् (for चापि नारीम्). K1 D6 अनृता; K2 °तं; K6 °ते; Da4 Ds अमृताव्; D4 (both times).7 अनृताम् (for अनृताव्). K1.4 च (K4 चा-) ह्वयेत; K6 B6.9 Da3.a4 D6 चाह्वयीत; K7 D4 (both times).9 T G1.3 M5 आह्वयेत (K7 °ति); B7 चाभूयीत (for आह्व°). G2 तद्वेद भार्यामनृतावाह्वयेत. —c) K1.2 D5 -व्रतस्थ; T1 -व्रत्तं हि; G2 -वृत्तं हि (for -व्रतं हि). K6 V1 B6.9 Da4 चात्मनि; Ds ह्यात्मना (for °नि). K1.2.7 B6 (marg. as in text).7 Da1 D4.9 T G1–3 M5 धारयेत (B6 °त्); D5.7 °रयेत्तथा (D7 om. तथा) (for °यीत). ❀ Cn: भार्याव्रतं, परस्त्रीवर्जनम् । ❀ —d) Da4 [अ]स्योपस्था-; T1 G3 तस्योपस्थ- (for [अ]स्यो°). G2 -द्वाम- (for -द्वार-). K7 D4.9 भवेच्च; Da3 D6 भवेत् (for भवेत). D5.7 यथास्योपस्थ( D7 यथा तस्योपस्थ )द्वारगुप्तिं समेति.

27 = (var.) B. 12. 300[ 299 ]. 28. Ś1 missing (cf. v. l. 11). —a) M5 चत्वारि (for द्वाराणि). D5.7 चास्य (for यस्य). K1.2.4 गुप्तानि; M5 द्वाराणि (for सर्वाणि). —b) K1.2.4 सर्वानि (K2 °णि) हि (for सुगुप्तानि). — Da3.a4 om. 27cd. —c) K1.2 पादं; T2 G1.2 M5 पाणिर्; M1.6.7 पाणी (for बाहू). —d) K6 V1 B0.6–9 च स; Dn1.n4 Ds D2.6.8 भवेद्; T2 G2 च वै (for स वै). K4.7 B8 Dn1.n4 Ds2 D2–6.8.9 T2 द्विज (for द्विजः). ❀ Cp: स वै द्विजः, कर्माण्यकृत्वापि । गुप्त्यभावे कर्मणां कृतानामपि वैयर्थ्यम् । ❀

28 Ś1 missing (cf. v. l. 11). —a) K7 यो याति; D4.9 यो यानि; D9 (marg. *sec. m.*) यान्यस्य (for मोघानि). D5.7 मोहादगुप्तद्वारस्य. —b) K2 सर्वानि (for °णि). —c) D5 तपसः (for °सा). —d) K2 अज्ञेन; K6 B6.7.9 दारेण; Da4 द्वारेण (for यज्ञेन). K1.2.4 आयुषा (for आत्मना).

29 Ś1 missing (cf. v. l. 11). —b) K1.2.4 G1 अनुपस्तीर्य- (for °स्तीर्ण-). K2 -शायितं; D5 -साधनं (for -शायिनम्). —c) K1 D7 बहूपधानं; K2 बाहूपदानं (for °पधानं). K7 साम्यंतं (for शाम्यन्तं). T1 G1–3 बाहूपशायिनं शांतं. —d) K2 ब्रह्मणं (for ब्रा°). — After 29, K6 reads 32.

30 Ś1 missing (cf. v. l. 11). K2.4 om. (hapl.) 30. —a) K1 द्वारारामेषु; G2 द्वंद्व° (for द्वंद्वा°). ❀ Ca: द्वंद्वारामेषु, सुखदुःखादौ बद्धरतिषु संसारिषु मध्ये ॥ Cp: शीतोष्णादौ बद्धरतिषु ॥ Cs: सहायरतेषु । ❀ —b) D5.7 य एवं; G2 यल्लोको (for य एको). K1 वसते (for रमते). V1 B6–9 Da3.a4 बुधः (for मुनिः). —c) K7 D4.9 अनभि-; B6 अनुप-; M1.6 अनव- (for अननु-). K7 D9 -ध्यायस् (for -ध्यायंस्).

C. 12. 9667
B. 12. 270(69). 32
K. 12. 275. 32

गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥ ३१
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥ ३२
नान्तरेणानुजानन्ति वेदानां यत्क्रियाफलम् ।
अनुज्ञाय च तत्सर्वमन्यद्रोचयतेऽफलम् ॥ ३३
फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।
विगुणानि च पश्यन्ति तथानैकान्तिकानि च ॥ ३४
गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चापि सुदुष्कराः ।
अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥ ३५

स्यूमरश्मिरुवाच ।

यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा ।
तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥ ३६

---

31 Ś1 missing (cf. v. l. 11). K1 om. (hapl.) 31–32. D7 transp. 31 and 32. —$^{a}$) G1 एन (for येन). K2 G1 बद्धं; B9 सर्वं; Da4 युद्धं; D5. 7 विश्वं (for बुद्धं). —$^{b}$) K7 प्रकृति-; Da4 प्रवृत्ति-; D7 प्रकृतिं (for °तिर्). Ds1 याः; D5. 7 यः (for या). ❀ Cp: प्रकृतिर्ब्रह्ममात्रम्, विकृतिर्मायाहेतुकं द्वैतजातम् । ❀ —$^{c}$) K2 गतिज्ञं; K6 मतिज्ञः; M5 गतिश्च (for °ज्ञः).

32 Ś1 missing (cf. v. l. 11). K1 om. 32 (cf. v. l. 31). K2. 4 om. (hapl.) 32. K6 reads 32 after 29. D7 transp. 31 and 32. With $32^{ab}$, cf. 12. 21. $4^{ab}$; 168. $42^{ab}$; B. 12. 326. $33^{ab}$; 12 App. I (No. 4), line 27; Harivaṁśa 1. 30. $41^{ab}$. —$^{a}$) B0 Ds2 D8 अभयः (for °यं). B8 (marg.) यस्य (for सर्व-). K7 D4. 5. 7. 9 M7 अभयं यस्य सर्वेभ्यः. —$^{b}$) Da3. a4 कुतः (for यतः). —$^{c}$) K7 यं (for यस्).

33 Ś1 missing (cf. v. l. 11). Before 33, V1 B0. 6–9 Da4 D8 Cp ins. कपिल उवाच. —$^{a}$) D5 नांतरे न. T G1. 3 M5. 7 -जानाति (for -जानन्ति). —$^{b}$) K2. 4 G2. 3 देवानां (for वेदानां). K6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 Cp. s दान(V1 वेद)-यज्ञ- (for वेदानां यत्). T G1–3 M1. 5–7 यः; B8 (marg.) तु (for यत्). M7 Cp. s क्रियाः (for क्रिया-). ❀ Ca: वेदानामिति वेदानित्यर्थे, छान्दसत्वात् । कर्मणो वेदान्विना क्रियाफलमपि न जानन्तीति अवश्यं वेदः सर्वैः प्रमाणतया अभ्युपगम्यः । ❀ —K7 om. (hapl.) $33^{cd}$; V1 reads the same on marg. —$^{c}$) Dn1. n4 Ds D2–4. 6. 8. 9 अविज्ञाय (for अनु°). V1 अननुज्ञाय तत्सर्वम्. —$^{d}$) Dn1 दोहयते (for रोचयते). ❀ Ca: मुमुक्षुः पुनः तत्सर्वमभ्यनुज्ञायापि अफलमेवाखिलं कर्म रोचते, ब्रह्मार्पणविधया ॥ Cp: यद्यपि पूर्वकाण्डे फलमन्तरेण दानयज्ञक्रियाः नानुजानन्ति तथापि तत् फलरागिणं प्रत्यनुज्ञाय उत्तरकाण्डे फलमन्तरेण तेषामेव दानादीनां अन्यत्फलं विविदिषाख्यं रोचयते । ❀ —After 33, K1. 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1. 3 Ca. p. v editions read for the first time 12. 262. $16^{c}$–$18^{b}$ (K7 D4. 9 $16^{c}$–$17^{d}$), repeating the same in proper place.

34 Ś1 missing (cf. v. l. 11). —$^{b}$) K7 D4. 5. 7. 9 पुष्टिमं(D7 °वं)ति (for व्युष्टि°). T2 G1 M5–7 Cs [अ]ध्रुवाणि; Cp (gloss: बहुकालव्यवस्थापिफलहेतुत्वात्) ध्रुवाणि (as in text). Da4 व्युच्छितं निष्कवाणि च (sic). ❀ Ca: व्युष्टिमन्ति, ब्रह्मलोकादिप्राप्त्या ॥ Cn: व्युष्टिः पारमैश्वर्यं, तद्वन्ति ॥ Cp: व्युष्टिमन्ति वैदिकत्वाद्बुद्धिजनकानि ॥ Cs: व्युष्टिमन्ति, परिणामवन्ति ॥ Cv: व्युष्टिः विभागः, तद्वन्ति । ❀ —$^{c}$) K1 निगुणानि; K7 D4. 5. 7. 9 निर्गु°; Ds1 विगृ°; G2 विपु° (for विगु°). ❀ Cp: विगुणानि, हिंसाबहुलतया दोषवन्ति ॥ Cs: विगुणानि, अन्यूनानतिरिक्ततया कर्तुमशक्यानि । ❀ —$^{d}$) B8 न (for च). K1. 2. 4 Ds D4. 9 T G1 M1. 5. 6 तथाने(Ds D9 T1 G1 °नै)कानि केचन (K2. 4 T1 G1 केन च); G2 तथा सत्राणि केचन; G3 तथा नैकानि केनचित्. —After 34, K7 D4. 9 read 12. 262. $18^{ab}$, for the first time, repeating it in its proper place.

35 Ś1 missing (cf. v. l. 11). —$^{a}$) K6 चास्य (for चात्र). T G1–3 M1. 6. 7 तु; M5 हि (for सु-). K1 सुदज्ञेया (sic); K7 सदुर्ज्ञेयो. ❀ Ca: गुणाः, यजमानस्य ऋत्विजां च मनःशुद्ध्यादयः । ❀ —$^{b}$) K6 B0. 6–9 Da3. a4 ज्ञातारोत्र; V1 °रोपि; Dn1. n4 Ds D2. 3. 8 °श्चात्र; D5. 7 M1. 6. 7 °रश्च; G2 ज्ञाता*पि (for ज्ञाताश्चापि). K1 सुदुष्करः; D5. 7 सुदुष्करं; M7 °लभाः. D6 ज्ञातारश्चात्र दुष्कराः. —$^{d}$) B6 (marg. as in text). 7. 8 (marg. as in text) Da3. a4 T G1–3 M1. 5–7 अपि (for अनु-). K6 Da4 -पश्यति (for °सि).

36 Ś1 missing (cf. v. l. 11). K7 D4. 9 om. (hapl.) 36–37. G1. 2 om. the ref. K6 B9 स्युमरश्मिर्; D5 स्थूम°; D7 स्थूण°; M7 स्यूमरमी (for °रश्मिर्). —$^{a}$) K6 तथा (for यथा). Da4 -प्रामाण्यंस्. K1. 2 यथा प्रमाणं (K1 om. णं) वेदाश्च; T1 G1–3 यथा च देव(T1 वेद)ब्राह्मण्यम्. —$^{b}$) Da4 त्यागस्य; D5 न्यासश्च; D7 न्यायश्च (for त्यागश्च). K1. 2 T2 M1. 5–7 सकलो; K4 सफले (for °लो). T1 G1–3

कपिल उवाच ।
प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः ।
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥ ३७

स्यूमरश्मिरुवाच ।
स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहागतः ।
श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ।
इमं च संशयं घोरं भगवान्प्रब्रवीतु मे ॥ ३८

प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः ।
किमत्र प्रत्यक्षतमं भवन्तो यदुपासते ।
अन्यत्र तर्कशास्त्रेभ्य आगमाच्च यथागमम् ॥ ३९
आगमो वेदवादस्तु तर्कशास्त्राणि चागमः ।
यथागममुपासीत आगमस्तत्र सिध्यति ।
सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥ ४०
नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना । C.12. 9680 B. 12. 270(69).45 K 12. 275. 45

---

अत्यागश्च कलौ यथा. — $^{c}$) K6 B6. 9 Da4 D3 (by corr. as in text) व्यक्तं; M1. 6. 7 तावद् (for व्यक्तौ). — $^{d}$) K1 भगवांस्; G1 उभयं. M1 तां (for तद्). D8 ब्रवीमि; T G1–3 वदस्व (for ब्रवीहि). D8 ते (for मे).

37 Ś1 missing (cf. v. l. 11). K7 D4. 9 om. 37 (cf. v. l. 36). T G1 om. the ref. — $^{a}$) B6. 7. 8 (marg. as in text). 9 Da4 अपि; Ds1 T G1. 3 M1. 5–7 इव; G2 एव (for इह). K1. 2. 4 पश्यामि; D5. 7 T G1–3 M1. 5–7 पश्यंतो (for °ति). — $^{b}$) K1. 2. 4 शाश्वते (K2 °ती) (for भवन्तः). K2 सत्परः; B6. 7. 9 Cp (gloss: कर्ममार्गे) स्वपथे; Da3. a4 सुप्र(Da4 °प)थे; M1. 6 सत्पथि; M7 सत्वति (for सत्पथे). K1. 2 स्थितः. ❀ Cs: सत्पथे स्थिताः, त्यागपथमसत्पथं पश्यन्त इव कर्मपथे स्थिता इत्यर्थः। ❀ — After $37^{ab}$, M1. 6. 7 read $39^{cd}$ for the first time, repeating it in its proper place. G1. 3 M5 om. (hapl.) $37^{c}$–$39^{b}$. M1. 6. 7 om. (hapl.) $37^{cd}$. — $^{c}$) V1 प्रत्यक्षं च; T1 °क्षकं (for °क्षं तु). B6. 9 Da3. a4 अत्रास्ते; D6 अत्रापि (for °स्ति). G2 प्रत्यगेकं यदत्रास्ति. — $^{d}$) Ds1 यदा (for यद्). G2 वदंत (for भवन्त).

38 Ś1 missing (cf. v. l. 11). G1. 3 M5 om. 38 (cf. v. l. 37). T G2 M1 om. the ref. K6 B9 Ds1 D8 स्युमरश्मिर्; K7 D9 स्यूत°; D5 स्थूम°; D7 स्थूण° (for स्यूम°). V1 reads $38^{a}$–$39^{b}$ on marg. — $^{a}$) K1. 6 B9 Ds1 स्यु(K1 सू)मरश्मिर्; K7 D9 स्यूत°; Da3 स्यूमरश्मिम्; D5 स्थूमरश्मिर्; D7 स्थूण° (for स्यूम°). T M7 विद्वन्; G2 विद्वान् (for ब्रह्मन्). — $^{b}$) G2 [आ]त्मनः (for [आ]गतः). ❀ Cn. s: इहागतः, गवि प्रविष्टः । ❀ — $^{c}$) Da4 श्रेयस्कामे; D5. 7 °स्कामं; G2 श्रीयस्कामः. G2 M6 प्रत्यवोचन् (for °वोचम्). — $^{d}$) Da4 विवक्षुयात्; Ds1 °क्षतो (for °क्षया). B6. 8 M7 आर्जवानु(B6 [marg. as in text])-विवक्षया; G2 मा जही न विवत्सया. ❀ Cn: विवक्षया, स्वपक्षनिर्वाहेच्छया । वहतेरिदं रूपम् । न प्रातिभट्येनेत्यर्थः ॥ Cs: न विवक्षया, विवादेच्छया । ❀ — $^{e}$) G2 मलं (for इमं). K1.2. 4 तु; D5 स (for च). K7 D4. 9 सशिवं; G2 संश्रयं (for संशयं). — $^{f}$) Da4 प्रभृवितु (sic) (for प्रब्रवीतु).

39 Ś1 missing (cf. v. l. 11). G1. 3 M5 om. $39^{ab}$ (cf. v. l. 37). V1 reads $39^{abcd}$ on marg. — $^{a}$) Ds1 T G2 M1. 6 इव (for इह). — $^{b}$) K7 D4. 9 M1. 6. 7 सत्पथि (for °थे). — M1. 6. 7 read $39^{cd}$ for the first time after $37^{ab}$. — $^{c}$) K7 प्रत्यक्षकृतं; Ds1 °क्षं**; D6 M5 °क्षमतं (D6 °तमे) (for °क्षतमं). — $^{d}$) K7 भवतो यद्; B0. 8 (marg.) D6 भगवान्यद्; T G1–3 M1 (both times). 5. 6. 7 (last two both times) भगवंत (G2. 3 °तम्) (for भवन्तो यद्). K1. 2 [ऽ]न्यद्; K4 [ऽ]न्ये; Ds1 D2 यम् (for यद्). K6 B6–9 Da3. a4 D5. 7 दृश्यत्यागमनिश्चयात् (B6 °नुत्तमात्; Da3. a4 °निश्चयः). — $^{e}$) K1. 2. 7 D4. 9 तत्त्व-; V1 T1 G1. 3 धर्म-; B6 (marg. as in text) D5. 7 Cp (Cpp as in text) तंत्र-; G2 कर्म- (for तर्क-). — $^{f}$) B0 Dn1. n4 Ds D2. 3. 6. 8 आगमार्थं; D5. 7 °मश्च; G1 °माश्च (for °माच्च). D5. 7 यथागतः; T G2. 3 यथा मम; G1 यथाक्रमं (for °गमम्).

40 Ś1 missing (cf. v. l. 11). — $^{a}$) K2 देव- (for वेद-). K1. 2. 4 -शास्त्रं; K6 Da3 Dn4 Ds2 D3. 8 M1 -वादास्; D7 -मार्गस् (for -वादस्). — $^{b}$) K2 देव-; K4 वेद-; K6 B6 (marg. as in text). 9 Da3. a4 Cp (Cpp as in text) तंत्र- (for तर्क-). G1. 3 -सुत्राणि; G2 -सूक्ष्माणि (for -शास्त्राणि). M7 चागमाः. — $^{c}$) B0. 6. 7. 8 (marg.). 9 Da4 Dn1. n4 Ds2 D2. 3. 5–8 यथाश्रमम् (for °गमम्). M7 उपासीनाः (for °सीत). — $^{d}$) B6. 7. 9 Da3. a4 D5. 7 तात (for तत्र). G1 विध्यति (for सि°). M7 सिध्यंति ब्रह्माणि श्रिताः. ❀ Cp: सिध्यति फलभाग्भवति । ❀ — $^{e}$) K7 सिद्ध-; G1. 3 बुद्धि- (for सिद्धिः). Da4 प्रत्यक्षरूपां. — $^{f}$) K1. 2. 4. 7 D4. 9 दृश्येत; G1 मृश्यति (for दृश्यति).

C. 12. 9681 B. 12. 270(69). 45 K. 12. 275. 45 ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति ।
एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भोः ॥ ४१
नैव त्यागी न संतुष्टो नाशोको न निरामयः ।
न निर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥ ४२
भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।
इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ ४३
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये किं निरामयम् ॥ ४४
कपिल उवाच ।
यद्यदाचरते शास्त्रमथ सर्वप्रवृत्तिषु ।
यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयम् ॥ ४५
सर्वं पावयते ज्ञानं यो ज्ञानं ह्यनुवर्तते ।

---

41 Ś1 missing (cf. v. l. 11). —a) T2 M7 गौर् (for नौर्). K7 V1 B8 (marg. as in text) D4. 9 M6. 7 नाभ्येव; D5. 7 नावेव; G1 नाविव (for नावीव). K2 निरुद्धा हि; Da4 निबद्धानि; G2 विबाध्यानि (for निबद्धा हि). Cpp अंधस्येवांधलग्नस्यम्. —b) K6. 7 V1 B0 Da4 D4. 9 श्रोतसा (for स्रो°). K7 D4. 9 T G2. 3 M5 सं-; G1 तं; M1 वि- (for स-). T2 -निबंधता (for °बन्धना). K1. 2. 4 D5. 7 स्रोतसामनिबंधने (D5. 7 °ना); Cs (gloss: अज्ञे पुरुषे संबद्धा) स्रोतसासन्निबंधना. —c) K1. 7 ह्रियमाना; V1 Bo. 7 क्रियमाणा; Dn4 D3. 6 T1 G3 ह्रीय°; D5. 7 क्लिश्यमाना (for ह्रियमाणा). V1 विद्वन् (for विप्र). —d) K6 कुबुद्धीस्; K7 D9 दुर्बुद्धींस्; V1 Bo. 6–9 D2. 3. 5–8 कुबुद्धिस्; Da4 Ds2 T G1–3 M1. 6. 7 °द्धिं (for °द्धींस्). —T G1–3 M6 Kumbh. ed. read 41ef after 44. —e) D6 बृहद् (for एतद्). V1 B6–9 Da4 ब्रवीहि (for °तु). K2 V1 B6–9 M7 भगवन् (for °वान्). —f) K6 B6–9 उपसन्नो; K7 D9 उपासको (for उपपन्नो). M1. 6 हि (for ऽस्मि). K1. 2. 4 7 D4. 9 [अ]धीष्व भोः (K1. 4 भो); V1 वै विभो; Da3 Dn1. n4 D8 D2. 6 T2 M1. 6 अधीहि भो (for °हि भोः). D5. 7 उपपन्नाय ब्रूहि मे; G2 °पन्नोस्मदीह्यभोः (sic).

42 Ś1 missing (cf. v. l. 11). Before 42, V1 Bo. 6. 7. 9 Da3 (marg.). a4 Cpp ins. कपिल उवाच. ❀ Cp: अत्र कपिल उवाचेति क्वचिद्दृश्यते पाठः । स च प्रमादलिखितो ज्ञेयः । ❀ —a) T2 त्यागे (for त्यागी). —b) K2 Bo. 7 Ds2 D3 T1 G2. 3 नशोको; K6 विशोको; K7 D4. 9 नामोहो; D5. 7 न मोही (for नाशोको). K6 वा (for न). K6 B7. 9 D5. 7 निराश्रयः; B6 lacuna (for °मयः). —c) K1. 2 Ds नानिर्विविरसो; K4 V1 Bo. 7. 8 Dn1. n4 D2. 3. 6. 8 T1 नानिर्विधि(K4 T1 °व)-त्सो; B6 lacuna; B9 Da3. a4 T2 Cn न निर्विधि-(T2 °व)त्सो; Ca नानिर्जिघृक्षो (for न निर्विवित्सो). K1. 2. 4 नावृद्धो; K6 नातिवृत्तो (hypermetric) (for नावृत्तो). K7 D4. 9 नावि(K7 om. वि)वित्सो नातिवृत्तो; G2 न निर्वेर्चो नापवृत्तो. ❀ Cn: ना पुरुषः, निर्विधित्सः चिकीर्षाशून्यः, आवृत्तः सज्ञाविमुखः ॥ Cs: विवित्सा लब्धुमिच्छा, तद्रहितः न । नावृत्तो, रागादिभ्योऽभिवृत्तः । ❀ —d) K1. 2. 4 नाभ्युत्पन्नो; K6 Bo. 6–8 Dn1 Ds2 D3. 5 Ca (gloss: न योगप्रवृत्तिमान्) नोप(D5 °पा)वृत्तो; V1 निर्विहिंसो; Ds1 G1 नाप्रवृत्तो; D8 lacuna (for नापवृत्तो). D7 T1 G1. 3 [ऽ]स्ति (for ऽस्ति).

43 Ś1 missing (cf. v. l. 11). —a) K6 B6. 8. 9 हि; K7 lacuna (for च). M1 सृष्यंति (for हृष्यन्ति). Da3. a4 भगवंतोपि हृष्यंति. —b) K1 शोदयंति (for शोचन्ति च). —c) K1 तु; K2 हि (for च).

44 Ś1 missing (cf. v. l. 11). V1 reads 44ab on marg. —b) K1. 2. 4 T G1. 3 च वृत्तिषु; D3 च जंतुषु; G2 च वर्तिषु (for प्रवृत्तिषु). —c) Da4 आलंब्य- (for आलम्ब-). —After 44, T G1–3 M6 Kumbh. ed. read 41ef.

45 Ś1 missing (cf. v. l. 11). B7 om. the ref. —a) K1 आचरणे; K7 D4. 9 समाचरेत्; Ds2 Ds. 5. 7 आचरिते (for °रते). K4 Da3. a4 शास्त्रे (for शास्त्रम्). ❀ Cp: आचरते, प्रतिपादयति । ❀ —b) K1. 2 B6. 7 D4 9 अर्थं-; K4 Dn1 Ds T G2. 3 M5 Cs (gloss: अर्थादनपेतं) अर्थ्यं; Dn4 G1 M1. 6 अर्थं (for अथ). K1. 2 D4. 9 -शास्त्र-; D5. 7 सर्वं (for सर्व-). K7 आश्रमाणां प्रवृत्तिषु. —c) B6 (marg.) यत्र (for यस्य). K1. 2. 7 V1 D4. 9 तस्य तस्य; B8 Ds2 M1. 6 यस्य (Ds2 °त्र) यस्य; Dn1 G2 यस्य ह्यत्र; M7 यस्य यद्यद् (for यस्य यत्र). K1 M7 अनुष्ठानं; K7 यदनु° (hypermetric); M1. 6 चानु° (for ह्यनु°). —d) T1 G1. 3 M5 तस्य तत्तु; T2 G2 तस्य तत्र (for तत्र तत्र). T2 निरामयः.

46 Ś1 missing (cf. v. l. 11). —a) K7 D4. 9 M1. 6. 7 पावयति; B6 (marg) Cpp (Cp as in text [gloss: अविद्यामलनिराकरणेन पूतं करोति]) पारयते; Da3. a4 D5. 7 Ca प्लावयति; T2 M5 प्रापयति (for पावयते). K6 V1 Bo. 6–9 Dn1. n4 Ds D2. 3. 6. 8 Cp. s ज्ञानं प्ला(K6 पा-; Cs प्लु)वयते सर्वं. ❀ Ca: प्लावयति । यथा मृदा-

ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥ ४६
भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरागमाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥ ४७
शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबला जनाः ।
कामद्वेषाभिभूतत्वादहंकारवशं गताः ॥ ४८
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्वमतयोऽशिवाः ॥ ४९
वैगुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ।
तेषां तमःशरीराणां तम एव परायणम् ॥ ५०
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः ।
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ।
नित्यमेवाभिवर्तन्ते गुणाः प्रकृतिसंभवाः ॥ ५१
एतद्बुद्ध्वानुपश्यन्तः संत्यजेयुः शुभाशुभम् ।
परां गतिमभीप्सन्तो यतयः संयमे रताः ॥ ५२ C.12.9693 B.12.270[69].56 K.12.278.56

---

दिकं जलेन प्लावितं जलाकारं भूत्वा द्रवीभावे कठिनतात्यागेन विलीयते, मृदिति न ज्ञायते, तद्वत् ॥ Cn : प्लावयते, संसारं नाशयति ॥ Cp : संसारसागरादुत्तारयति । ❀ —$^{b}$) D5 om. यो ज्ञानं. K1. 2 Dn1 Ds अनु-; D5. 7 परि- (for ह्यनु-). D4 -वर्तते; D7 -वर्तिते. K4 अनुज्ञानं प्रवर्तते. —$^{c}$) K7 V1 B6 (marg.) D4. 9 T G1–3 अपेता (for °त्य). Da3. a4 बुद्धिः (for वृत्तिः). —$^{d}$) Da4 स वि-; T1 सापि (for सा वि-).

47 Ś1 missing (cf. v. l. 11). B9 om. 47$^{a}$–50$^{b}$. —$^{a}$) Da3. a4 T G1–3 भवंति (for भवन्तो). K6 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 Cp व्यक्तं (for नित्यं). —$^{b}$) K1 सर्वताश्च. K6 B8 Dn1. n4 Ds D2. 3. 5–8 T G1–3 M5. 7 निरामयाः (for °गमाः). ❀ Ca : निरागमाः, अगृहीतागमतत्त्वार्थाः ॥ Cp : वैदिकज्ञानशून्याः । ❀ —$^{c}$) K1. 4. 6. 7 Ds1 D4. 5. 7. 8 T1 एकात्म्यं (K1 °त्म्यो; K6 °त्मं) (for ऐ°). D7 कं विद्धि (for कश्चिद्धि). —$^{d}$) K6 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 Cpp उप- (for अभि-).

48 Ś1 missing (cf. v. l. 11). B9 om. 48 (cf. v. l. 47). —$^{a}$) T1 G1–3 शास्त्राणि (for शास्त्रं हि). K2 हि बुद्धा; Dn4 स्वबुद्धा (for ह्य°). —$^{b}$) K2 वादमला; K7 D4. 9 °परा; V1 Bo. 6–8 Ds D3. 5–7 T G1. 3 M5 °बलाज्; Ca (gloss : शुष्कतर्कैकपराः) °बला (as in text). —$^{c}$) K1. 2. 4 -दोषाभि-; T1 -द्वेषोप-; G1 -द्वेवश्च (for -द्वेषाभि-). G2 कामवेगोद्भूतत्वाद् (submetric). —$^{d}$) B8 -वशंगमाः; Ds1 -वशं गतः.

49 Ś1 missing (cf. v. l. 11). B9 om. 49 (cf. v. l. 47). —$^{a}$) K1. 2. 4 G2 यथातत्त्वम्; K6. 7 Da3 T G3 M6 यथातथ्यम्; B6–8 Ds2 D3. 5. 7 यातातथ्यम्; Dn4 यथा तथा (for याथातथ्यम्). —$^{b}$) Ds1 -दश्यवः; G2 -दस्युवत्. ❀ Cs : शास्त्रदस्यवः, शास्त्रार्थापहारकाः । ❀ —$^{c}$) K1 ब्रह्मसेना; K6 Bo. 6. 7. 8 (marg. as in text) D5. 7 T1 ब्राह्मणास्ते (for ब्रह्मस्तेना). B8 (marg.) निरानंदा; G1. 2 [अ]तिसंरंभा (for निरारम्भा). ❀ Cn : निरारम्भाः, शमाद्यारम्भशून्याः ॥ Cs : श्रवणादिहीनाः । ❀ —$^{d}$) K1. 2. 4 अपेत- (for अपक्व-). G1 -मनयो; M1. 6. 7 -मनसो (for -मतयो). K6 V1 Bo. 6. 7. 8 (marg. as in text) Da3. a4 Dn1. n4 Ds D2. 3. 5–8 Cpp दंभमोहवशानुगाः.

50 Ś1 missing (cf. v. l. 11). B9 om. 50$^{ab}$ (cf. v. l. 47). —$^{a}$) K6 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 Cn. p. s नैर्गुण्यम् (for वैगुण्यम्). D8 अनु- (for एव). K7 D9 पश्यंत्यो (D9 °तो) (for °ति). —$^{b}$) B8 उप-; M6 अनि- (for अनु-). K7 -युंज्यते; Bo. 7. 8 -भुंजते; Da4 -भंजते; Dn1 G2 -युज्यते (for -युञ्जते). —$^{c}$) K6 Bo. 8 T1 G1. 2 अंतः- (for तमः-). K2 -प्रविष्टानां (for -शरीराणां). —$^{d}$) T1 अंत (for तम).

51 Ś1 missing (cf. v. l. 11). G2 om. 51$^{ab}$. —$^{a}$) K1. 2. 4 यथा च (for यो यथा-). M1. 6 लभते (for -प्रकृतिर्). —$^{b}$) T1 G3 प्रकृत्याः; T2 G1 M1. 5–7 °त्या (for °तेः). K4 Bo वशानुगाः; T1 वशं गतः. —$^{c}$) K6 प्रद्वेष-; D5 द्वेषस्य; T1 G1–3 क्रोधश्च (for द्वेषश्च). —$^{d}$) K6 B8 G1 क्रोधदं(G1 °डं)भो; T1 लोभो डंभो; G2 क्रोधारंभो; G3 क्रोधो डंभो (for क्रोधो दम्भो). K1 [ऽ]वृतं; M1. 5. 6 [ऽ]नृतो (for °तं). K1 तथा; K2. 4 यथा; K7 V1 D4. 9 तमः; B8 M1. 6 दमः (for मदः). —$^{e}$) T2 G1. 2 [अ]नु- (for [अ]भि-). K6 B9 Dn4 D2. 3 -वर्धंते (for -वर्तन्ते).

52 Ś1 missing (cf. v. l. 11). —$^{a}$) Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 एवं (for एतद्). Da3 Dn1. n4 D2. 8 ध्यात्वा; T2 G1 M6 बुद्धा (for बुद्ध्वा). Bo. 6. 8. 9 तु; G1 न (for [अ]नु-). K6 -पश्यंत; D5 -पश्यंत्यः; T2 -पश्यंति. — Bo om. 52$^{c}$–54$^{d}$. —$^{c}$) D5. 7 सतां (for परां). —$^{d}$) K6. 7 B6–9 Da3. a4 Dn4 Ds D2. 4. 6–9 समये; G2 संग्रामे (for समये). D5 यतयः समरे यताः. — After 52, M5 ins. :

C. 12. 9694
B. 12. 270[c9]. 57
K. 12. 275. 57

स्यूमरश्मिरुवाच ।
सर्वमेतन्मया ब्रह्मञ्शास्त्रतः परिकीर्तितम् ।
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥ ५३
यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥ ५४
न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥ ५५
शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः ।
शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे ।
अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥ ५६
शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतोदिशम् ।

712* यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मिन्स इत्येव संबन्धः स्यादसंहितः ।

53 Ś1 missing (cf. v. l. 11). Bo om. 53 (cf. v. l. 52). K6 B9 Ds1 D6. 8 स्युमरश्मिर्; K7 D9 स्यूत°; D5 स्यम°; D7 स्थूण°; G1 ब्रूम° (for स्यूमरश्मिर्). — a) T1 एव (for एतन्). K2 महा-; T G1-3 M5 त्वया; M1. 6 मम (for मया). D8 राजन् (for ब्रह्मन्). — b) K1. 2 संप्र- (for परि-). D7 -कीर्तितः; M7 -कल्पितं (for -कीर्तितम्). — c) K2 विज्ञाय (for [ह्य]वि-). — d) Da4 G1 प्रवर्तयः (for प्रवृत्तयः).

54 Ś1 missing (cf. v. l. 11). Bo om. 54 (cf. v. l. 52). — a) K1. 2. 6 Dn1 Ds2 D4 T2 G1. 2 M1. 6. 7 न्याय; K7 त्याज्य (for न्याय्य). K6 आधारः (for आचारः). — b) K1. 2 सर्वे; Ds1 सर्वः; Ds2 D3. 5. 6 G2 सर्व-; T2 स वै (for सर्वं). G2 स्थितिः (for श्रुतिः). — c) K7 D4. 9 यद्यन्या(K7 °स्या)य्यम्; Dn1 D3. 6 G1 M1. 6 यदन्यायम्; G2 यथान्यायम् (for यदन्याय्यम्). K2 यदन्यायमहाशास्त्रम्. — d) K2 एशा; G1 एषां. K1. 2. 4 शाश्वती; K6 V1 B6-9 Da3. a4 D5. 7 वैदिकी (for श्रूयते).

55 Ś1 missing (cf. v. l. 11). K1. 2. 4 om. (hapl.) 55. — a) M6 अप्रवृत्तिर्. — b) K6 काश्चिद् (for काचिद्). B6 D5. 7 इ (for [इ]ति). — c) T2 वेष- (for वेद-). — d) B6 तद्गच्छास्त्रम्; B9 तत्तच्छा°; Da3. a4 तत्र शास्त्रम्; D5. 7 T G1. 3 M1. 5-7 तदुच्छास्त्रम्; G2 कुतः शास्त्रम् (for तदशास्त्रम्). B8 (marg.) तच्छास्त्रमिति नः श्रुतिः.

56 Ś1 missing (cf. v. l. 11). Before 56, D8 ins. कपिल उवाच. — a) K1. 2. 4 V1 D4. 9 अपेत्य; T2 अपेता (for °तं). G2 अश्यंति (for पश्यन्ति). — B7 om. (hapl.) 56[bc]. — b) B3 (marg. as in text) मुक्त-; T1 G1. 3 M1. 5-7 [ऽ]त्यर्थ-; T2 G2 व्यर्थ- (for व्यक्त-). D6 -गामिनः (for -मानिनः). D5. 7 बहवोत्यक्तमादितः. ❀ Ca: व्यक्तमानिनः, व्यक्त एवायं वेदार्थ इति भ्रान्ताः ॥ Cn: व्यक्तं प्रत्यक्षसिद्धं, तदेव मन्यन्ते । ❀ — T2 om. 56[c]-58[b]. Da3 Dn1. n4 transp. 56[cd] and 56[ef]. — c) G1 शास्त्रे (for शास्त्र-). K2 Ds1 -दोषा; G1. 2 M5. 7 -दोषं (for -दोषान्). K1 पश्यंत; D5. 7 पश्यामि (for पश्यन्ति). — d) K4 D4. 5. 7. 8 वा (for the first च). D4. 5. 7 वा (for the second च). Bo. 8 (marg.) Dn1. n4 D8 D2. 3. 6 शोचंति च यथा वयं. — After 56[cd], Bo. 8 Da3 Dn1. n4 D8 D2. 3. 6 Cn Kumbh. ed. ins.:

713* इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ।
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एवमालम्बमानानां निर्णये सर्वतोदिशम् ।

[Bo om. line 2; Da3 om. lines 2-3.]

—Bo. 8 D8 D2. 3. 6 Kumbh. ed. cont. after the above, while G2 ins. after 56[cd], 714*. B7 D2 om. 56[ef]. — e) D5. 7 अविज्ञात- (for °ज्ञान-). — f) D7 हीने (for हीन-). K1. 2. 4. 7 B6. 9 Da4 D4. 5. 7. 9 M7 -ज्ञानास् (for -प्रज्ञास्).

57 Ś1 missing (cf. v. l. 11). T2 om. 57 (cf. v. l. 56). — a) K7 D5. 7. 9 M7 शक्यते केन (for शक्यं त्वे°). K6 सुकेन; V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 6-8 युक्तेन (for मु°). ❀ Ca: एकेन द्वैतादर्शिना आत्मैकनिष्ठेन योगारूढेन । ❀ — b) K2. 4 कृतकृतेन (for °कृत्येन). — c) K7 D8. 9 समाश्रित्य; T1 G1 उपा°; G2 उपासित्वा; G3 अपाश्रित्य (for व्यपा°). — K1. 2. 4 Bo om. (hapl.) 57[de]. — d) B7 वित्तं (sic); Da3. a4 चरितं; G2 चरंतः (for चरितुं). M7 सर्वतो दिशः. B8 (marg.) Dn1. n4 D8 D2. 6. 8 चरितुं विजितात्मना. — K6. 7 V1 B6. 7. 9 D3-5. 7. 9 T1 G2 (also). 3 M1. 5-7 Kumbh. ed. (also) ins. after 57[cd]: Bo. 8 D8 D2. 3 (also). 6 Kumbh. ed. after 713*: G2 after 56[cd]:

714* आनन्त्यं वदमानेन शक्तेन विजितात्मना ।

[K6. 7 तेनाधि-; D5 तेनाति-; D7 T1 G1. 3 Kumbh.

वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ॥ ५७
इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ॥ ५८
यद्येतदेवं कृत्वापि न विमोक्षोऽस्ति कस्यचित् ।
धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ॥ ५९
नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतःक्रिया ।
एतस्यानन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ॥ ६०
तथ्यं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः ।
यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥ ६१ C. 12. 9706 B. 12. 270[69]. 68 K. 12 275. 68

इति श्रीमहाभारते शान्तिपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

---

ed. (second time) नात्यंतं; G2 (second time) M5 नानंत्यं (for आनन्त्यं). B0 वदमाने च; Kumbh. ed. (second time) वंदमानेन (for बद्मानेन). D3 (second time). 4. 9 तेनाविवदमानेन (for the prior half). K7 सक्तेन (for शक्तेन). K6 अशक्तेन यथात्मना; B0 इह चामुत्र चापरे; B6. 8. 9 Da4 Dn1. n4 Ds D2. 3 (first time). 5-8 G2 (first time) श( B6 स )क्तेनावर्जितात्मना; B7 शक्तेन विदितात्मना; D4. 9 न सक्तेन जितात्मना; T1 G1. 3 M5 स( T1 अस )क्तेनाविदितात्मना; G2 (second time) सत्वेनाविदितात्मना (for the post. half).]

— $^{e}$) K6. 7 D4. 9 वेदवाक्यं (for °वादं). T1 G1-3 M1. 5-7 समाश्रित्य (for व्यपा°). — $^{f}$) K1. 6 V1 B7 D8 G1 M7 प्रभाषितं; K2 °शितुं; Da3. a4 °वितं (for °षितुम्). — After 57, K6 V1 B0. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 5-7 Kumbh. ed. ins.:

715* अपेतन्यायशास्त्रेण सर्वलोकविगर्हिणा ।

[Da4 अपेत्य (for °त-). D6 -शस्त्रेण (for -शास्त्रेण). V1 B0 Ds2 -विगर्हणा (for °र्हिणा).]

58 Ś1 resumes from 58. T2 om. 58$^{ab}$ (cf. v. l. 56). — $^{a}$) K2 दुष्कृतं; Da4 पुष्करं (for दु°). — $^{b}$) K1. 2 कुटुंभम्; Da4 कुटंबम्; G3 कुटुं°. K2 -संश्रितुं; G1 -संश्रुतं. — $^{c}$) T1 अध्यापनं (for अध्ययनं). G1 M7 यज्ञं (for यज्ञः). — $^{d}$) K6. 7 B9 D5. 7 प्रजाः (for प्रजा-). T2 -संतान (for °नम्).

59 Before 59, D8 T1 G1. 3 ins. स्थू( D8 स्थु )-मरश्मिः. K1 om. 59. — $^{a}$) D8 यथा (for यदि). K7 D4. 6. 9 एव (for एवं). Ś1 K2. 4 वै; G2 [अ]स्ति (for [अ]पि). — $^{b}$) M7 हि (for न). K7 D4. 9 कश्चन (K7 °नः) (for कस्यचित्). — $^{c}$) G2 कामं (for कार्यं). ❀ Ca: धिक्कर्तारं, एतत्कर्तारं धिक् । ❀ — $^{d}$) T2 G1. 2 श्रमं (for श्रमश्च). T1 G1-3 चात्र; T2 छाया (for चायं). G2 निरर्थकं.

60 $^{a}$) G2 नात्यक्यम् (sic) (for नास्ति°). Ś1 K2. 4. 7 D4. 7. 9 G8 चास्य; K1 वास्य; B6 Da3. a4 चेत्स्याद् (for च स्याद्). — $^{b}$) Ś1 K2. 4 देवानां (for वेदानां). B8 (marg.) अन्यथा- (for पृष्ठतः-). Ś1 K1 -कृताः; V1 Da3. a4 Dn1. n4 Ds1 D8 G1 M7 -क्रियाः. ❀ Ca: पृष्ठतःक्रिया, वेदानामप्रामाण्यमापद्येत । ❀ — Ś1 reads 60$^{c}$-61$^{d}$ on marg. — $^{c}$) ❀ Ca: आनन्त्य, शाश्वतफलप्रदत्वम् । ❀ — $^{d}$) K7 भगवान्.

61 Ś1 reads 61 on marg. 61$^{ab}$ partly damaged in Ś1. — $^{a}$) Ś1 K1. 2. 4 सत्यं; K6 B0. 8 Dn1. n4 D8 D2. 3. 6. 8 G2. 3 तत्त्वं; G1 तथ्या (for तथ्यं). K1 वचस्व (for वदस्व). — $^{b}$) Ś1 K1. 2 Da3. a4 Ds2 D3-5. 7. 9 T G1. 3 M7 उपपन्नो; K7 उप*न्नो (for °सन्नो). K7 [ऽ]स्मि (for ऽस्मि). K1 अधीष्व; K2 अधीषु; K6 अधो हि; G2 अधीश (for °हि). K7 Dn1 Ds2 D4 T2 G3 M1 भो (for भोः). — $^{c}$) K2 विद्यतो; V1 विहितो; Da4 विदिते (for °तो). — $^{d}$) G1 अप- (for उप-). D5. 7 तथेदमुपशिक्षितुं.

Colophon. G6 missing: K3. 5 B1-5 Da1. a2 Dn2. n3 D1 G4. 5 M2-4 absent. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 B0. 5-9 Da3. a4 Dn1. n4 Ds1 D2-9 T G1. 3 M1. 5-7 मोक्षधर्म. — *Adhy. name:* K1 B6. 7. 9 Da3. a4 D2. 3. 8 M1 गोकपिलीयं; K2. 4. 6 V1 B0. 8 Dn1 Ds D5. 6 गोकापिली( K2. 4 °ले )यं; K7 D4. 9 गोकपिलीये त्यागप्रशंसा; D7 त्यागप्रशंसा; M6 गोकपिलसंवादः; M7 कपिलसंवादे मोक्षप्रशंसनं. — *Adhy. no.* (figures, words or both): K6 B7 Dn4 M1. 6. 7 94; Dn1 D7 T1 G1. 3 M5 96; Ds2 95; D8 90; T2 109; G2 91. — *Śloka no.:* Da4 66; Dn1 68; Dn4 67; D8 69.

# २६२

C. 12. 9707
B. 12. 271[70]. 1
K. 12. 276. 1

कपिल उवाच ।
वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतःकृताः ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १
शरीरमेतत्कुरुते यद्वेदे कुरुते तनुम् ।
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः ॥ २
आनन्त्यमनुयुङ्क्ते यः कर्मणा तद्ब्रवीमि ते ।
निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम् ॥ ३
धर्म इत्येव ये यज्ञान्वितन्वन्ति निराशिषः ।
उत्पन्नत्यागिनोऽलुब्धाः कृपासूयाविवर्जिताः ।
धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ॥ ४
अनाश्रिताः पापकृत्याः कदाचित्कर्मयोनितः ।
मनःसंकल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ॥ ५
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।

---

## 262

☞ This adhy. is missing in $G_6$ (cf. v. l. 12. 259. 1).

1 [a]) $D_{4.9}$ प्रमाणा. $Dn_4$ प्रामाणं हि तु लोकानां (sic). — [b]) $K_1$ वेदः. $B_8$ (marg. as in text) $Da_{3.a4}$ -क्रियाः (for -कृताः). — 1[cdef] = Maitrā. Up. 6. 22; quoted in the Vākyapadīya under 1. 22. — [c]) $G_1$ चेद् (for द्वे). $K_1$ (by corr.) ब्रह्मणो; $Da_4$ $Dn_4$ $G_1$ ब्रह्मणि ($Da_4$ °णा). — [d]) $K_{2.7}$ तत् (for यत्). — [e]) $Da_4$ शब्दो (for शब्द-). $K_2$ निष्क्रांतः (for °ष्णातः). $M_7$ शब्दब्रह्मविनिष्णातः. ❀ Ca : शब्द-ब्रह्म, वेदः । ❀ — [f]) $D_4$ om. (hapl.) from ह्माधि-गच्छति up to ब्राह्म (in 2[d]).

2 $D_4$ om. up to ब्राह्म (cf. v. l. 1). — [b]) $Dn_4$ पदद्वे; $T_1$ $G_2$ यद्वै तत्; $G_3$ यद्वेदात् (for यद्वेदे). $T_1$ $M_{1.6.7}$ मतिं (for तनुम्). $D_7$ $G_1$ यद्वै ते कुरुतेति तं. ❀ Ca : वेदे कुरुते तनुं, वेदार्थं शरीरं उपनयनद्वारा ब्राह्मणशब्दवाच्यं कुरुते ॥ Cn : गर्भाधानविधिना उत्पाद-यति ॥ Cp : उपनयनेन वेदाध्ययनयोग्यं शरीरं कुरुते ॥ Cs : यदुपनयनसंस्कारं कुरुते तद्द्वितीयं जन्म । ❀ — [c]) $V_1$ $B_8$ (marg. as in text) वेद-; $Da_{3.a4}$ $T_2$ $M_7$ कृतः. $Ś_1$ $K_1$ $Ds_2$ -शुद्धि-; $K_2$ -बुद्धि- (for -शुद्ध-). $T_1$ $G_2$ [ऽ]पि (for हि). — [d]) $K_6$ $Bo_{.6.8.9}$ $Da_{3.a4}$ $Ds_2$ $D_{5-7}$ वेदे (for पात्रं).

3 [a]) $K_6$ $Bo_{.6-9}$ $Dn_{1.n4}$ $D_{2.3.6.8}$ अत्र बुद्ध्ये($K_6$ $B_9$ °द्धे)दं; $V_1$ अनुयुक्तोयं; $B_8$ (marg.) $Da_{3.a4}$ °युक्तं यत्; $T_1$ $G_{1.3}$ $M_5$ °चित्यैवं ($G_1$ °व); $T_2$ °चिंत्येदं; $G_2$ °चिंत्यं च; $M_{1.6}$ °चिंतेयं; $M_7$ °चिंत्याहं (for °युङ्क्ते यः). $K_7$ $D_{4.9}$ यत् (for यः). ❀ Cs : आनन्त्यं, मुक्तिफलत्वम् । ❀ — [b]) $B_7$ $Dn_{1.n4}$ $D_8$ $D_{2.3.6.8}$ $T_2$ $M_{5.7}$ कर्मणां; $T_1$ $G_{1-3}$ °णस्. $K_7$ $D_{4.9}$ यद्; $Ds_2$ प्र- (for तद्). $Ds_1$ $D_2$ ब्रवीतु मे (for °मि ते). ❀ Cn : कर्मणां फलमानन्त्यं मोक्षोपयोगि चित्त-शुद्धिरूपम् । ❀ — [c]) $Dn_1$ $D_6$ अनागमम् (for निरा°). $K_4$ अनंतिक्षुं; $D_5$ अनैतिथ्यं (for °तिह्यं). ❀ Cp : इति हेति स्मृतिहेतुत्वादैतिह्यमनुमानं, तन्न भवतीत्यनैतिह्यम् ॥ Cv : निरागमं, प्रवृत्तिकर्मप्रतिपादकागमे श्रद्धां विना । ❀

4 [a]) $K_7$ [ऽ]वज्ञान्; $T_1$ $G_{1.3}$ यज्ञं (for यज्ञान्). — [b]) $Da_3$ नराशिषः. — [c]) $K_2$ [ऽ]लुब्धः. ❀ Cp : उत्पन्नत्यागिनः, उपस्थितफलत्यागिनः । ❀ — [d]) $T_2$ क्रियासूया-; $G_{1.2}$ कोपा°; $M_6$ कृता° (for कृपा°). — [e]) $K_7$ $T_2$ धन्यानाम्; $T_1$ $G_2$ दाना° (for धना°). $T_1$ $G_2$ पात्रं (for पन्थास्). — [f]) $D_6$ प्रतिपादिनं. ❀ Ca : तीर्थेषु, उपरागादिषु ॥ Cn : सत्पात्रेषु । ❀

5 [a]) $K_2$ अनाश्रित्याः; $K_7$ $D_9$ न लिप्यंते; $D_4$ अनासृताः; $G_1$ °श्रुताः (for °श्रिताः). $K_6$ $V_1$ $Bo_{.6-9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.5-8}$ पाप($K_6$ °क)कर्म; $K_7$ $D_4$ °कृत्यात्; $T_1$ $G_1$ $M_5$ °कृत्यां; $T_2$ $G_2$ °कृत्यं; $M_7$ °कृताः (for °कृत्याः). — [b]) $K_{4.7}$ $Bo_{.8}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.6-8}$ Cp कर्मयोगिनः; $K_6$ अपि योनितः; $B_{6.7}$ $Da_{3.a4}$ कर्ममानिनः; $D_5$ कार्ययोगिनः; $D_9$ कर्मयोगतः; $T_1$ $G_{1-3}$ ब्रह्मयोनितः; $T_2$ कर्मयोगितः (for कर्मयोनितः). — [c]) $D_{4.9}$ -संशुद्धा; $D_7$ -संशुद्धिर्. — [d]) $K_{2.7}$ $V_1$ $Dn_4$ $D_{4.9}$ T $G_{1-3}$ $M_7$ विशुद्धा (for °द्ध-). $T_2$ -निश्चये.

6 [a]) $Ds_2$ नक्रुध्यतो. $B_8$ [ऽ]नु- (for ऽन-). — $G_2$ om. 6[cd]. $K_6$ $B_{6-9}$ $Da_{3.a4}$ $D_{5-7}$ repeat 6[cd] after 7. — [c]) $T_1$ (also as in text) सुशुद्धाश्च; $G_1$ सुशुक्लाश्च (for त्रि°). $K_6$ (first time) $V_1$ $B_{6.7.8}$ (marg. as in text).$_9$ $Da_{3.a4}$ (all first time) ज्ञाननिष्ठात्मतृप्ताश्च;

ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ॥ ६
आसन्गृहस्था भूयिष्ठमव्युत्क्रान्ताः स्वकर्मसु ।
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ॥ ७
समा ह्यार्जवसंपन्नाः संतुष्टा ज्ञाननिश्चयाः ।
प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे ॥ ८
पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः ।
चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवाभिसंहताः ॥ ९
संहत्य धर्मं चरतां पुरासीत्सुखमेव तत् ।
तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन ॥ १०
सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ॥ ११
य एव प्रथमः कल्पस्तमेवाभ्याचरन्सह ।
अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते ।
दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः ॥ १२ C. 12. 9720 B. 12. 271[70].14 K. 12. 276. 14

K6 B6–9 Da3. a4 D5–7 ( all second time ) त्रिशुक्ला ज्ञाननिष्ठास्ते ( B8 °श्च ). ❀ Cn : त्रिशुक्लाः, जन्म कर्म विद्या चेति त्रीणि शुक्लानि येषाम् ॥ Cs : योनिविद्याकर्मभिः शुद्धाः ॥ Cv ( reading त्रियुक्ताः ) : त्रिभिर्वेदैर्युक्ताः । ❀

7 $^{a}$) D6 गृहस्थ-. G1 भूयिष्ठां. —$^{b}$) D9 अव्यक्रांताः; T1 G1–3 ह्युपक्रांताः; T2 M7 अप्युत्क्रांताः ( for अव्यु° ). ❀ Cn. p : अव्युत्क्रान्ताः आदरवन्तः । ❀ —$^{c}$) Ś1 K2 ईजानाश्च; K6 B6. 9 Da3. a4 ब्राह्मणाश्च ( for राजानश्च ). K6 V1 B6–9 Da3. a4 तपोयुक्ता. —$^{d}$) K2 ब्रह्मणाश्च; K6 B6. 9 Da3. a4 राजानश्च. K4. 6 B7 Da3. a4 D4 य( B7 त )था विधिः; T1 तथाविधि. — After 7, K6 B6–9 Da3. a4 D5–7 repeat $6^{cd}$.

8 $^{a}$) K6 सममार्जव-; T2 शमाद्या° ( for समा ह्या° ). —$^{b}$) G2 विशुद्धा ( for संतुष्टा ). T2 ज्ञाननिश्चये. — K2. 4 om. $8^{c}$–$9^{d}$. —$^{c}$) K6 -धर्मे ( for -धर्माः ). ❀ Cs : प्रत्यक्षधर्माः, प्रत्यक्षीकृतधर्मफलाः । ❀ —$^{d}$) K1 श्रद्धधानः. Ś1 K1 B8 ( marg. as in text ) M7 परापरे; D8 °वराः; T1 G1–3 तपोधनः. ❀ Cs ( reading परावरान् ) : उच्चावचान्धर्मान् । ❀

9 K2. 4 om. 9 ( cf. v. l. 8 ). —$^{a}$) G2 भावितात्मानो. ❀ Cp : पुरस्तात्, जन्मान्तरे ॥ Cs : भावितात्मानः, परमात्मध्यानपराः । ❀ —$^{b}$) B7 -प्रजाः ( for -व्रताः ). —$^{c}$) Da3 चरित- ( for चरन्ति ). Da4 धर्मे. Ś1 K1 कृच्छ्रेण; D4 कृच्छ्रोपि; G2 कृच्छ्रेषु. —$^{d}$) D4 दुर्गो ( for दुर्गे ). D4. 9 वै( D4 वे )व; T1 G1. 3 चापि; G2 M1. 5–7 वापि ( for चैव ). K6. 7 V1 D4. 7. 9 Ca ( gloss : कृताभिसंधयः ) Cp [अ]भिसंहिताः; B0. 6–9 Da3. a4 Dn1. n4 Ds D3. 6. 8 [अ]पि संहताः ( for [अ]-भिसं° ). ❀ Cs ( reading सुसंहिताः ) : सख्री[? सज्जी]-भूय स्थिताः । ❀

10 G3 om. 10–11. —$^{a}$) Ś1 K1. 7 D4. 9 संहित्य; K4 मांहित्य ( sic ); D2 महत्य. B0 धर्माच् ( for धर्मं ). Ś1 K1. 4 चरतः ( for चरतां ). K2 सांहित्य धर्मे चरताः ( sic ); V1 संहत्य चरतां धर्मं. —$^{b}$) Da4 सुषम् ( for सुखम् ). — V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6 Cp Cal. Bom. ed. repeat $10^{cd}$ after $12^{ab}$; while D7 repeats $10^{cd}$ after $12^{ef}$. —$^{c}$) Dn4 Ds1 ( both second time ) T1 G1 आसीद्; G2 आसन् ( for नासीद् ). Dn1 ( second time ) विधातव्ये. —$^{d}$) K4. 6 V1 ( both times ) B0. 6. 7 Da3 ( all first time ). a4 ( both times ) Dn1. n4 Ds D2. 3 ( all first time ). 5. 6 ( first time ). 7 ( both times ). 8 T2 G2 M1. 6. 7 Cal. Bom. ed. ( both first time ) कथंचन ( for कदा° ).

11 G3 om. 11 ( cf. v. l. 10 ). D5 om. $11^{a}$–$12^{b}$. —$^{a}$) G1 M5 संहत्य ( for सत्यं हि ). D6 सर्वम् ( for धर्मम् ). K2 आश्रित्य ( for आस्थाय ). T2 ते हि धर्मं समास्थाय. —$^{b}$) K2 गताः; D7 नराः; M7 मतां ( for मताः ). —$^{c}$) M7 अनुक्रुध्यंते. ❀ Ca. p : मात्राम् इन्द्रियम् ॥ Cn : मीयन्ते विषया अनयेति मात्रा बुद्धिः । तां नानुरुध्यन्ते, अपि तु शास्त्रमेव ॥ Cs : मात्राम्, विषयपरंपराम् । Cv : मात्राम्, रूपरसादिकम् ॥ ❀ —$^{d}$) K7 Da4 Ds2 D4. 7. 9 T1 G1. 2 न धर्मच्छ( T1 °र्माच्च )लनं ततः. ❀ Cs : अन्ततः कारणकालेऽपि । ❀

12 D5 om. $12^{ab}$ ( cf. v. l. 11 ). —$^{a}$) T2 एषः; G2 मे च; M1. 6 एवं. K2 प्रथमा; Da3 प्रथमं. —$^{b}$) Ś1 K2. 4 [अ]त्राचरेत्; K1 D4. 9 [अ]न्वाचरन् ( K1 रेत् ); Da3 [अ]द्याचरन्; Da4 [आ]चरन् ( submetric ); D7 T G1–3 M1. 3–7 [अ]त्राचरन् ( for [अ]भ्याचरन् ). K7 D4. 9 सदा; D7 T G1. 3 M5 महान्; G2 महत् ( for सह ). — After $12^{ab}$, D7 reads $12^{ef}$ followed by repetition of $10^{cd}$; while, V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6 Cp Cal. Bom. ed. repeat $10^{cd}$. —$^{c}$) K6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5–8 तस्मिन्विधौ ( for अस्यां स्थितौ ). G2 अन्यान्स्थिरासितानां हि ( sic ). —$^{ef}$) Ś1 K1. 2. 4. 7 D4. 9 T G1–3 M5 यदा च ( T G1–3 M5 तु ) दुर्बलात्मानः प्रायश्चित्तं तदा ( G1 तथा ) भवेत्.

प्रादुर्बभूव सुमहानग्निः कालानलोपमः ॥ ३७
तत्र चाजायत तदा पुरुषः पुरुषर्षभ ।
ह्रस्वोऽतिमात्ररक्ताक्षो हरिश्मश्रुर्विभीषणः ॥ ३८
ऊर्ध्वकेशोऽतिलोमाङ्गः श्येनोलूकस्तथैव च ।
करालः कृष्णवर्णश्च रक्तवासास्तथैव च ॥ ३९
तं यज्ञं स महासत्त्वोऽदहत्कक्षमिवानलः ।
देवाश्चाप्यद्रवन्सर्वे ततो भीता दिशो दश ॥ ४०
तेन तस्मिन्विचरता पुरुषेण विशां पते ।
पृथिवी व्यचलद्राजन्नतीव भरतर्षभ ॥ ४१
हाहाभूते प्रवृत्ते तु नादे लोकभयंकरे ।
पितामहो महादेवं दर्शयन्प्रत्यभाषत ॥ ४२
भवतोऽपि सुराः सर्वे भागं दास्यन्ति वै प्रभो ।
क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ॥ ४३
इमा हि देवताः सर्वा ऋषयश्च परंतप ।
तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ ४४
यश्चैष पुरुषो जातः स्वेदात्ते विबुधोत्तम ।　C. 12. 10258 B. 12. 284[3].47 K. 12. 289 47

(marg. as in text) Dn1. n4 Ds D2. 3. 8 G2 M7 तदा (for तथा). K1. 2. 4 विभो; G1 भुवः (for भुवि).

38 Ś1 missing (cf. v. l. 13). — a) D5. 7 ततस्तु (for तत्र च). — b) Da4 om. (hapl.) पुरुषः. — c) K1. 4 V1 B3 Da4 D5. 7 T2 [ऽ]तिमात्रो; K6 Bo. 6. 7. 9 Da3 Dn1. n4 Ds D2. 3. 6. 8 M7 °मात्रं (for °मात्र-). B8 (marg.) -पिंगाक्षो; G2 M1. 5–7 -रक्तांगो (for -रक्ताक्षो). T1 G1. 3 अतिमात्रोतिरक्ताक्षो. — d) K1 Da4 T1 G1. 3 M5 हरिश्मश्रु-; K6 °श्मश्रूर्. T1 M1. 5. 6 विभूषणः (for विभी°).

39 Ś1 missing (cf. v. l. 13). — a) K6 [ऽ]तिरोरांगः (sic); Ds1 °रोमांचः; T1 G1 °रिक्तांगः (G1 °गे); G2 °रोमा च (for °लोमाङ्गः). — b) K1. 2 Bo Da3 T M1. 5–7 श्येनानू(K1. 2 Bo °लू)कस्; K4 श्येनान्येकस्; K7 D4. 9 स्वेदाज्जातस्; B9 D5. 7 भी(D5 नी)षणांगस्; Da4 शेनातूकस्; G1 श्येनोनूनस्; G2 श्येनानूरुस्; G3 श्येनानीकस् (for श्येनोलूकस्). — Da3. a4 D4 om. (hapl.) 39[cd]; V1 reads the same on marg. — c) K4 D2. 8 कराल-; T G2. 3 M1. 5–7 कराळः; M1 °ळं (for °लः). G1 -वक्त्रश्च (for -वर्णश्च).

40 Ś1 missing (cf. v. l. 13). — a) K4. 6 V1 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 G2 सु- (for स). B6 (marg. as in text) M1. 5. 6 महातेजा; G2 °तत्त्वो (for °सत्त्वो). T G1. 3 M7 स तं यज्ञं महातेजा. — b) K6 V1 Bo. 6–9 D8 T G1 दहन् (for ऽदहत्). K1. 2. 4 कक्ष्यम् (for कक्षम्). B8 Ds2 D3. 5. 7 इह (for इव). — After 40[ab], K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 ins.:

735* व्यचरत्सर्वतो देवान्प्राद्रवत्स ऋषींस्तथा ।

[Bo विचरत्; B3 (marg.) Da4 Ds2 व्यचरन् (for °रत्).]

— c) Da4 देवश्च. K6 B6–9 Da3. a4 प्राद्रवन्; K7 D4. 5. 7. 9 M1. 5. 6 व्यद्र°; Dn1 D2. 3. 8 [अ]प्या°; Ds2 T G1. 3 M7 [अ]भ्य° (for [अ]प्य°). — d) G2 भीतो (for भीता).

41 Ś1 missing (cf. v. l. 13). — a) T1 G1. 3 ततस् (for तेन). M7 तस्मिन्विचरता तेन. — c) K1 च चलद्; K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D3. 6. 8 ह्यचल(Dn1 °र)द् (for व्यच°). — d) G2 अतीव त्वरितं विभो.

42 Ś1 missing (cf. v. l. 13). — b) M7 देवलोके (for नादे लोक-). — For 42[ab], K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 G2 subst.:

736* हाहाभूतं जगत्सर्वमुपलक्ष्य तदा प्रभुः ।

[K7 Da4 Dn1 Ds1 D4. 6. 9 उपलभ्य; Dn4 °लक्ष; G2 °वीक्ष्य (for °लक्ष्य). D4 सदा (for तदा).]

— c) K6 Da4 देवदेवं; Ds1 महाबाहुं (for °देवं).

43 Ś1 missing (cf. v. l. 13). Before 43, K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 T G1–3 M7 ins. ब्रह्मोवाच. — a) K1. 2 भवते; D4 °ता (for °तो). T1 G1 वै (for ऽपि). — b) D4 भोगं; T1 G1. 3 भागान् (for भागं). V1 D5. 7 च (for वै). K1 प्रभोः. — d) M1. 5. 6 -लोकेश्वर (for -देवे°). D6 तथा (for त्वया). D5. 7 सर्वदेवेश्वरेश्वर.

44 Ś1 missing (cf. v. l. 13). — a) M7 एतानि (for इमा हि). — b) B9 परंतपः; D5. 7 °तपाः.

45 Ś1 missing (cf. v. l. 13). — a) T1 G1 एव; M7 चेह (for चैष). K2. 4 राजन् (for जातः). — b) Ds1 खेदात् (for स्वे°). K2. 4 B8 पुरुषोत्तम; B9 त्रिबु-

C. 12. 10255 B 12. 284[3] 47 K. 12. 229. 47 ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ ४५

एकीभूतस्य न ह्यस्य धारणे तेजसः प्रभो ।

समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥ ४६

इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते ।

भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ॥ ४७

परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृक् ।

अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः ॥ ४८

ज्वरं च सर्वधर्मज्ञो बहुधा व्यसृजत्तदा ।

शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ॥ ४९

शीर्षाभितापो नागानां पर्वतानां शिलाजतुः ।

अपां तु नीलिकां विद्यान्निर्मोकं भुजगेषु च ॥ ५०

खोरकः सौरभेयाणामूषरं पृथिवीतले ।

पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ॥ ५१

रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम् ।

---

वित्तम (sic); Da4 Ds1 विबुधोत्तमः (Ds1 °मं); T2 G1 M1. 5–7 विबुधाधिप; G2 °धोपमः (for °धोत्तम). — c) Da4 जरो; D4 ज्वरा; D5. 7 हरो (for ज्वरो). — d) T G1. 3 M1. 5–7 वि- (for प्र-). Dn4 प्रचरिष्यथ.

46 Ś1 missing (cf. v. l. 13). — a) Ds2 (before corr.; marg. as in text) करी-; T1 एष; G1 एकस्य (hypermetric); M1. 5. 6 एक- (for एकी-). Dn1 Ds1 D8 त्वस्य; Dn4 स्वस्य; G1 कस्य; G2 तस्या (for ह्यस्य). M7 नास्य वै एकभूतस्य. — b) K7 धारणा; Dn4 °णं (for °णे). G1 चेतसः (for तेजसः). K7 D9 प्रभोः. — c) K2 समार्था; K7 Da3. a4 G2 समर्थाः; D5. 7 सर्वस्य (for समर्था). — d) K1. 2. 4 सृजताम् (for सृज्य°). K6 G2 इयं (for अयम्).

47 Ś1 missing (cf. v. l. 13). Before 47, B8 ins. भीष्म उवाच. — a) K7 D4. 9 इत्युक्ते (for °क्तो). B9 ब्राह्मणा. — b) D4 वापि; G2 M1. 5. 6 चैव (for चापि). — c) T G1. 3 M7 भगवांस्तु (T2 °वांश्च; M7 °वांस्तत्) (for भगवन्तं). — d) D2. 4 G2 अमितो- (G2 °ते)जसं.

48 Ś1 missing (cf. v. l. 13). — a) G3 परं (for परां). — b) K1. 2 वत्स्मयन्; K6 G1 विस्मयं; T1 G3 विस्मयंश्च; T2 उत्स्मयं (for °यंश्च). K1. 2. 4 वै (for च). K1. 2. 4 पिनाकभृत्; T2 °धृत्. — c) G2 स (for च). B8 M7 तथा; T G1–3 यथा (for तदा). — d) K1. 4 बत; K2 तव; K7 M7 भव; D5. 7 वचः (for भवः).

49 With 49–55, cf. Vāyu Pur. (Bibl. Ind.) I. 30. 296–302. Ś1 missing (cf. v. l. 13). — a) D6 ज्वरश्च. D5. 7 T G1. 3 M7 तु (for च). K2. 6 Da3. a4 -धर्मज्ञ (for °ज्ञो). — b) D5. 7 व्यभवत्; T2 व्यसृजस्; G3 °जन्; M1. 5. 6 [अ]भ्यसृजत् (for व्यसृ°). T2 M7 तथा (for तदा). — c) Da3. a4 सर्वधर्मज्ञ; M7 °सत्त्वानां (for °भूतानां). — d) Ds1 तं चापि (for तच्चापि). K4 पुत्रकः.

50 Ś1 missing (cf. v. l. 13). — a) K1. 2. 4 शीर्षाभितापौ (K2 °पं); K7 B7 D4. 9 °तितापो; B0 °भिघातो; Da3 शीर्षाभिचापो. — b) K4. 6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7. 8 G2. 3 शिलाजतु; T1 G1 Cv (gloss: शिखायां विद्यमानं जतुर्लाक्षा) शिखाजतु; T2 शिलाजितु; M7 °जतुं (for °जतुः). — c) K2 हि; G2 च (for तु). Da4 नीलीकां; Ca. n (gloss: Ca, जलमलम्; Cn, शैवालम्) नीलिकां (as in text). K2. 7 D4 विंद्यान्; D6 विद्यां; T G1. 3 M1. 5–7 विद्धि (for विद्यान्). — d) G1 भुजङ्केषु. ※ Cs: निर्मोकं नाम दृष्टिप्रत्यवरोधनं कियता कालेन भुजगशरीरात् पृथग्भवति । ※

51 Ś1 missing (cf. v. l. 13). — a) K1. 2. 4 खो- (K4 ख)रकं; K6 T1 G1 M7 खौरकः (T1 G1 °कं); Dn4 कोरकः; Ds1 क्षौरकः; D5 घोरकः; D7 घोरकः; G2 औरसः; Cv क्षौरकं (for खोरकः). K2. 7 M1. 5. 6 सौरभेयानाम्; Ds1 सारमेयानां; D4 सोरनेयाणाम्. ※ Ca: सौरभेयाणां, गवाम् । खोरकः नीलिकापरपर्यायः ॥ Cn: खोरकः पशूनां पादरोगः ॥ Cs: खोरकः, खुररोगः । ※ — b) K7 उपरं; B7 मूसरं; B8 (marg.). 9 M1. 5. 6 ऊषरः; Dn1. n4 Ds2 D2. 3. 8 ऊखरं; Ds1 मुखरं (for ऊषरं). — c) K4 पश्यताम् (for पशूनाम्). D9 धर्मज्ञे (for °ज्ञ). — d) M1. 5. 6 दृष्टिः (for दृष्टि-). V1 -प्रत्यवरोधकं; M1. 5. 6 प्रत्यवरोधनः.

52 Ś1 missing (cf. v. l. 13). — a) K1. 2. 4. 7 D4. 9 रंध्रो(K2 °ध्रे)गतम्; K6 D5. 7 Ca (gloss: रन्ध्राख्याग्रजघनभागावसादकृतम्) रंध्रोद्ग(K6 °द्र)तम्; B7 रंध्रगतम्; B9 रक्षा° (for रन्ध्रा°). D6 अपाश्वानां (for अथा°). T G1. 3 M1. 5–7 रंध्रोद्गम(T2 °ग्रह)मनश्वानां; G2 रंध्रोद्गमं तथाश्वानां; Cv रंध्रोद्भवश्च मध्यानां. ※ Cn. p: रन्ध्रागतं, अश्वगलरन्ध्रगतं मांसखण्डम् । ※ — b) K1. 2 शिरोभेदश्च; M7 शिखोद्भेदं. — c) K1. 2 V1 B0. 6–9 Da3. a4 Ds1 D3, 4. 6. 9 नेत्रागः (for रोगः). K4. 6. 7

नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना ॥ ५२
अब्जानां पित्तभेदश्च सर्वेषामिति नः श्रुतम् ।
शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः ॥ ५३
शार्दूलेष्वथ धर्मज्ञ श्रमो ज्वर इहोच्यते ।
मानुषेषु तु धर्मज्ञ ज्वरो नामैष विश्रुतः ।
मरणे जन्मनि तथा मध्ये चाविशते नरम् ॥ ५४
एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ।
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ॥ ५५
अनेन हि समाविष्टो वृत्रो धर्मभृतां वरः ।
व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत् ॥ ५६
प्रविश्य वज्रो वृत्रं तु दारयामास भारत ।
दारितश्च स वज्रेण महायोगी महासुरः ।
जगाम परमं स्थानं विष्णोरमिततेजसः ॥ ५७
विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्पुरा ।
तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान् ॥ ५८
इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया ।
विस्तरः कथितः पुत्र किमन्यत्प्रब्रवीमि ते ॥ ५९
इमां ज्वरोत्पत्तिमदीनमानसः C. 12. 10271 B. 12. 284[3]. 63 K. 12. 289. 63

---

V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 कोकिलस्य (for °लानां). —d) V1 महात्मनः; D6. 7 °त्मनां.

53 Ś1 missing (cf. v. l. 13). —a) D5 reads the portion from नां up to थ (in 54a) twice. K1. 2. 4 अरीणां; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D3. 5 (both times). 6–8 T G3 अवीनां; D2 अविनां; G1 आवीनां (for अब्जानां). K1. 2. 4 मित्र-; V1 T G1. 3 M7 चित्र-; D2. 8 पीत-; G2 पत्र-; M1 बीज- (for पित्त-). K6. 7 Da4 D4. 9 तु (for च). —b) K1 न (for नः). V1 श्रुतिः; D8 श्रुते. —c) T2 शुष्कानाम् (for शुका°). M1. 5. 6 इति (for अपि). D5 (both times). 7 धर्मज्ञ (for सर्वेषां). K7 D4. 9 शुनामपि च धर्मज्ञ. —d) K1 ऊर्छिता; K2 तर्किका; K6 हिक्किका; V1 हिक्किका; B9 D4 हिकिका; Dn4 D9 हिष्किका; Ds D6 हिक्काका; T1 G1. 3 ईहि(T1 °ही)का; M6 एहिका (for हिक्किका). K1 प्रोद्यते; D4 प्रोव्यते (for प्रोच्यते). G2 ईहिकाप्येषोच्यते ज्वरः. ❀ Cv: हिक्किका, क्षणे क्षणे मलम् । ❀

54 Ś1 missing (cf. v. l. 13). For the repetition in D5, cf. v. l. 53. —a) B8 च; T1 G1–3 [अ]पि (for [अ]थ). — M1. 5–7 om. (hapl.) 54bc. —b) D4 इहोद्यते. —c) K6 [अ]नु; K7 Ds1 D4. 9 च (for तु). K1. 2. 4 राजेंद्र; K7 D4 9 सर्वेषु (for धर्मज्ञ). —d) M1. 5–7 श्रमो (for ज्वरो). K6 V1 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 G2 M1. 5–7 भारत; T1 विज्वरः (for विश्रुतः). —f) D4 मध्यं (for मध्ये). D4 T1 G1. 3 वा (for च). K1. 2. 4 G2 सदा; T G1. 3 तथा; M1. 5–7 नृणां (for नरम्).

55 Ś1 missing (cf. v. l. 13). —a) G1 एतं; G2 एवं (for एतन्). G3 महेश्वरं (for माहे°). —b) K7 D4. 5. 7. 9 [ए]व (for सु-). K1. 2 B8 (marg. as in text) महासुरः; B7 सुदारणः. —c) K4 नमसश्च (for °स्यश्च). K7 सर्वज्ञ; D4. 5. 7. 9 धर्मज्ञ; G2 पूज्यश्च (for मान्यश्च).

56 Ś1 missing (cf. v. l. 13). —b) K6 D6 वर. —c) K4 व्यजंभंत; Dn4 व्यजृंभंत; D4 व्यजंभत (for व्यजृम्भत). K2 B8 (marg. as in text) T2 तदा (for ततः). K2 Da4 D4 G1 शक्र. —d) T G1. 3 M7 ततो (for तस्मै). K2 अथासृजत्; K7 T1 G1 समा°; B8 (marg.) D5. 7 तथासृ° (for अवासृ°).

57 Ś1 missing (cf. v. l. 13). —a) K4 Dn1. n4 Ds D2. 3. 6. 8 वज्रं; Da4 वज्रे (for वज्रो). K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 च (for तु). T G1. 3 प्रविश्य वृत्रं तु तदा. —b) G2 मारयामास (for दार°). —c) K1. 2 स हि; M1. 5. 6 चैव (for च स). —d) K1. 4 महासुराः (K4 °र); T1 G1. 3 स दानवः. —f) V1 अतुल- (for अमित-).

58 Ś1 missing (cf. v. l. 13). —a) K4 विष्णोर् (for विष्णु-). T G1. 3 -भक्तो (for -भक्त्या). —b) K6 महत् (for अभूत्). K6 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 तदा (for पुरा). —c) K1. 2. 4 स (for च). —d) D6 अवाप्नुयात् (for अवाप्तवान्).

59 Ś1 missing (cf. v. l. 13). —a) K6 B6. 7. 8 (marg. as in text). 9 एतद् (for एष). —b) Dn1 भयात्; D5. 7 तथा (for मया). —c) K1. 2 D4 T1 G1. 3 विस्तारः (for विस्तरः). K1 (before corr.) कथिताः; G1 M7 °तं (for °तः). —d) Da4 अन्यत्र; D6 अन्यत्स (for अन्यत्प्र-). K1 प्रब्रवीसि.

C. 12. 10271
B. 12. 284[3]. 63
K. 12. 289. 63

पठेत्सदा यः सुसमाहितो नरः । लभेत कामान्स यथामनीषितान् ॥ ६०
विमुक्तरोगः स सुखी मुदा युतो

इति श्रीमहाभारते शान्तिपर्वणि चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

## २७५

युधिष्ठिर उवाच ।
शोकादुःखाच्च मृत्योश्च त्रस्यन्ति प्राणिनः सदा ।
उभयं मे यथा न स्यात्तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं समङ्गस्य च भारत ॥ २

60 = Vāyu Pur. (Bibl. Ind.) I. 30. 303. Ś1 missing (cf. v. l. 13). — a) D2.3 इमं (for इमां). D6 अहीन- (for अदीन-). K6 V1 B6.8 (marg. as in text) M1.5-7 -चेतनः; Da3.a4 -चेतसः (for -मानसः). — b) T G1.3 तु (for सु-). D4 सुसमाहिता. — c) Da4 विमुक्तरोगाः. K6 Dn4 D5.7 सु-; T2 च (for स). G2 भवेन्; M1.5-7 लभेन् (for सुखी). — d) T2 G2 च (for स). K1.2 मनसा (for स यथा-). K1.2 यथेप्सितान्; K7 D4.9 -समीप्सितान् (for -मनीषितान्). — After 60, M1.5-7 ins.:

737* कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ।
किमन्यत्कथयामीह तद्भवान्वक्तुमर्हति ।

Colophon. Ś1 G6 missing: K3.5 B1-5 Da1.a2 Dn2.n3 D1 G4.5 M2-4 absent. — *Sub-parvan:* K1.2.4.6.7 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2-9 T G1-3 M1.5-7 मोक्षधर्म. — *Adhy. name:* K1.2.4.6.7 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2-9 M5.6 ज्वरोत्पत्तिः; G2 ज्वरोत्पतन्माहात्म्यश्रवणवशात्तच्छमनोपायनिरूपणं. — *Adhy. no.:* (figures, words or both): B7 107; Dn1 Ds2 D7 T1 G1.3 109; Dn4 M1.6.7 108; D8 103; T2 122; G2 124; M5 110. — *Śloka no.:* Da4 Dn1.n4 63; D8 64.

☞ After this adhy., N (Ś1 missing) reads a passage [B 12. 285 [4] = C. 12. 10272-10345 and 10346-10484; = K. 12. 290] omitted in S (G6 missing), which is given as App. I, (No. 28).

— After App. I, (No. 28), N (Ś1 missing) reads a passage [B. 12. 286 [5] = C. 12. 10485-10531 = K. 12. 291] omitted in S (except G2; G6 missing), given in Appendix II (No. 1), which registers the v. l. of the repeating MSS. (along with the v. l. of Bṛhan-Nār. Pur. 44. 21-82) from the constituted text of 12. 187.

## 275

☞ This adhy. is missing in Ś1 G6 (cf. v. l. 12. 274. 13; 259. 1).

1 a) K4.6 Da3.a4 D4.9 (by corr. as in text) शोका; D2.3 (marg.) सुख-; D6 शोको; M1.5-7 शोक- (for शोकाद्). K1.2.4 G1 M1 दुःखाश्च; D6 दुःखश्च (for दुःखाच्च). Dn1.n4 Ds D8 सु(Dn1 सुख)-दुःखाच्च सुमृत्योश्च. — b) K6 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.6.8 त्रसंते; B8 (orig.) प्रस्यंति; B8 (marg.) G2 M1.5-7 त्रसंति; D5 प्रसंति (for त्रस्यन्ति). — c) K6.7 D4.9 भ(K6 उभ)यं नोत्र; T G1.3 तद्भयं नो (for उभयं मे). K1.2.4 वै (for मे). G2 भयं (for यथा).

2 a) K6.7 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2-9 G2 अत्रापि (for अत्रैव). — d) K1.2.4 संगमस्य; D5.7 सुसंगस्य; T1 G1.3 स्व(G1 स्वा)गमस्य; T2 संगलस्य (for समङ्गस्य). B8 (marg. as in text) युधिष्ठिर (for च भारत).

3 a) K2.4 तरसे(K2 °मे)व; Ds उरसीव; D7 G1 मनसैव; T1 G3 मनसीव (for उरसेव). K1 प्राणमसे; K2 प्रणमस्ये; G3 प्रणुदसे (for प्रणमसे). ❀ Cn: अन्ये शिरसा नमन्ति, त्वं तु उरसा प्रणमसे, अत्यन्तं विनीतोऽसीत्यर्थः ॥ Cp: उरसा प्रणमसे इव, सर्वदान्तर्दृष्टिरित्यर्थः ॥ Cs: उरसि हृदये प्रणमसे, प्रकर्षेण नतो भवसि, गम्भीर

नारद उवाच ।
उरसेव प्रणमसे बाहुभ्यां तरसीव च ।
संप्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥ ३
उद्वेगं नेह ते किंचित्सुसूक्ष्ममपि लक्षये ।
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥ ४
समङ्ग उवाच ।
भूतं भव्यं भविष्यच्च सर्वं सत्त्वेषु मानद ।
तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ॥ ५
उपक्रमानहं वेद पुनरेव फलोदयान् ।
लोके फलानि चित्राणि ततो न विमना ह्यहम् ॥ ६
अगाधाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद ।
अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ॥ ७
विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः ।
बलवन्तोऽबलाश्चैव तद्वदस्मान्सभाजय ॥ ८
सहस्रिणश्च जीवन्ति जीवन्ति शतिनस्तथा ।
शाकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ॥ ९
यदा न शोचेमहि किं नु न स्या-
द्धर्मेण वा नारद कर्मणा वा । C. 12. 10541 B. 12. 287(6). 10 K. 12. 292. 10

---

इत्यर्थः । ❀ — b) Ds T2 Cs चक्षुर्भ्यां ( for बाहुभ्यां ). K1.2.4 उरसेव ( for तरसीव ). T1 G1.3 चक्षुर्भ्यां धीर-मीक्षसे. ❀ Cn: बाहुभ्यां तरसीव भवनदीम्, अत्यन्त-संकटेऽपि निरपेक्षोऽसीत्यर्थः ॥ Cs ( reading चक्षुर्भ्याम् ): यथा जलस्योपरि चरन् तदन्तर्गतं न वेद तथा चक्षुर्भ्यां विष-यान्पश्यन्न तेषां स्वरूपं विवेचयसीत्यर्थः । ❀ — d) K1 लभ्यते; K2.7 Dn4 D9 लक्षसे ( for लक्ष्यसे ).

4 a) T2 उद्योगम् ( for उद्वेगं ). K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 G2 M1.5–7 न हि; D7 T G1.3 अपि ( for नेह ). — b) K2.7 सुश्लूक्ष्मम्; T2 ससू° ( for सुसू° ). D5.7 T1 G1 लक्ष्यते; D9 (by corr. as in text) लक्ष्ययें ( for लक्षये ). — c) K2 D5 इवास्वस्थो. — d) K4 बालकश्च; D5.7 बाल-वत्सं ( for °वच्च ). K6 विचेष्टसि; D4 विवेष्टसे; T2 विशेष्टसे ( for विचेष्टसे ). ❀ Cs: बालविचेष्टनं क्वचिदपि विषयसङ्गराहित्यम् । ❀

5 V1 reads the ref. on marg. K1 मसंग; K2.4 संगम; B6 समल; D5 सुमंग; D7 सुमंगल; T1 G1.3 स्वगम; T2 संगल; G2 समंत ( for समङ्ग ). — a) V1 भव्यं भूतं ( by transp. ). K7 D4.9 भवद् ( for भव्यं ). K6 V1 Bo.8 ( marg. ) Dn1 Ds D2.5–8 T1 G1.2 भविष्यं च ( for °ष्यच्च ). Dn4 भूतं भविष्यं भव्यं च. — b) K2 सर्वं तत्त्वेषु; K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 सर्वमेतत्तु; K7 D4.9 T G1.3 M1.5–7 सर्व-भूतेषु; V1 B6.8 ( last two on marg. ) सर्वसत्त्वेषु; D6 सर्वमेव तु ( for सर्वं सत्त्वेषु ). K1.2.4 B8 मानतः; K6.7 B7.8 ( marg. ) Ds D4.5.9 T G1.3 नारद ( for मानद ). G2 सर्वं वेत्मनुमानत ( sic ). — c) K7 D4.9 एषां ( for तेषां ). V1 तेषां जानामि तत्त्वानि. — d) T1 G1.3 ह्यविमना ( for न वि° ). G1 [ अ ]स्म्यहं ( for ह्यहम् ).

6 K2 om. ( hapl. ) 6. — a) K1 वेदं. — b) K4 Ds1 D2.8 फलोदयं; Da3 D4 °दयात् ( for °दयान् ). — c) Dn4 लोके फनिविचित्राणि ( sic ).

7 a) K2.4.7 D4.5.7.9 अ( K4 D7 अं )गाश्चैव; Ds T G1–3 M1.5–7 Cs अना( Ds1 °गा )थाश्च ( for अगा-धाश्च ). K1 अगाधात्र प्रतिष्ठाश्च ( sic ). ❀ Ca: अगाधाः अनुद्यमाः, अप्रतिष्ठाः विद्याद्यभावादबद्धमूलाः ॥ Cn: अगाधा निर्ग्रन्थाः मूर्खाः, गाधं प्रतिष्ठालिप्सयोर्ग्रन्थे चेति स्मृतेः । अप्र-तिष्ठाः धनदारादिशून्याः । ❀ — b) K1.2.4.7 D4.9 शक्ति-मंतश्च; M1.5–7 गतिमंदाश्च ( for °मन्तश्च ). K6 B8 ( marg. as in text ).9 भारत ( for नारद ). — c) T G1–3 M1.5–7 जळाश्च.

8 a) D4 विहितेनेव; G2 इह केचन ( for विहितेनैव ). — Da4 D2 om. ( hapl. ) 8b–9a; D8 om. ( hapl. ) 8b–9c. — b) K1.2.4 चारोगांगा; Dn4 D6 आरो°; D5 गतरोगा; D7 नरा रोगाद्; T1 निरोगांगाद् ( for अरोगाङ्गा ). — c) K7 D4 [ऽ]बलश्च ( for ऽबलाश्च ). -- G2 lacuna for 8d–9d. — d) K6 V1 Bo.6–9 Da3 Dn1.n4 Ds.6 तस्माद् ( for तद्वद् ). Bo D9 अस्मात्.

9 Da4 D2 om. 9a; D8 om. 9abc; G2 lacuna for 9 ( for all, cf. v. l. 8 ). — a) K6 V1 Bo.6.7.8 ( marg. ).9 Da3 Dn1.n4 Ds D3.6 सहस्रिणोपि ( for °णश्च ). — c) K1.2 Dn1 M1.5–7 शोकेन; K7 D4.9 स्तोकेन ( for शाकेन ). K1.2.4 [अ]न्ये च ( by transp. ) D4 वान्ये.

10 a) Da4 T2 M5 नु; G1.3 M6.7 तु ( for the first न ). K1.2 Dn4 ननु; K4 न नः; K6 V1 B6.7.9 Dn1 Ds2 D2.3.6 T1 G1.3 M1.5.6 नु नः; Da4 Ds1 तु नः; D8.9 T2 तु न; G2 नु मे ( for नु न ). D5.7 यदा न शोचेन्महता घृतिः सा ( D5 स्याद् ). ❀ Cn: न शोचेमहि, शोकमूलस्याज्ञानस्याभावात् । ❀ — b) K6 B7.8

C. 12. 10541
B. 12. 287[6].10
K. 12. 292. 10

कृतान्तवश्यानि यदा सुखानि
दुःखानि वा यन्न विधर्षयन्ति ॥ १०
यस्मै प्रज्ञां कथयन्ते मनुष्याः
प्रज्ञामूलो हीन्द्रियाणां प्रसादः ।
मुह्यन्ति शोचन्ति यदेन्द्रियाणि
प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ॥ ११
मूढस्य दर्पः स पुनर्मोह एव
मूढस्य नायं न परोऽस्ति लोकः ।
न ह्येव दुःखानि सदा भवन्ति
सुखस्य वा नित्यशो लाभ एव ॥ १२
भावात्मकं संपरिवर्तमानं
न मादृशः संज्वरं जातु कुर्यात् ।
इष्टान्भोगान्नानुरुध्येत्सुखं वा
न चिन्तयेद्दुःखमभ्यागतं वा ॥ १३
समाहितो न स्पृहयेत्परेषां
नानागतं नाभिनन्देत लाभम् ।
न चापि हृष्येद्विपुलेऽर्थलाभे
तथार्थनाशे च न वै विषीदेत् ॥ १४
न बान्धवा न च वित्तं न कौली
न च श्रुतं न च मन्त्रा न वीर्यम् ।

---

Da3. a4 D5. 7 M1. 5–7 च (for the second वा). —K4 om. 10$^{cd}$. —$^{c}$) T1 G1. 3 यथा (for यदा). —$^{d}$) K7 Dn4 Ds1 G2 वा यं न; B6 D5. 7 यावन्न; T G1. 3 M7 चायांति (for वा यन्न). K7 D4. 9 विकर्षयंति; D3 M6 विह° (for विध°). B7 दुःखानि वा वियासयंतिनि (sic).

11 $^{a}$) K7 D4. 9 तस्मिन्; V1 D8 T G2. 3 M1. 5–7 यस्मिन्; B8 (marg.) D7 तस्मै (for यस्मै). K6 Bo. 7–9 Da3. a4 Dn1. n4 D2. 3. 5–8 G2. 3 प्राज्ञाः; V1 B6 Ds2 प्रज्ञाः; Ds1 T M5 प्रज्ञानं; M1. 6. 7 प्रज्ञातं (for प्रज्ञां). G1 यत्प्रज्ञानं (for यस्मै प्रज्ञां). B6 कथयंति. M1. 5–7 मनुष्यं. —$^{b}$) D2 T G1 प्रज्ञामूलं (for °मूलो). V1 T1 G1. 3 प्रमादः (for प्रसादः). —$^{c}$) K6 V1 Bo. 6–9 Dn1. n4 Ds D2. 3. 6. 8 तथेंद्रियाणि; K7 D4. 9 G2 च हीं°; Da3. a4 यथें°; D5. 7 न हीं°; T G1. 3 हि त्वें°; M1. 5. 7 महींद्रियाणि (for यदेन्द्रि°). —$^{d}$) K7 D4. 5. 7. 9 नैव (for नास्ति). T1 G1. 3 मूढेंद्रियाणां (for °न्द्रियस्य).

12 $^{a}$) D8 T G1. 3 मूढ (for मोह). K2 मूढस्य दर्पः पुनरेव मोहो. —$^{b}$) T1 G3 चायं (for नायं). K1. 2. 4 प(K4 न प)रो नास्ति (for न परोऽस्ति). —$^{c}$) Da3. a4 यदा (for सदा). —$^{d}$) K1 नो (for वा). Da3. a4 G2 लोभ (for लाभ).

13 $^{a}$) K1. 2. 4 तदात्मानं; K7 Ds1 D4. 9 G1. 3 Cn (Cnp as in text) भवात्मकं; Cp भावा° (as in text). K1. 2. 4 संपरिवर्तमानो. —$^{b}$) Da4 G2 मादृशं (for मादृशः). B9 T G1. 3 सज्वरं (for संज्वरं). G1 ज्ञातु (for जातु). —$^{c}$) Dn4 इष्टानुभोगान् (for °न्भोगान्). K1. 2. 4. 6 B6 D5. 7 नानुरुंधे (K6 °ध्ये); B6 (marg.) Da3. a4 नानुरुध्ये; T1 न निरुध्ये; G2 नानुरुंध्यन् (for °रुध्येत्). —$^{d}$) K2 नो (for न). K1. 2. 4. 6 Da3. a4 Ds1 D4. 9 G1. 3 M1 चिंतये (for चिन्तयेद्).

14 $^{a}$) K1. 2. 4 D7 समागतो; M1. 6 °हिते (for °हितो). K1. 2. 4 Bo. 6. 7. 9 Da3. a4 D5. 7. 9 T G1. 3 स्पृहये. G2 च नैषां (for परेषां). —$^{b}$) T1 न नागतं; M1. 5–7 अना° (for नाना°). K1 B8 (marg.) नाभिनंदे च; K2 न स्पृहये च; K4 D3 नाभिनंदेच्च; K6 B6. 7. 9 चाभिनंदामि; V1 Bo. 8 चाभिनंदेत; Da3. a4 नापि नंदामि; Dn1. n4 Ds2 D2. 6. 8 चाभिनंदेच्च; Ds1 वाभिनंदेच्च; D4 G2 वाभिनंदेत; D5. 7 नाभिनंदे न; T2 नाभिनंदेत्र (for नाभिनन्देत). T1 G1. 3 नाभिनंदे किलाहं. —$^{c}$) D4. 9 T1 G1. 3 चाति- (for चापि). K1. 2 B6. 8 (marg.). 9 Da3. a4 D5. 7 T G1. 3 हृष्ये (for हृष्येद्). K1 विपुलेथ; K6 V1 Bo. 6 (marg.). 9 Da3 विपुलार्थ-; K7 D4 विपुलोर्थ- (for विपुलेऽर्थ-). —$^{d}$) K1 तथा नाशे; G3 न चार्थनाशे (for तथार्थ°). Bo. 9 Da3. a4 D5. 7 T1 G1. 3 M1. 5–7 न च (by transp.). K1 विषेदेः (corrupt); K2. 4 Bo. 6. 7 Da3. a4 D5. 7 T G1. 3 विषीदे; K6 D2. 6 विसीदेत् (for विषीदेत्).

15 $^{a}$) G1 बांधवान्. M7 चित्तं (for वित्तं). K4. 7 V1 Dn1. n4 D3 (before corr.). 4. 9 न कौ(D4 को)ल्यं; K6 Bo. 6–9 Da3. a4 Ds D2. 5–8 T1 G1. 3 कुलीनं; D3 (by corr.) न कुलील्यं; G2 न काली (for न कौली). —$^{b}$) K7 मंत्रार्थ-; T G1–3 M1. 5–7 मंत्रो न (for मन्त्रा न). —$^{c}$) Da3. a4 दुःखाक्रांतं (for °त्रातुं). —$^{d}$) K2 om. न. Da4 D4 नु; D5. 7 च (for तु). K7 T याति; B8 (marg. as in text) शास्ति (for यान्ति).

दुःखात्रातुं सर्व एवोत्सहन्ते
परत्र शीले न तु यान्ति शान्तिम् ॥ १५
नास्ति बुद्धिरयुक्तस्य नायोगाद्विद्यते सुखम् ।
धृतिश्च दुःखत्यागश्चाप्युभयं नः सुखोदयम् ॥ १६
प्रियं हि हर्षजननं हर्ष उत्सेकवर्धनः ।
उत्सेको नरकायैव तस्मात्तं संत्यजाम्यहम् ॥ १७
एतान्शोकभयोत्सेकान्मोहनान्सुखदुःखयोः ।
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात् ॥ १८
अर्थकामौ परित्यज्य विशोको विगतज्वरः ।
तृष्णामोहौ तु संत्यज्य चरामि पृथिवीमिमाम् ॥ १९
न मृत्युतो न चाधर्मान्न लोभान्न कुतश्चन ।
पीतामृतस्येवात्यन्तमिह चामुत्र वाभयम् ॥ २०
एतद्ब्रह्मन्विजानामि महत्कृत्वा तपोऽव्ययम् ।
तेन नारद संप्राप्तो न मां शोकः प्रबाधते ॥ २१　C. 12. 10552 B. 12. 287[6]. 2 K. 12. 292. 71

इति श्रीमहाभारते शान्तिपर्वणि पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

---

V1 संतः (for शान्तिम्).

16 [a]) K7 D4.9 अयुक्तानां. — [b]) K1.2 M5.6 न योगाद्; T1 G1.3 नायोगो (G3 °गे) (for नायोगाद्). K6 V1 Bo.6–9 Da3 Dn1.n4 Ds D2.3.6.8 T1 G1.3 विंदते; Da4 विदंते (for विद्यते). — [c]) K6 बुद्धि-; T2 G1 सत्त्व-; G2 M1.5–7 सम- (for दुःख-). K1.2.6 B8 (marg. as in text).9 Da3.a4 D5.7 T G1–3 M1.5–7 -योगश्च; B6 damaged (for -त्यागश्च). K7 D4.9 धृतिश्च योगदुःखस्था. ❀ Cn: धृतिः, मनःप्राणेन्द्रियक्रियाणां स्तम्भसामर्थ्यम् । ❀ — [d]) K6 V1 Bo.7–9 Da3.a4 Dn1.n4 Ds D2.3.6.8 [इ]त्युभयं; B8 damaged; T2 [अ]प्युभया (for [अ]प्युभयं). K1 वः; K6 Bo.8 Dn1.n4 Ds D2.3.8 तु; K7 D4.9 हि; V1 B6.7.8 (marg.).9 Da3.a4 D5.7 T2 G2 M1.5–7 न; T1 G1.3 तत् (for नः). Bo.8.9 Dn1.n4 Ds D2.3.8 सुखं (D3 समं) नृप; T1 G1.3 सुखावहं (for सुखोदयम्).

17 [b]) Dn1 Ds D2.5.8 T2 G3 M1.5.7 -वर्धनं. — [c]) K2 वर्धनाय (for नरकाय). D4 [इ]व (for [ए]व). — [d]) K6 Bo.6.7.9 Da3.a4 Dn1.n4 D2.3 (by corr. as in text).6.8 Cn तान्; D5.7 T G1.3 M5.6 तत् (for तं). K1.2.4 तस्मात्तं परिवर्जयेत्.

18 [a]) D2 येतां (sic); D5.7 एतत्; G3 हतात्; M7 (*sup. lin.*) हितान् (for एतान्). K1.2 V1 -भयोद्वेगान्; K7 B8 (marg.) D4.9 °द्विग्नान्; B6 (marg.) Da4 -तमोत्सेकान्; D5.7 -भवो° (for -भयो°). — [b]) K4 V1 Dn4 मोहनात्; D5 मोहयन् (for मोहनान्). — [c]) B7 लोको. — [d]) K7 D4.9 विचेष्टितं; B8 (marg. as in text) विचेतनात्; D5.7 विपर्ययात्; M1.5–7 [आ]विचेष्टनात् (for विचे°). ❀ Ca: देहस्यास्येति निर्देशो नाहं देह इति निश्चयपूर्वकज्ञानविभावनाय ॥ Cn: देहस्यास्य, आ अस्येति छेदः । अस्य देहस्य आ विचेष्टनादिति संबन्धः । ❀

19 [a]) D9 अर्थकामौ; T1 G1.3 °मोहं (for °मोहौ). K1 च संत्यज्य; K2 B8 (marg.) परि°; B9 lacuna; D4 नु सं° (for तु सं°). — G1 om. 19[c].

20 [a]) Bo.7 Dn1.n4 Ds D2.6.8 न च मृत्योर् (for न मृत्युतो). K1 तदा; K7 D4.5.7 न वा (for न च). Da3.a4 D4 G1 [अ]धर्मौ (for [अ]धर्मान्). — [b]) K1 न लोभश्च; K2 नालोभाच्च; K4 न लोभाच्च (for °भान्न). — [c]) B7 पीतामृतास्य; T2 G1 पितामृतस्य (for पीता°). D3 [ए]व; D5 च (for [इ]व). K7 D4.9 पीत्वामृतमिवात्यंतम्. — [d]) K1.2.4.7 Da4 D6.9 वामुत्र (for चा°). K6 V1 Bo.6–9 Da3.a4 Ds2 D2.3.5.7.8 T1 G1–3 च भयं; K7 Ds1 D4 (before corr.).9 चोभयं; M1.5–7 मेभयं (for वाभयम्).

21 [a]) K7 Ds1 D4.7.9 T G1–3 ब्रह्म; D5 ब्रह्मा (for ब्रह्मन्). K1.2.4 D5 विजानाति. M1.5–7 एतद्ब्राह्मं विजानीहि (M1 °ह). — [c]) G2 नाकुद्- (for नारद). T G1.3 M1.5–7 संहर्षौ (for °प्राप्तो). — [d]) K1.2 M1.5.6 मा (for मां). Ds1 प्रधावते (for °बाधते). D9 न मां कः प्रतिबाधते.

Colophon. Ś1 G6 missing: K3.5 B1–5 Da1.a2 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan:* K1.2.4.6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2–9 T G1–3 M1.5–7 मोक्षधर्म. — *Adhy. name:* K1.2.4

# २७६

C. 12. 10553
B. 12. 26(7) 1
K 12. 296

युधिष्ठिर उवाच ।

अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः ।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह ॥ १

भीष्म उवाच ।

गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कूटस्थं श्रेय उच्यते ॥ २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गालवस्य च संवादं देवर्षेर्नारदस्य च ॥ ३
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियम् ।
श्रेयस्कामं जितात्मानं नारदं गालवोऽब्रवीत् ॥ ४
यैः कैश्चित्संमतो लोके गुणैस्तु पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयाम्यहम् ॥ ५
भवानेवंविधोऽस्माकं संशयं छेत्तुमर्हति ।
अमूढश्चिरमूढानां लोकतत्त्वमजानताम् ॥ ६
ज्ञाने ह्येवं प्रवृत्तिः स्यात्कार्याकार्ये विजानतः ।
यत्कार्यं न व्यवस्यामस्तद्भवान्वक्तुमर्हति ॥ ७

---

नारदसमंग( K1 °संग- ; K2 °संगम )संवादः ; K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–9 M5. 6 स( D7 सु )-मंगनारदसंवादः ( Bo adds समाप्तः ). — *Adhy. no.* ( figures, words or both ) : K8 11 ; Dn1 112 ; Dn4 Ds2 M5 111 ; D8 106 ; T1 G3 110 ; T2 123 ; G2 126 ; M1. 6. 7 109. — *Śloka no.* : Da4 19 ; Dn1. n4 21.

## 276

☞ This adhy. is missing in Ś1 G6 ( cf. v. l. 12. 274. 13 ; 259. 1 ).

1 D2 om. 1. — [b] ) K6. 7 Da4 Dn1 Ds1 D6 G1 संततं. D7 संशयात्मनां. — [c] ) ❀ Cn : व्यवसायः, आत्मदर्शनार्थं शमदमाद्यनुष्ठानम् । ❀ — [d] ) Da4 corrupt. G2 M1. 5–7 तन्मे ( for श्रेयो ).

2 D2 om. the ref. — [a] ) Ds1 D9 गुरुपूजां. ❀ Cn : गुरुपूजा, ईश्वरे चेतःप्रणिधानम् । ❀ — [b] ) ❀ Ca : वृद्धानां, ज्ञानवृद्धानाम् । ❀ — [c] ) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 शास्त्राणां ( for विद्यानां ). — [d] ) K1 कटस्तं ; K2 कुर्यास्तं ; K4 कटस्थं ( for कूटस्थं ). ❀ Ca : कूटस्थं, सनातनं, सर्वाश्रमस्य साधारण्यात् ॥ Cs : कूटस्थं, प्रधानम् । ❀

3 [c] ) K1 गालकस्य ; Da4 °लस्य. — [d] ) K1. 2 B8 ( marg. ) Dn1 G1 महर्षेर् ( for देव° ). — After 3, G2 ins. :

738* स्वाश्रमं समनुप्राप्तं नारदं देववर्चसम् ।

4 [a] ) M7 पीत- ( for वीत- ). D2 -क्रमं ( for -क्लमं ). K7 D4. 5. 7. 9 नित्यं ( for विप्रं ). — [b] ) K4 Da4 Ds1 D8 जितेंद्रियः. — [c] ) K7 Da4 Ds1 D4. 9 T G1 श्रेयस्कामो. Dn1 मतात्मानं ; D6 नारदं च ( for जितात्मानं ). — [d] ) D6 गालवो वाक्यमब्रवीत्.

5 Before 5, B8. 9 T G1. 3 ins. गालव उवाच. — [a] ) K4. 7 Bo. 6–8 Da3. a4 Dn1 Ds2 D2. 8 G2. 3 कश्चित्. Dn1. n4 समतो ; D6 समता ; G2 पुरुषो ( for संमतो ). — [b] ) Dn1. n4 D2. 6 च ( for तु ). K7 D9 परमो ( for पुरुषो ). K1 नृप ; K6 Bo. 6. 7. 8 ( marg. ). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 मुने ; B8 ( orig. ) T G1. 3 M1. 5–7 भवेत् ( for नृषु ). — [c] ) K2 अनपगैः ; Da4 Dn4 °यगान् ; D4 G2 °प( G2 °व )गात् ; T1 G3 उपगतान् ( for अनपगान् ). — [d] ) V1 Bo. 6. 7. 8 ( marg. ). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 लक्षयामहे. T1 G1. 3 गुणान्संलक्षयाम्यहं.

6 [a] ) G2 चैवंविधो. — [b] ) Ds2 D4. 5. 7 अर्हसि. — [c] ) G2 अमूढं. K2 सर्वमूढानां ; K6 चिरमूलानां. — [d] ) B8 ( orig. ) T1 G1. 3 लोके तत्त्वम् ; B8 ( marg. ) लोकतंत्रम्. D5. 7 विजानतां ( for अजा° ). ❀ Cn : लोकतत्त्वम्, आत्मयाथात्म्यम् । ❀

7 [a] ) K1. 2. 4 ज्ञानं ( for ज्ञाने ). Dn4 D4 G1. 2 ह्येव ; M1. 5–7 [ऽ]प्येवं ( for ह्येवं ). — [b] ) K2 T1 विजानतां ; K7 D4 [ऽ]वजानतः ; D9 च जानतः ( for विजा° ). K6 Bo. 6. 7. 8 ( marg. ). 9 Da3. a4 Dn1. n4 Ds D2. 3. 6. 8 कार्याणामविशेषतः. — [c] ) K2. 6 V1 B7 Da3 T1 G1 M1. 5–7 तत् ( for यत् ). T1 G1. 3 M1. 5–7 व्यवस्यामि ; G2 व्यपास्यामो ; Cp ( gloss : निश्चिनुमः ) व्यवस्यामस् ( as in text ). — [d] ) G2 भवान्नो ( for तद्भवान् ). K7 T2 अर्हसि.

भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः ।
इदं श्रेय इदं श्रेय इति नानाप्रधाविताः ॥ ८
तांस्तु विप्रस्थितान्दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः ।
स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे ॥ ९
शास्त्रं यदि भवेदेकं व्यक्तं श्रेयो भवेत्तदा ।
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् ॥ १०
एतस्मात्कारणाच्छ्रेयः कलिलं प्रतिभाति माम् ।
ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः ॥ ११

नारद उवाच ।

आश्रमास्तात चत्वारो यथासंकल्पिताः पृथक् ।
तान्सर्वाननुपश्य त्वं समाश्रित्यैव गालव ॥ १२
तेषां तेषां तथा हि त्वमाश्रमाणां ततस्ततः ।
नानारूपगुणोद्देशं पश्य विप्रस्थितं पृथक् ।
नयन्ति चैव ते सम्यगभिप्रेतमसंशयम् ॥ १३  C. 12. 10166 B. 12. 286[7]. 14 K 12. 293. 14

---

8 a) Dn4 G2 भगवान्. ❀ Cn: आश्रमाः । नास्ति श्रमोऽनुष्ठानजो यस्मिन्नित्याश्रमं ज्ञानम् । तस्येमे साधका आश्रमाः, शास्त्राणि । ❀ — b) K1.2 T G1.3 -दर्श- (G3 °र्शि)नाः; K4 G2 -दर्शनां. — c) K1 इदंश्रेया इदंश्रेया. — d) K6 V1 B6–9 सर्वे (for नाना-). K1.2.4 -प्रबाधिताः (K4 °तः); K7 -प्रभाविताः; B0 -प्रवारिताः; D5.7 G2 -प्रधाविनः (G2 °तः); T G1.3 M1.5–7 -विधा गिरः (for -प्रधाविताः). Da3.a4 Dn1.n4 Ds D2.3.6.8 इति सर्वे प्रभाविताः (D8 °तां).

9 a) Ds1 तां (for तांस्). K1.2.4 स्म विप्रस्थितान्; K7 अतिप्र°; D4.9 G2 अभिप्र°; T1 G3 तु विप्रद्रुतान्; G1 तु विप्रसृ° (for तु विप्रस्थि°). ❀ Cs: विप्रस्थितान्, विविधमार्गप्रस्थितान् । ❀ — b) K1.4 शास्त्रैः. K7 D4.5.7.9 M1.5–7 शास्त्रैः शास्त्राणि निंदितः; V1 °स्मिनिंदिनः; B6 (marg. as in text).7 °भिनं(B6 °ना)दितान्; B9 शास्त्रैः शास्त्रमनिंदितान्. ❀ Cn: शास्त्राभिनन्दिनः, स्वे स्वे शास्त्रे अभिनन्दितुं शीलं येषां तान् । ❀ — c) K4 V1 B6 Da3.a4 Ds D2.5.7.8 G2 परितुष्टाश्च. — d) Dn4 यः श्रेयो नोपभामहे (sic).

10 a) D5 शास्त्रं. G1 न वैदेकं (sic) (for भवेदेकं). — b) K6 V1 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.6.8 T2 G2 M5–7 श्रेयो व्यक्तं (by transp.); T1 G1.3 श्रेयोवृत्तं. T G1.3 M5–7 तदा (T2 °था) भवेत् (by transp.). M1 श्रेयोप्येकतरं तदा. — c) T1 G3 M5–7 तु (for च). T G2 श्रेयो; G1 गृह्यो (for भूयः). M1 भवेच्छास्त्रैस्तु बहुभिः. — d) K1.2.4 श्रेयो गुह्यं; D4 गुह्यं श्रेयः (by transp.); T G1.3 भूयो गुह्यं. T1 प्रवेशितः.

11 a) G1 कारणश्रेयो. — b) K6 केन मां; D4.5.9 कतमत्; T G1.3 M1.5–7 गहनं (for कलिलं). K6 तत्; K7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2–4.6–9 मे; D5 ते; T G1–3 मा (for माम्). ❀ Cn: कलिलं, नानाशङ्काकुलम् । ❀ — c) D4.9 ब्र(D9 ब्रु)वीत; G3 ब्रवीहि. G3 M7 भगवंस्. T2 तस्मै (for तन्मे). — d) K1.2 V1 B8 Da3 a4 T2 G1.2 M7 उ(K2 ह्यु)पपन्नो (for °सन्नो). K1.2.4 अधीष्व (for °हि). K4 6 7 B8 Dn1.n4 D4.6.8.9 T2 C2 M1.7 मो.

12 a) Da4 आश्रमं; G2 आश्रमस्. — b) K1 -संकल्पितः; G1 °ल्पितं; G2 -संप्रस्थिताः. — K6 om. (hapl.) 12c–13d. — c) D8 om. from तान्स up to श्रमाणां (in 13b). — d) D5.7 समाश्रुत्य; G1 °श्रुत्य. K6 B0.8 (marg.).9 Dn1.n4 Ds2 D2.3.6 [इ]ति; B6.7 Da3.a4 Ds1 [इ]ह; D5.7 [इ]त्र (for [ए]व). Dn4 D6 गालवः.

13 K6 om. 13abcd; D8 om. up to श्रमाणां (in 13b) (for both, cf. v. l. 12). — a) D5 om. (hapl.) one तेषां. K1.2.4 Dn1 D4.7.9 G2 M1.5–7 यथा (for तथा). K1 D5.7 G2 हि त्वाम्; K7 D9 तत्त्वम् (for हि त्वम्). B7 तेषां तेषां समाहित्य. — b) D2 om. from ततस्ततः up to श्रमाणां (in 14b); while D8 reads the same portion after श्रमाणां (in 14b). G2 M7 यतस्ततः (for तत°). — c) K1.6 V1 B0.7–9 Dn1.n4 D3.6.8.9 T G1–3 नानारूपं. D5 -गुणोद्देशे; G2 गुणोद्देशा (sic); M1.5–7 -ग(M5 -गु)णैर्देहं; D7 नानारूपा गुणोद्देशा. — d) K4 विप्रस्थिते; G2 °स्थितान्. ❀ Cn: विप्रस्थितं, पृथग्विरुद्धेन प्रकारेण प्रस्थितम् । ❀ — e) K6.7 V1 B0.6–9 Da3 a4 Dn1.n4 Ds D3 (by corr.).4.5.7–9 Cn न यांति; D6 नायंति; G2 नयंती (for नयन्ति). — f) K1 (before corr.) अभिप्रीतिम्; B8 (marg.) °प्रेत्यम्. K1 om. (hapl.) from संशयम् up to च्चैवा (in 14a). K7 D4.9 गतिं प्रेत्य न संशयः.

14 For the sequence in D8, cf. v. l. 13. K1 om. up to च्चैवा; D2 om. up to श्रमाणां (for both, cf. v. l. 13). — a) K4 ऋज्वपश्यंस्; K6 V1 B0.7.8 (marg.).9 Da3.a4 Dn1.n4 Ds2 D3 अनुप°;

C. 12. 10566
B. 12. 268(7). 14
K. 12. 293. 14

ऋजु पश्यंस्तथा सम्यगाश्रमाणां परां गतिम् ।
यत्तु निःश्रेयसं सम्यक्तच्चैवासंशयात्मकम् ॥ १४
अनुग्रहं च मित्राणाममित्राणां च निग्रहम् ।
संग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः ॥ १५
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ।
सद्भिश्च समुदाचारः श्रेय एतदसंशयम् ॥ १६
मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ।
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ॥ १७
देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि ।
असंत्यागश्च भृत्यानां श्रेय एतदसंशयम् ॥ १८
सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् ।
यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम् ॥ १९
अहंकारस्य च त्यागः प्रणयस्य च निग्रहः ।
संतोषश्चैकचर्या च कूटस्थं श्रेय उच्यते ॥ २०
धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च ।
विद्यार्थानां च जिज्ञासा श्रेय एतदसंशयम् ॥ २१
शब्दरूपरसस्पर्शान्सह गन्धेन केवलान् ।
नात्यर्थमुपसेवेत श्रेयसोऽर्थी परंतप ॥ २२

K7 D4.5.7.9 T G3 अपश्यतस्; B6 अन्वपश्यंस्; Ds1 अजपश्यंतैस् (sic); D8 Cn अन्येपश्यंस्; G1 अनपश्यत्; G2 ऋजु पश्यास् (for ऋजु पश्यंस्). M1.5–7 पश्यंति ये (for पश्यंस्तथा). K7 D9 तदा (for तथा). — b) Ds परा (Ds2 °रां) गतिः. — c) K2 D8 यं तु; D5.7 अत्र (for यत्तु). Some MSS. निश्रेयसं. — d) K6 Bo.8 (marg.).9 Dn1.n4 D2.3.6.8 तथैव; K7 D4.9 यच्चैव; V1 तदेव (for तच्चैव).

15 ab) Da3.a4 om. (hapl.) मित्राणाम्. V1 शत्रूणां चैव (for अमित्राणां च). K7 D4.9 विनिग्रहं (for च नि°). — c) K4 त्रिवर्गश्च; D6 °र्गास्य. — d) K7 D4.9 प्राहुर् (for आहुर्).

16 a) K1 कर्मणा. — b) Da4 पुण्यशीलया; D5 M7 °शीलतः. — c) Ds1 D5.7 समुदाचारं.

17 K7 om. (hapl.) 17. D6 om. (hapl.) 17–18. — a) G2 lacuna for मार्दवं. K6 सर्वभूतेस्य. — b) G2 om. व्यवहारेषु. — c) K4 त्वक् (for वाक्). D5.7 सत्या (for प्रोक्ता).

18 D6 om. 18 (cf. v. l. 17). Bo om. (hapl.) 18–21. D5.7 om. (hapl.) 18. — a) K4 देवताश्च; K6 V1 B6.7.8 (marg.).9 Da3.a4 Dn1.n4 Ds2 D2.3.8 T2 G1.2 M1.5–7 Cn दै(Dn4 दे)वतेभ्यः; T1 G3 दैवताभ्यः. K1 च पितृभ्यः (by transp.). — c) B8 (marg.) अनुयोगश्च; Da3.a4 अनभ्यासश्च; G2 अनत्याशस्यं (sic); G3 अन्नत्यागश्च; Ca (gloss: तानतिक्रम्य भोजनाभावः) अनभ्याशश्च (for असंत्यागश्च). G2 om. भृत्यानां. K7 D4.9 अविन्नासश्च भूतानां.

19 =(var.) 3. 203. 42 : B 12. 329. 13. Bo om. 19 (cf. v. l. 18). — a) K7 सत्येभ्यो; Dn4 ससत्य- (for सत्यस्य). T1 चार्जवं (for वचनं). — After 19ab, Da4 erroneously reads सत्यज्ञानं श्रेयः. — b) G1.2 सत्यं (for सत्य-). K1 सु-; V1 B8 D5.7 G2 च (for तु). T1 G1.3 पुष्कलं (for दुष्करम्). — c) K4 भूताहितम्. — d) Da3.a4 सर्वं (for सत्यं). G2 M1.5.7 ते (for [अ]हम्).

20 Bo om. 20 (cf. v. l. 18). — a) T1 G2.3 त्यागं. — b) K2 प्रणवस्य; K7 B9 Dn1.n4 Ds2 D2 (marg. as in text).4.9 M6 प्रमादस्य. K6 संग्रहं; G1 M1.7 निग्रहं. — c) K1 Da3.a4 Dn4 Ds1 G1 चैव (for चैक-). ❀ Cp: एकचर्या, एकाकित्वेनावस्थानम् । ❀

21 Bo om. 21 (cf. v. l. 18). — b) Dn1.n4 वेदांतानां (for वेदाङ्गानां). — c) K2.7 B8 (marg.) D2.4.9 वेदार्थानां; K6 V1 B6.7.9 Da3.a4 Dn1.n4 Ds D3.5–8 ज्ञाना(V1 Ds1 D8 °ता)र्थानां (for विद्या°). T1 G1.3 विद्यानामर्थजिज्ञासा. — d) T2 अनुत्तमं (for असंशयम्). Dn4 श्रेय एव तदंशय (sic).

22 a) K4 शब्दरूपमसंस्पर्शान्. — b) K2.4 B8 (marg.) केवलं. — c) K4 अपसेवेत. — d) Ds1 श्रेयः सोर्थी; T G1–3 श्रेयसोर्थं. K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.6.8 T1 G2 M1.5–7 कथंचन; T2 G1.3 परंतपः.

23 a) K6 Dn4 D3.6 G2 नक्तंचर्या; Da4 Dn1 Ds1 नक्तचर्यां; D5 नक्तंचय (sic); D7 T G1.3 नक्तचर्या (for नक्तंचर्यां). — b) K2 परं; K4 पदं; T G1.3 महत् (for मदम्). — c) D2 om. (hapl.) योगम. K1.2.4 V1 Da3.a4 D5.7 अभियोगम् (for अति°). Dn1

नक्तंचर्यां दिवास्वप्नमालस्यं पैशुनं मदम् ।
अतियोगमयोगं च श्रेयसोऽर्थी परित्यजेत् ॥ २३
कर्मोत्कर्षं न मार्गेत परेषां परिनिन्दया ।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥ २४
निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविनो नराः ।
दोषैरन्यान्गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ २५
अनुच्यमानाश्च पुनस्ते मन्यन्ते महाजनात् ।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः ॥ २६
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः ॥ २७
अब्रुवन्वाति सुरभिर्गन्धः सुमनसां शुचिः ।
तथैवाव्याहरन्भाति विमलो भानुरम्बरे ॥ २८
एवमादीनि चान्यानि परित्यक्तानि मेधया ।
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च ॥ २९
न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥ ३०
असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति ।
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम् ॥ ३१
मूढानामवलिप्तानामसारं भाषितं बहु ।
दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥ ३२ C. 12. 10585 B. 12. 289[7].33 K. 12. 293. 33

---

अयोगश्च. ❀ Ca: अतियोगम् । अतिशयेन योगः प्राणायामादिर्वातगुल्ममेहादिव्याधिद्वारा योगः विग्रहरूप एव ॥ Cp: अतियोगं, प्राणायामादेरत्यन्तसेवनम्, विषये वात्यन्तासक्तिम् ॥ Cs: अतियोगं, कर्मस्वतिप्रसक्तिः । अयोगं, कर्मकरणेभ्यो निवृत्तिः । ❀ —[d]) T1 G1. 3 श्रेयोर्थी परिवर्जयेत्.

24 [a]) K4 कर्मोत्कर्षं; K6 V1 B0. 6–9 Dn1. n4 Ds D2. 3. 6. 8 Cs आत्मोत्कर्षं; T G2. 3 धर्मों° (for कर्मो°). T1 G2. 3 तु (for न). Da3. a4 आत्मोत्कर्षणमार्गेत (sic). —[b]) K2. 4 B0. 9 D6 परनिंदया; G1 अप्यनिं°. —[d]) K4 विप्रकर्षात्; Da4 D4 °कर्ष-; T2 °कष्टं; Ca. p (gloss: भेदं [Cp: अत्यन्तभेदं]) °कर्षं (as in text). Ds1 D4. 7 पृथग्जनान्.

25 [a]) K1. 2. 4 निर्गुणेष्वेषु; K6 B8 (marg.) °णैस्ते च; Da4 °णस्त्वेव; G2 °णांश्चैव. —[b]) K7 B0 Dn1. n4 Ds D2–4. 6. 8. 9 T G1–3 आत्मसंभाविता नराः (G2 °तो नरः); D5. 7 आत्मानं भाविता नृणां. —[d]) D5. 7 -क्षयान्. K1. 2. 4 क्षिपंत्याक्रंदनेच्छया. ❀ Cn: आत्मनो गुणाः, क्षयः ऐश्वर्यम्, तदुभयात् । गुणक्षयादिति समाहारः । ❀

26 [a]) B6. 8 Da3. a4 Dn4 Ds D2. 6. 8 तु (for च). K1. 2. 4 B8 (marg.). 9 D5. 7 अनुद्य( B8 [marg.]. 9 °मुच्य )मानाश्च (K1 °नश्च; B9 °नास्तु) पुनस्; V1 B0. 7 Dn1 D3 G1 M5 Cn (gloss: शिक्षमाणाः) Cv (gloss: अनुकूलतया उच्यमानाः) अनूच्यमानाश्च (B0 °नस्तु; Dn1 D3 Cn °नास्तु) पुनस्; G2 अनाच्यमानास्तु पुनस्. —[b]) G1 तं (for ते). D5. 7 नुदंतु (D7 °ति); Bom. ed. मन्यंतु. K1 V1 Dn4 Ds D2. 3. 5. 7 महाजनान्; B9 °जनाः; T G1. 3 पृथग्जनाः; G2 M5.6 महाजने; M1. 7 °मुने (for °जनात्). —[d]) G2 तेन (for स्वेन). G1 दर्पितः.

27 = (var.) 3. 198. 47. —[a]) Da4 Dn4 D7 अब्रु( Da4 °ब्र )वत्. —[b]) D5. 7 अवर्तयन् (for अवर्ण°). —[c]) G2 गुणसंपन्नं. —[d]) K1. 2. 4 कर्षत्ये( K2 °ते )व; K7 D4. 9 G2 पश्यत्येव; G3 प्राप्नोत्येवं.

28 [a]) Da3 G2 नाति- (for वाति). —[b]) D5. 7 गंधं. —[c]) Ds1 यथैव. D5 [अ]भ्याहरन् (for [अ]व्या°). G2 तथैवाभ्याहरञ्जाति (sic). —[d]) K1. 2. 4 स्विमले. Dn4 एव च (for अम्बरे).

29 [a]) D4 वा (for च). —[b]) K2 [अ]परित्यक्तानि (for परि°). —[d]) D2 यांति (for यानि). D5 च; D9 (orig.) मे; D9 (marg.) ते (for न).

30 = (var.) 3. 198. 46. K4 om. 30–34. —[b]) K6. 7 D4 -प्रसंशया. —[c]) K7 अति (for अपि). B8 D4 G2 वा (for च). G1 [अ]विहितः (for [अ]पि°). K1 शुभ्रे (sic); K2 लोके; B0 D5 स्वभ्रे (for श्वभ्रे). ❀ Cs: अपिहितः श्वभ्रे, गर्ते तिरस्कृतः । ❀ —[d]) D4 कृतविद्या; G2 कृतः सद्यः.

31 K4 om. 31 (cf. v. l. 30). K2 om. 31[ab]. —[a]) Dn1. n4 Ds D2. 3. 5–8 असद्; M7 हसन्; Ca (gloss: अयोग्यः) असन् (as in text). K6 इव (for अपि). Dn4 प्रोक्ता. —[c]) T G1. 3 M1. 5–7 ह्येव (for त्वेव). —[d]) K2 स्वभाषितं.

32 K4 om. 32 (cf. v. l. 30). K2 om. 32[ab]. —[a]) B8 (marg. as in text) T G1. 3 M1. 5–7 मूर्खानाम् (for मूढा°). K7 D4. 6. 9 अविलु( D6 °लि )प्तानाम्;

C. 12. 10585
B. 12. 288[7] 34
K. 12. 293. 34

एतस्मात्कारणात्प्रज्ञां मृगयन्ते पृथग्विधाम् ।
प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति माम् ॥ ३३
नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
ज्ञानवानपि मेधावी जडवल्लोकमाचरेत् ॥ ३४
ततो वासं परीक्षेत धर्मनित्येषु साधुषु ।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ॥ ३५
चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत् ।
न तत्र वासं कुर्वीत श्रेयोर्थी वै कथंचन ॥ ३६
निरारम्भोऽप्ययमिह यथालब्धोपजीवनः ।
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात् ॥ ३७
अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा ।
तथा पश्यामहे स्पर्शमुभयोः पापपुण्ययोः ॥ ३८
अपश्यन्तोऽन्नविषयं भुञ्जते विघसाशिनः ।
भुञ्जानं चान्नविषयान्विषयं विद्धि कर्मणाम् ॥ ३९

---

Dn4 Ds1 अबलि°. — b) T1 G1 आसुरं (for असारं). K1 बहु भाषितं (by transp.). — c) K1 Da3 Dn4 दर्शयंति. T2 अंतरात्मानो. Da4 दर्शयंतं तदात्मानम्; D5.7 °यंत्यवरात्मानम्. — d) K1.2.6 V1 B0.6.7.8 (orig.).9 Da3.a4 Dn1.n4 Ds D2.3.5–8 Cn.p अग्नि-; B8 (marg.) वह्नि-; G2 अभि-; G3 दिव्यं (for दिवा). ❀ Cn (reading अग्निरूपम्): यथा सूर्यः सूर्यकान्तयोगात्स्वस्याग्निरूपं दर्शयति, एवं क्षुद्रोऽपि कुशब्दयोगात्क्षुद्रमन्तरात्मानं दर्शयतीत्यर्थः । ❀

33 K4 om. 33 (cf. v. l. 30). — a) D2 ये तस्मात् (for एत°). K1.2 M5 प्राज्ञां; Ds1 D2.8 (before corr.).8 विद्यां; T G1–3 प्रा(G2 प्र)ज्ञा. — b) K2 D2.4 पृथग्विधा (K2 °धान्); B8.9 Da3 T G1.3 °ग्विधाः. — c) B8 (marg. as in text) लाभानाम् (for भूता°). — d) T2 उत्तमं. K6.7 B0.6.7.9 Da3.a4 Dn1 Ds D2–9 मे; Dn4 ते; T G1–3 मा (for माम्).

34 = (var.) Manu. 2. 110. K4 om. 34 (cf. v. l. 30). — a) G3 न पृष्टः. Dn4 रूपान् (for ब्रूयान्). — b) K6 B0.6.9 Da3.a4 Dn1 Ds1 D2.3.5–8 G2 [अ]पि (for च). Dn4 नापन्यायेन; Ds2 नाप्यन्यो येन (for न चान्यायेन). — c) K1.2 B8 (marg. as in text) T G1.3 जानन्नपि हि (T G1.3 च) मेधावी. — d) Dn4 जडवान्; T G1–3 M1.5–7 जळवल् (for जडवल्). K6 B6.7.8 (marg.).9 Da3.a4 समुपाचरेत्; V1 B0 Dn1.n4 Ds D2.3.6.8 G2 M1.5–7 समुपाविशेत्; B8 मौनमाचरेत् (for लोकमा°).

35 a) D4 ज्ञसो (for ततो). K4 चासं; Cn वासं (as in text). V1 परीक्ष्येत; Dn1 परिक्षेत. T G1.3 सदा वासं परीप्सेत; Cal. ed. ततो वा संपरीक्षेत. — b) Ds1 धर्मनिष्ठेषु; G1 °नित्येव. G1 om. (hapl.) साधुषु. — c) K2 धर्मज्ञेषु (for मनुष्येषु). K1.2.4 वदन्येषु. — d) K1.2.4 सर्वभूतानुकंपिषु; B8 (marg. as in text) साध्वाचारेषु नित्यशः.

36 b) K6 धर्मव्यतिकरे; B0.6.7.9 Da3.a4 Ds D2.3.5.7.8 T G1.3 कर्मव्यतिकरो. — c) K6 कुर्वंति; Ds1 कुर्वीते. — d) K1.2.4 श्रेयसोर्थी; K5.7 श्रेयोर्था वै; D4.9 °र्थं वै. V1 च (for वै). B8 कदाचन (for कथं°).

37 With 37, cf. 3. 1. 26. — a) D5 निरारंभे; D6 °लंभो; T1 G1.2 °लंबो; Cp (gloss: यतिः) °रम्भो (as in text). K1.2.4 ह्यहम्; M1.5–7 ह्ययम् (for ऽप्ययम्). K1.2.4 D4.5.7.9 इति (for इह). — b) Da3.a4 -लुब्धोप-. B9 D3.5.7 T G1.3 M1.5–7 -जीविनः. — c) Da3.a4 पुण्ये; Dn4 पुण्य- (for पुण्यं). B8 G2 विपुलं (for विमलं). — d) Da4 om. पापं. Da4 वा (for च).

38 a) D5.7 T G1–3 M1.5–7 तथैवेंदोः (for तथेन्दोश्च). — b) Da3.a4 D5.7 G1.2 तथा (for यथा). — c) K1.2.7 D4.9 मन्यामहे (for पश्या°). D5.7 स्पर्शान्.

39 a) K1.2.4.7 B6 (marg.).8 D4.9 अपश्यंश्च; D5.7 अपथ(D7 °थं)श्च; T G1.2 अपश्यतो; G3 °श्यामो (for °श्यन्तो). K6 V1 B0.7.9 Da3.a4 Dn1.n4 Ds2 D2.3.6.8 Cn.p.s [ऽ]नु-; K7 D9 (before corr.) [अ]न्य-; B6 [अ]नु; Ds1 D5.7 [अ]त्र; T G1.2 Cv (gloss: विषयविरोधि दुर्विषयम् ।) न-; G3 [ऽ]स्य; Ca [आ]त्म- (for ऽन्न-). ❀ Cn (reading अनुविषयं): विषयं विषयमनुवर्तत इत्यनुविषयो रसः । तमपश्यन्तः, इदं मधुरमिदं तिक्तमित्यनालोचयन्तः ॥ Cp: अनुविषयं प्रतिविषयम् — अस्य विषयस्यायं रसः, अस्य विषयस्यायं रसः, इति व्यक्तिभेदमनालोचयन्तः । ❀ — b) K1.2.4.7 D4.5.7.9 भुंजानो; K6 B6 भुंजाना; T G1.3 भुंजानान् (for भुञ्जते). K1 विघसाशयः; K2 D4.9 Cs °शास(D4 °माश-; D9 Cs °साश)-नः; K7 विघशासनः; B9 विघशासिनः (for °साशिनः).

यत्रागमयमानानामसत्कारेण पृच्छताम् ।
प्रब्रूयाद्ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान् ॥ ४०
शिष्योपाध्यायिका वृत्तिर्यत्र स्यात्सुसमाहिता ।
यथावच्छास्त्रसंपन्ना कस्तं देशं परित्यजेत् ॥ ४१
आकाशस्था ध्रुवं यत्र दोषं ब्रूयुर्विपश्चिताम् ।
आत्मपूजाभिकामा वै को वसेत्तत्र पण्डितः ॥ ४२
यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः ।
प्रदीप्तमिव शैलान्तं कस्तं देशं न संत्यजेत् ॥ ४३
यत्र धर्ममनाशङ्काश्चरेयुर्वीतमत्सराः ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ४४
धर्ममर्थनिमित्तं तु चरेयुर्यत्र मानवाः ।
नताननुवसेज्जातु ते हि पापकृतो जनाः ॥ ४५ C. 12. 10528 B. 12. 268[7]. 45 K. 12. 257. 45

— c) K7 V1 Bo G2 भुंजानश्च; B9 Da3. a4 °नाश्च. D5. 7 चांत·; Ca चार्थं· (for चान्न·). K6 B6. 7 Dn1. n4 D8 D2. 3. 6. 8 G1. 3 भुंजानाश्चात्म( B6 °नु-; Ds2 G1 °न्य )विषयान्; B8 °नाश्चान्नविषयं; T1 °नन्यांश्च विषयान्; T2 °नांश्चान्यवि°. — d) K4. 6 V1 Bo. 6. 7. 9 Da3 Dn1. n4 D8 D2. 3. 5–8 T2 विषयान्; Da4 lacuna; T1 G1. 3 विषमान् (for विषयं). B6 (marg.) D8 Ca कर्मणा. ❀ Ca: अन्नविषयं रसाद्यपश्यन्ननादरादनालोचयन् यो भुञ्जानः स विघसाशि[? °श]न इव श्रेष्ठः । अर्थविषयांस्तु निरूप्य भुञ्जानो विषयानिव कर्मणा वागादीनाप्नोतीति विद्धि । ❀

40 a) G1. 3 अत्र (for यत्र). K1. 2. 4 यत्रागमम( K4 °स )मानानाम्; K6 °गमयमज्ञानाम्; D5. 7 °मगममानानाम्. ❀ Cn: आगमं प्रमाणजं ज्ञानमात्मन इच्छताम्, आगमयमानानाम् । क्यजन्तस्य रूपम् ॥ Cp: आगमयमानानां, सुबाह्यमेव प्रमाणीकुर्वताम् ॥ Cs: आगमयमानानां, अवगमं कुर्वताम्, ज्ञातुमिच्छताम् ॥ Cv: अगमयमानानाम्, अजानताम् । ❀ — b) G1 corrupt; G2 असंस्कारेण (for असत्का°). K1 पृच्छतं. — c) Dn4 ब्रूया यद्; T G1. 3 न ब्रूयाद् (for प्रब्रू°). K6 B6. 7. 8 (marg.). 9 Da3. a4 D5. 7 आत्मनो; V1 Bo. 8 Dn1 D4. 6. 9 T1 G3 M1. 5. 6 ब्राह्मणो. — d) B9 D5. 7 जेतुं तं (for त्यजेत्तं). — After 40, D5. 7 ins.:

739* दुर्वृत्तोऽपि वरो विप्रो न च शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुह्येच्छीलवतीं खरीम् ।
पण्डितस्यापि शूद्रस्य सर्वशास्त्ररतस्य च ।
वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ।

41 a) K2 शिष्योपाध्यायका; M1. 5–7 °ध्यायिकी. — b) G2 यस्य (for यत्र). K1 Bo Dn1 M1. 5 सु( K1 स )समाहितः; B7 M6 °हिताः. — c) K7 Dn1 D4. 9 G3 -संपन्नः ( G1 °न्नं ); M1. 5–7 -संपन्नाः.

42 G1 om. (hapl.) 42–43. — a) Bo वरं; G2 ब्रु[ध्रु]वा (for ध्रुवं). K6 अकोशस्था बुधा यत्र; D4. 5. 7. 9 आकाशस्थो बुधो ( D5. 7 ध्रुवो ) यत्र; T G3 M1. 5–7 आकाशं ( T G3 °रं ) गूहमाना ये. ❀ Ca: आकाशस्थाः देवताः ॥ Cn: आकाशस्थाः, निरालम्बनाः । ❀ — b) D8 T G2. 3 M1. 5–7 दोषान्. D4. 5. 7. 9 ब्रूयाद् (for ब्रूयुर्). B9 विपश्चितं; D5. 7 G2 °श्चितः; M1. 7 °श्चितान्. — c) K1. 2. 4 -कामेन; K7 V1 Bo. 6. 7. 9 Da3. a4 Dn1 D2. 3. 5. 7–9 G2 -कामो वै; B8 (marg. as in text) -माना वै (for -कामा वै). T1 G2. 3 M1. 5–7 ये (for वै). — d) K2. 4 पंडिताः.

43 G1 om. 43 (cf. v. l. 42). — a) K2 संलोकता; K4 °भिता; T G2. 3 M1. 5–7 संलो( M1. 5–7 °लु )-ळिता; Ca (gloss: लङ्घिताः) Cn (gloss: आकुलीकृताः) संलोडिता (as in text). — b) K4 Bo M1 धर्मसेवतः; Dn4 °संतवः; Ca (gloss: मर्यादाः) °सेतवः (as in text). — c) G2 प्रदीप्त. K4 Dn1. n4 D3. 8. 9 चैलांतं; K7 V1 Bo. 6–9 Da3. a4 D5. 7 T G2. 3 M7 चेलांतं; D4 corrupt; M1. 5. 6 वेलांतं (for शैलान्तं). — d) B8. 9 परित्यजेत् (for न संत्य°).

44 a) K1. 2. 4 धर्मपराशंका( K1 °क )श्च; G2 °मनिःशंकाश्च. — b) K2 चारीयुर् (sic) (for चरे°). K2. 4 om. (hapl.) from वीत up to चरेयुर् (in 45b). K1 वीतमत्सरः. — c) K7 D4. 9 समं तत्र; V1 चरेच्चैव; Da4 वरेत्तत्र; Dn1 D8 D2. 8 भवेत्तत्र; Dn4 त्वरेत्तत्र (for चरे°). — d) T G1. 3 M1. 5–7 धर्म- (for पुण्य-).

45 K2. 4 om. up to चरेयुर् (cf. v. l. 44). — a) K1 Bo Da4 Dn1. n4 D8 D2. 3. 6. 8 G3 (before corr.) च (for तु). — b) T G3 यदि; G1 त्रिधि (sic) (for यत्र). — c) K2 उदवसेज्; K7 D9 G2 उप°; Bo अनुवशेज् (for °वसेज्). — d) B8 ये (for ते). G2 तु (for हि). Da3. a4 पापकृता; G1 °कृते. K1. 2. 4 B8 T1 G1. 3 नराः (for जनाः).

46 a) K6 पापेण. — b) K1. 2 Da4 M1. 5. 6 वर्तते. — c) Bo Ca (gloss: अपसरेत्) व्यवधायेत्; Ds1 व्यपधावेत्; D6 व्यवधाने; M1. 7 विधावेत. K2 तूलं;

C. 12. 10598
B 12. 288[7]. 47
K. 12. 293 47

कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः ।
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥ ४६
येन खट्वां समारूढः कर्मणानुशयी भवेत् ।
आदितस्तन्न कर्तव्यमिच्छता भवमात्मनः ॥ ४७
यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः ।
कुटुम्बिनामग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ॥ ४८
श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्याः सनातनाः ।
याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ॥ ४९
स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः ।
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन् ॥ ५०
अशुचीन्यत्र पश्येत ब्राह्मणान्वृत्तिकर्शितान् ।
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् ॥ ५१
प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः ।
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ॥ ५२
दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ५३
उपसृष्टेष्वदान्तेषु दुराचारेष्वसाधुषु ।
अविनीतेषु लुब्धेषु सुमहद्दण्डधारणम् ॥ ५४

---

D4 तूर्णे. — [d]) D6 समर्थात्; G3 ससर्प- (for ससर्पात्). Ds1 ससर्पाञ्शरणानिव; T1 G1 सर्पः श(G1 स)-रवणादिव.

47 = (var.) 5. 39. 27. — [a]) Cv खड्गं (for खट्वां). K1 समारूढाः; Cv °रूढं (for °रूढः). ❀ Ca: खट्वां समारूढः, जरसा विकलः ॥ Cn: तीव्रदुःखग्रस्तः ॥ Cp: प्रमत्तः ॥ Cs: निद्रितः । ❀ — [b]) K6 कर्मणानुशयीत वै. ❀ Ca: अनुशयी, पश्चात्तापान्वितः । ❀ — [c]) K4 आदित्यस्; K6 क्षहतस्. K4 Da4 Dn1. n4 D4 तत्र (for तन्न). ❀ Cv: येन पुरुषेण आदितः खड्गं, खड्गवस्थितं वैरं समारूढं, मनसि निहितम् । कर्मणा अनुशयी, अनुकूलः । तदीदृशं गूढकपटं न कर्तव्यम् । ❀ — [d]) Ds1 (before corr.) D6 T1 G3 भावम्; M1. 7 सुवम्; Ca (gloss: कल्याणं) भवम् (as in text). K4 आत्मजा (for °नः).

48 [a]) K1 partly damaged. Da3 राज्यं च; Da4 राज्यस्य (for राज्ञश्च). K2. 4 यत्र यत्र नरा राज्ञः (K2 °ज्ञीः). — [b]) ❀ Ca: प्रत्यनन्तराः, सदृशाः ॥ Cv: प्रतिगृहं अन्तरं, अन्तर्गृहमिति शङ्का नास्ति येषां ते प्रत्यनन्तराः । ❀ — [c]) T1 G3 M7 कुटुंबिनाम्. T1 G1 अग्रभुजां. — [d]) T1 G1. 3 देशम्; M1. 5–7 राज्यम् (for राष्ट्रम्).

49 [a]) K6 त्वग्रं. T1 त्वगृहीतारो; G1. 2 त्व(G2 तु)ग्रहीतारो (for °भोक्तारो). — [b]) K4 धर्मनित्यः; Ds1 °निष्ठाः. G2 M1. 5–7 तपस्विनः (for सनातनाः). — [c]) K6 Da4 G1 याजनाध्य(Da4 °ध्या)यने; D6 °ध्यापना. — [d]) D5. 7 राज्यम् (for राष्ट्रम्). Bo आविशेत्; D7 आचरेत् (for आवसेत्).

50 [b]) D4 सत्यम् (for सम्यग्). K4 B7 Da3. a4 अवस्थिताः (for अनुष्ठिताः). — [c]) K4 वर्तन्त्यं (for वर्तन्ते). — [d]) D6 [अ]पि चारयन्; G1 विचा°.

51 G2 om. (hapl.) 51–55. — [a]) K1. 2. 4 आतुरान्; D8 अशुचीर्. D2 एव (for यत्र). — [b]) Some MSS. वृत्तिकर्षितान्; K2 °कर्षतान्; T2 °गर्हितान्. — [c]) T G1. 3 M1. 5–7 तत्यजेत् (by transp.). K7 B8 D4. 5. 7. 8 T1 आपन्नम् (for आस°). — [d]) K2 उपमिष्टम्; B8 अपकृ°; B9 Da4 Dn1 उपसृ° (Da4 °स्प°); Dn4 D3 °सन्नम् (for °सृष्टम्). K2 [आ]मिशं. ❀ Ca: उपसृष्टम्, चण्डालादिस्पर्शदूषितम् ॥ Cn: सविषम् । ❀

52 G2 om. 52 (cf. v. l. 51). — [a]) Some MSS. प्रीयमाना; K4 °माणो. — [b]) D4 om. from प्रय up to कृ (in 53[b]). D7 प्रपद्येयुर् (for प्रयच्छे°). D8 अयाजिताः. — [c]) K6 B6 सुस्थचित्तो. Bo प्रसेत्; B8 (marg. as in text) भवेत् (for वसेत्). T1 G3 अत्र (for तत्र). — [d]) D6 कृतकृत्यम्; D7 °कृत्या.

53 G2 om. 53 (cf. v. l. 51). D4 om. up to कृ (cf. v. l. 52). — [a]) D5. 7 दंडी. Dn4 दंडोपत्राविनीतेषु. — [b]) D8 D2 सत्कारसु- (for सत्कारश्च). — [c]) Da3 चरतात्र (for चरेत्तत्र). — [d]) Da3. a4 पुण्ये (for पुण्य-).

54 G2 om. 54 (cf. v. l. 51). — [a]) Da4 corrupt. K2 T1 G6 Ca उपसृष्टेषु; K7 °सृष्टेपु (for °सृष्टेषु). K1. 4. 6. 7 Bo. 7. 9 Da3 Dn1. n4 D2. 8. 9 G1 दांतेषु; Ds दीप्तेषु (for [अ]दान्तेषु). ❀ Ca: उपसृष्टेषु, उपहतबुद्धिषु । ❀ — [b]) G1 दुराचरेषु. K1. 4. 6 V1 B7 Dn1. n4 Ds D2. 3. 7. 8 M7 साधुषु. — [c]) K4 अविशीतेषु (for °नीतेषु). Da4 लब्धेषु. — [d]) Ds1 corrupt.

C. 12. 10818
B. 12. 295[4].28
P. 12. 300. 28

निर्गुणो यो हि दुर्बुद्धिरात्मनः सोऽरिरुच्यते ॥ २७
मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह ॥ २८
धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा ।
आत्मभूतः सदा लोके चरेद्भूतान्यहिंसयन् ॥ २९
यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।
नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ३०

इति श्रीमहाभारते शान्तिपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

# २८४

पराशर उवाच ।
एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः ।
तपोविधिं तु वक्ष्यामि तन्मे निगदतः शृणु ॥ १
प्रायेण हि गृहस्थस्य ममत्वं नाम जायते ।

---

G2 निर्गुणेन (for °णो यो). K4 ये; Bo. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 [ऽ]पि; B6 स (for यो). Dn4 च (for हि). — d) T1 G1. 3 आत्मना (for °नः). K1. 2. 4 स निवर्तते; K6 V1 B7. 9 Da3. a4 D5. 7 T G1. 3 सो- (V1 शो)तिरिच्यते; Bo. 8 Ds D2. 3 (marg.). 9 सोनि- (Ds2 °नु)रुध्यते; B6 [ऽ]प्यभि(marg. स नि)रुध्यते; B8 (marg.) स विरुध्यते; Dn1. n4 D3 Cn (gloss: अतीव तुष्टो भवति) सोतिर(Dn4 °रि)ज्यते (for सोऽरिरुच्यते).

28 D6 missing (cf. v. l. 15). Ds2 reads 28[ab] on marg. — a) K1. 2. 4 Ds मानुष्येषु. — b) Da4 om. धर्मा. K1. 2 धर्मा(K2 °र्मं)धर्म-. K1. 2. 4 -प्रवर्तकः; K6. 7 प्रवर्तत; G1. 3 °र्तितः. — c) D5. 7 धर्मेषु (for भूतेषु). — d) K1. 2 T G1 मानुष्य-. K2 इव (for इह).

29 D6 missing (cf. v. l. 15). — b) K7 इहको; M7 इहतो (for ईहको). D2 ईहकालीहकोपि वा (sic). — c) ❀ Cv: आत्मभूतः, आत्मनि परमात्मनि भूतः जातः । ❀ — d) D4 [ऽ]चरद्; G1 चर (for चरेद्). Da4 भूयानि (for भूतानि). K2. 4. 7 Bo. 8 (marg. as in text) Dn1. n4 Ds D2. 3. 8 T2 G1. 3 अहिंसया (for °यन्).

30 D6 missing (cf. v. l. 15). K2 om. 30[a]. — a) Ds2 यया (for यदा). V1 [अ]प्यपेत-; B6 (marg. as in text). 7 Da3. a4 चापेत- (for व्यपेत-). D9 (by corr. *sec. m.*) -हृल्लासं (for -हृल्लेखं). ❀ Cn: हृदि लिख्यत इवेति हृल्लेखा वासना ॥ Cv: हरतीति हृत्, दुःखं, तस्य लेखा कला व्यपेता यस्मात् तत्तथोक्तम् । हृदयं लिखति विदारयतीति हृल्लेखः कामो वा । ❀ — b) K2 om. (hapl.) from तस्य वै up to भवति (in 30[c]). G1. 3 तत्सुखं (for तस्य वै). — c) K1. 6. 7 V1 Bo 6–9 Da3. a4 Dn4 D3–5. 7. 9 G1. 2 नानृत(K1 °ता)श्च. G1 चेह (for चैव). ❀ Cn: नानृतम्, अनृतमहंकारोऽज्ञानं वा, तद्रहितम् । ❀ — d) K7 V1 Bo. 7–9 Da3. a4 Dn1. n4 D2–4. 8. 9 (by corr.) अर्छति; D7 इच्छति (for ऋ°).

Colophon. Ś1 D6 G6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 T G1–3 M1. 5–7 मोक्षधर्म. — *Adhy. name:* K1. 2. 4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M5 पराशरगीता; K7 D4. 5. 9 पराशरगीतासु धर्मप्रसिद्धिः. — *Adhy. no.* (figures, words or both): B7 Ds1 T1 G1. 3 118; Dn1 M5 120; Dn4 Ds2 119; D8 1014 (sic); T2 131; G2 130; M1. 6. 7 117. — *Śloka no.:* Da3. a4 Dn1. n4 D8 31.

## 284

☞ This adhy. is missing in Ś1 D6 G6 (cf. v. l. 12. 274. 13; 283. 15; 259. 1).

1 a) D5. 7 धर्मं एवंविधस्तात. — b) G2 गृहस्तस्य. — c) D7 ततो (for तपो-). K6 -विधिस्; G1 -विधींश् (for -विधिं). K7 नु; T G1. 3 च (for तु). Dn4 वक्षामि. — d) K1. 2 तं (for तन्). K7 Dn4 निगदितः (for °दतः).

2 a) K7 Bo Da4 Dn1. n4 D2. 3. 8 च; B8 (marg. as in text) D4. 5. 9 M1. 5–7 [इ]ह (for हि). G2

सङ्गागतं नरश्रेष्ठ भावैस्तामसराजसैः ॥ २
गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च ।
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥ ३
एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ॥ ४
रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजाता रतिर्नाम समुपैति नराधिप ॥ ५
कृतार्थो भोगतो भूत्वा स वै रतिपरायणः ।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥ ६
ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम् ।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥ ७
स जानन्नपि चाकार्यमर्थार्थं सेवते नरः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥ ८
ततो मानेन संपन्नो रक्षन्नात्मपराजयम् ।
करोति येन भोगी स्यामिति तस्माद्विनश्यति ॥ ९
तपो हि बुद्धियुक्तानां शाश्वतं ब्रह्मदर्शनम् । C. 12. 10831 B. 12. 296[5].10 K. 12. 301. 10

---

गृहस्तस्य. — b ) D4.9 ह्यमत्वं ( for ममत्वं ). K7 D4.9 G1 नाभिजायते ( for नाम जा° ). — c ) K6 Ds1.s2 ( by corr. as in text, *sec. m.* ) Dn4 D3 समागतं; D5 शमागतं ( for सङ्गा° ). D9 om. ( hapl. ) from श्रेष्ठ up to नर ( in 3d ). — d ) K1.2.4.6 B0 Dn1.n4 Ds D2.3.8 भावै राजसतामसैः.

3 D9 om. up to नर ( cf. v. l. 2 ). — a ) K1.2.4 B8 Da3 D4.5.7 T1 गृहानाश्रित्य. G1 भावश्च ( for गावश्च ). — b ) Da3 विविधानि ( for च धनानि ). — c ) G1.3 प्रजाश्च ( for पुत्राश्च ). D5 दारा भृत्याश्च पुत्राश्च; T1 दारान्भृत्यांश्च पुत्रांश्च. — d ) B8 ( marg. ) हि ( for [इ]ह ). K2 न तस्य ( for नरस्य ).

4 a ) B8 ( marg. ) -भूत- ( for तस्य ). — b ) K6 -पश्यत ( for -पश्यतः ). — K1.2.4 T2 G1 om. ( hapl. ) 4cd. — c ) D5.7 -द्वेषे; G2 -द्वेषेण ( hypermetric ) ( for -द्वेषौ ). Dn1 विवर्धते; D4 °र्धेत; D5.7 T1 G3 M1.5–7 प्रवर्धेते ( for विव° ). — d ) K6 अपश्यत ( for °श्यतः ). B6.8 ह्यनित्यमनुपश्यतः; B9 °त्यत्वमनुपश्यतः ( hypermetric ).

5 a ) T2 -भूतश्च; G1 -भूतस्य ( for -भूतं च ). — b ) Da4 -वशानुगः ( for -वशानुगम् ). T2 नरेंद्रे ह्यवशानुगं. — c ) Dn4 -जात- ( for -जाता ).

6 a ) K4 भोगितो. K6 B0.6–9 कृ( B0.6.8 [ marg. ].9 र )त्यर्थं भोगिनां ( B0.6 °नं ) त्यक्त्वा; K7 Ds1 D2.3 ( marg. ).8 रत्यर्थं भोगिनस्त्य( K7 °नोस्त्य )क्त्वा; V1 Dn1.n4 Ds2 D3.5.7 Cn कृता( V1 °त्य )र्थं भोगिनं मत्वा ( D5.7 त्यक्त्वा ); Da3.a4 D4.9 G2 M1.5–7 Ca रत्यर्थे ( Da3 हृत्यर्थे [ sic ]; D4.9 कृत्यार्थं; Ca हृत्यर्थं ) भोगिनोत्यक्त्वा; T G1 कृतार्थभोगितां ( G1 °तं ) त्यक्त्वा; G3 रत्यर्थं च धनं त्यक्त्वा. ❀ Ca: भोगिनोत्यक्त्वा, ईश्वरान् अत्यक्त्वा, सेवित्वा । ❀ — c ) K1.2.4 V1 B8 ( marg. as in text ) लोभाद्; T2 लाभ- ( for लाभं ). K7 D4.9 प्राप्य; G2 ग्राम- ( for ग्राम्य- ). K1 V1 B8 ( marg. as in text ) अन्यद् ( for अन्यं ). — d ) D5.7 रं( D5 र )जितो ( for रतितो ). Da3.a4 नात्र; D7 जातु ( for नानु- ).

7 b ) K2 संवाद् ( for सङ्गाद् ). K7 D4.9 संगाद्वारयते ध( D4 ज )नं; D5.7 संगाद्वा जायते नरः. — c ) K1.2 V1 चापि; B8 चेह ( for चैव ). K1.2.6 B6.7.8 ( marg. as in text ).9 Da4 D5.7 तस्यैव; Dn4 तस्येव ( for तस्येह ). K7 D4.9 पुष्ट्यर्थं तु ततस्तस्य; D8 °र्थं तस्य चैवेह. — d ) Cn ( gloss: विक्षिपति, वृद्ध्यर्थं कुसीदव्यापारं करोति ) विकीर्यति ( for चिकी° ).

8 a ) D5.7 T1 G1.3 संजानन् ( for स जानन् ). B8 ( marg. ) चाल्पार्थम्; Ds2 D5.7 वाकार्यम् ( for चाका° ). — b ) K4 अथार्थं; B8 D5.7 अर्थार्थी; B8 ( marg. ) अकार्यं ( for अर्थार्थं ). G2 M1.5–7 पुनः ( for नरः ). — c ) B8 Dn1.n4 D3 बालः; M1.5–7 बाले ( for बाल- ). — d ) D4.9 -तप्यति ( for -तप्यते ). K1.2.4 तत्क्षयांश्चानुपश्यति.

9 a ) K1.4 संसक्तो; K2 °युक्तो; K7 D4.9 T G1–3 M1.5–7 °मतो ( for °पन्नो ). — b ) D5.7 रक्षत्यात्म- ( for रक्षन्नात्म- ). B8 ( marg. ) -पराभवं ( for °जयम् ). — c ) K6 B6.8 ( marg. ).9 Da3.a4 D5.7 मुच्येयम्; K7 मुच्येरन्न ( hypermetric ); V1 T भोगी स्याद्; D4.9 मुच्येन्न ( sic ) ( for भोगी स्याम् ).

10 T1 reads 10 after 12ab; T2 after 12cd. — a ) Dn1 यथा हि; Dn4 D4 तथा हि; D5.7 ततो हि; T G1 M1.5–7 तपसा; G2 तेजो हि; Cp तपोभिर् ( for तपो हि ). K4 बुद्धिर्; T1 G1 सिद्धि-; Cp वृद्धि- ( for बुद्धि- ). B0.9 Ds D2.3 ( marg. *sec. m.* ).8 तपोवृ( B0 °पोबु-; B9 °तो वृ )द्धिप्रयुक्तानां; B6.7 Da3.a4 तपोभिर्वृद्धियु°; G3 तपःसंसिद्धियु°. — b )

C. 12. 10831 B. 12. 296[5].10 K. 12 301. 10 अन्विच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥ १०
स्नेहायतननाशाच्च धननाशाच्च पार्थिव ।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ ११
निर्वेदादात्मसंबोधः संबोधाच्छास्त्रदर्शनम् ।
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति ॥ १२
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् ।
यो वै प्रियसुखे क्षीणे तपः कर्तुं व्यवस्यति ॥ १३
तपः सर्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रदेशकम् ॥ १४
प्रजापतिः प्रजाः पूर्वमसृजत्तपसा विभुः ।
क्वचित्क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव ॥ १५
आदित्या वसवो रुद्रास्तथैवाग्न्यश्विमारुताः ।
विश्वेदेवास्तथा साध्याः पितरोऽथ मरुद्गणाः ॥ १६
यक्षराक्षसगन्धर्वाः सिद्धाश्चान्ये दिवौकसः ।
संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः ॥ १७
ये चादौ ब्रह्मणा सृष्टा ब्राह्मणास्तपसा पुरा ।
ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा ॥ १८
मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः ।

---

B8 ( marg. as in text ) धर्म- ( for ब्रह्म- ). K6 V1 Bo. 6. 7. 8 ( marg. ). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 -वादिनां; K7 D4. 9 -दर्शकं; D7 -दर्पणं ( for -दर्शनम् ). —$^{c}$) D4 om. from र्म up to र्वेदम् ( in $11^{d}$ ). —$^{d}$) K7 D9 गुणानां ( for नराणां ). K1 M1. 5–7 नृ( K1 नृ )णामस्य( K1 *sup. lin.* °त्य )सतां ( M1 °ता ) सुखं; K2 नृणां संत्यज°; V1 G2 नृणां स त्यजतां सुखं (G2 शुभं ); B8 ( marg. as in text ) नराणां व्रजतां शुभं.

11 D4 om. up to र्वेदम् ( cf. v. l. 10 ). —$^{a}$) D5. 7 -नाशाय ( for -नाशाच्च ). —$^{b}$) D5. 7 -नाशाय ( for -नाशाच्च ). Dn1 पार्थिवः. — K3 lacuna for $11^{d}$.

12 $^{a}$) Ds1 -संमोहः; G1. 2 -संबोधं; M1. 7 -संबोधाः ( for -संबोधः ). —$^{b}$) K1 संबोधाः; K2 सततं ( for संबोधात् ). K2 G1. 3 आत्म- ( for शास्त्र- ). — After $12^{ab}$, T1 reads 10. T1 G1. 3 om. $12^{cd}$. —$^{d}$) K4 D5. 7 तत ( for तप ). K4 [अ]न्वपश्यति; M1 [अ]नुतप्यते ( for °पश्यति ). — After 12, T2 reads 10.

13 $^{a}$) K4 मनुष्येह ( for °ष्येन्द्र ). —$^{b}$) K1. 2 V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 D2. 3. 8 Cp प्रत्यवमर्षवान्; K4 °मर्षनात्; K6 °दर्शवान्; B7 °सर्गवान्; M1. 7 °मर्शवाक् ( for °मर्शवान् ) ❀ Ca: प्रत्यवमर्शः, अनुसंधानादि, तद्वान् ॥ Cn: सारासारविवेकवान् । ❀ —$^{c}$) D5. 7 वाधीय; Cp वा प्रिय- ( for वै प्रिय- ). K1. 2. 4 B6. 7 प्रिये; G1 M1 प्रियं ( for प्रिय- ). Bo खिन्नस्; Da3 Dn1. n4 Ds D2. 3. 8 क्षीणस् ( for क्षीणे ). —$^{d}$) D7 ततः ( for तपः ).

14 $^{a}$) Da4 ततः ( for तपः ). D7 T G1. 3 स्वर्ग- ( for सर्व- ). T1 G1. 3 -फलं ( for -गतं ). —$^{d}$) D7 फलं स्वर्ग- ( for स्वर्गमार्ग- ). K4. 7 Bo. 8 ( marg. as in text ) Ds D1. 4. 5. 7–9 T G1. 3 -प्रदर्शकं ( T G1 °कः ); V1 -प्रवेशकं; B6 -प्रदेशकः; B9 G2 M1. 5–7 -प्रदेशिकं; Dn1. n4 D3 -प्रवर्तकं ( for -प्रदेशकम् ).

15 $^{b}$) K1 तपसः; K6 B7 तु तथा ( for तपसा ). K1. 2 Da3. a4 M1 प्रभुः; K6 ( marg. ) विधिः ( for विभुः ). —$^{c}$) K1 व्रतपरे; K2 चाप्ययपरे; Da3 Dn1 Ds2 D3 ब्रह्मपरो ( for व्रत° ). —$^{d}$) G1 व्रतानास्थाय ( for व्रतान्या° ). Da4 T1 पार्थिवः.

16 $^{a}$) K1 आदित्यवसो[सवो] रुद्रास्. —$^{b}$) B9 M1. 5–7 [अ]श्व्यग्नि-; Dn1 [अ]श्व्याश्वि-; Ds1 [अ]श्व्यथ; D5. 7 [अ]न्ये( D7 °न्य )श्वि-; D8 [अ]श्व्यपि; T G3 [अ]-प्यग्नि-; G1 *ग्निश्च ( for [अ]ग्न्यश्वि- ). K6 D5. 7 G1 -मारुतः; K7 D4. 9 -वासवाः; T G3 -मारुतौ ( for -मारुताः ). —$^{c}$) K2. 4 संख्याः ( for साध्याः ).

17 $^{a}$) G2 -रासह- (sic) ( for -राक्षस- ). —$^{b}$) K3 Ds1 D2 तथा; Ds2 ( by corr. as in text ) साध्याश् ( for सिद्धाश् ). D4 दिवोकसः; G2 दिवौकजः ( for °कसः ). K4 ये चान्ये च दिवौकसः. —$^{c}$) K6 तापसास्; Da3. a4 तपसां ( for तपसा ). D9 ये ते ( for तात ). T G1. 3 M1. 5–7 संसिद्धास्तात तपसा.

18 $^{a}$) G2 om. ये चादौ. K1. 2. 4 T2 ब्राह्मणा; K7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 ब्राह्मणाः ( for ब्रह्मणा ). K7 स्रष्टा ( for सृष्टा ). —$^{b}$) K1 ब्रह्मणास्; K2 Da4 ब्राह्मणा; K6 V1 Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 8 ब्रह्मणा; K7 ब्राह्मणस् ( for °णास् ). K2 परा. —$^{c}$) Da3. a4 भापयंतः; Dn4 D5. 7 G3 भावयंति; G1 °यंतीं ( for °यन्तः ). —$^{d}$) K4 विचरंत; G1 संचरंति ( for विच° ). V1 तथा दिवं ( by transp. ); D5. 7 यदृच्छया; G2 दिवं यथा.

महाकुलेषु दृश्यन्ते तत्सर्वं तपसः फलम् ॥ १९
कौशिकानि च वस्त्राणि शुभान्याभरणानि च ।
वाहनासनयानानि सर्वं तत्तपसः फलम् ॥ २०
मनोनुकूलाः प्रमदा रूपवत्यः सहस्रशः ।
वासः प्रासादपृष्ठे च तत्सर्वं तपसः फलम् ॥ २१
शयनानि च मुख्यानि भोज्यानि विविधानि च ।
अभिप्रेतानि सर्वाणि भवन्ति कृतकर्मणाम् ॥ २२
नाप्राप्यं तपसा किंचित्त्रैलोक्येऽस्मिन्परंतप ।
उपभोगपरित्यागः फलान्यकृतकर्मणाम् ॥ २३
सुखितो दुःखितो वापि नरो लोभं परित्यजेत् ।
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ॥ २४
असंतोषोऽसुखायैव लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥ २५
नष्टप्रज्ञो यदा भवति तदा न्यायं न पश्यति ।
तस्मात्सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत् ॥ २६
यदिष्टं तत्सुखं प्राहुर्द्वेष्यं दुःखमिहोच्यते । C. 12. 10848 B. 12. 196[5]. 27 K. 12. 301. 27

---

19 [b]) G1 ग्रहमेधिनः. —[c]) K7 D4.9 -कुले च (for -कुलेषु).

20 [a]) Ds2 (before corr. as in text) D7 T G1.3 M1.5–7 कौशेयानि (for कौशिकानि). G2 तु (for च). T G1.3 वासांसि (for वस्त्राणि). —[b]) K2 शुभाणि (for शुभानि). —[c]) K1.2 Da3.a4 Ds2 T G1.3 वाहनानि च (Ds2 स-); K4 विमानानि च; B3 (marg.) वाहनाशन- (for °सन) B0 D2.3 पानानि; Da3.a4 सर्वाणि (for -यानानि). D5.7 वाहनं शयनं यानं (D5 om. यानं). —[d]) K1.2.4 B0 Dn1.n4 Ds D2.3.5.7 T1 G3 तत्सर्वं (by transp.). D4 तपः फलं (submetric). — After 20, B6 reads 22.

21 B0 om. (hapl.) 21. —[a]) G1 (by corr. as in text) मनोनुकुलयाः. —[b]) K2 lacuna; K7 D8.9 रूपवंत्यः (K7 °त्याः) (for °वत्यः). K7 D4.9 स्वलंकृताः (for सहस्रशः). —[c]) G1 वासं (for वासः). K1.6 M1.6 प्रसाद- (for प्रासाद-). K1.2.7 B9 D4.9 G1 -पृष्ठेषु (for -पृष्ठे च). —[d]) K7 V1 B8 D4.9 T2 G1.2 M1.5–7 सर्वं तत् (by transp.). K1 तपसा. Da3 om. (hapl.) from फलम् up to तपसा (in 23[a]).

22 Da3 om. 22 (cf. v. l. 21); B6 reads 22 after 20. B8 reads 22[ab] twice. —[a]) B8 (first time) कामिकानि च वस्त्राणि. —[b]) D4 भाग्यानि (for भोज्यानि). D5 वा (for च). —[c]) D5 अतिप्रेतानि. G2 कर्माणि (for सर्वाणि). —[d]) K6 V1 B0.6.7.8 (marg. as in text) Da4 Dn1.n4 Ds D2.3.5.7.8 T1 G3 शुभ- (for कृत-). B0 Dn1.n4 Ds D2.3.8 -कर्मिणां (for -कर्मणाम्).

23 Da3 om. up to तपसा (cf. v. l. 21). —[a]) B1 G1 न प्राप्यं (for नाप्राप्यं). K6 V1 B0.6–9 Da4 Dn1.n4 Ds D2.3.8 तपसः (for °सा). —[b]) K6 त्रैलोके (for त्रैलोक्ये). K4 B0 Da4 Dn1 Ds D2.3.8 G1.3 [ऽ]पि; T च (for ऽस्मिन्). K2 त्रैलोक्येप्यभवन्नृप; Dn4 त्रैलोक्यं पितरं तप (sic). —[c]) T G1.3 (also as in text) -परित्यक्तः (for °त्यागः). —[d]) Ds D3 -कर्मिणां (for -कर्मणाम्). K6 D9 T G1.3 फलानां कृतकर्मणां. ❀ Cn: अकृतकर्मणां, कृतकृत्यत्वहीनानामनुत्पन्नतत्त्वज्ञानानां तपसः फलानि उपभोगपरित्यागो, वैराग्यम् । ❀

24 [a]) B1 प्रेक्ष्य; Da4 अवेक्ष्यं; Dn4 अवेक्ष (for अवेक्ष्य). B9 अवेक्ष्य मनसाशास्त्रार्थं (sic). —[d]) T2 G1 M1.5–7 बुद्धा (for बुद्ध्या). T1 नरसत्तम.

25 25[ab] is damaged in K2. —[a]) K4.6.7 V1 B0.6.7.8 (marg.).9 Da3.a4 Dn1.n4 Ds D2–4.7–9 [ऽ]सुखायेति; D5 °खी चेति (for ऽसुखायैव). —[b]) Dn1.n4 Ds D2.3.8 -संभ्रमः; Cp (gloss: निरङ्कुशतया सर्वतो धावनम्) -विभ्रमः (as in text). —[c]) K2 नरस्य; T1 अतोस्य; G1.3 ततो हि (for ततोऽस्य). —[d]) Dn4 विविधाभ्यास-; D5.7 विद्या चाभ्यास- (for विद्येवा°). K7 -वर्जिताः. Ds1 विद्याभ्यासविवर्जिता.

26 [a]) Hypermetric. K1.2 यदा भाति; K4.7 V1 B8 D4.5.7.9 G1 यदा च स्यात्; B0 Dn1.n4 Ds D2.3.8 यदा तु स्यात्; Da4 lacuna; T1 G3 यद्भवति (for यदा भवति). —[b]) K1 न्याये; K7 D4 न्यायं (for न्यायं). G2 अपश्यति (for न प°). —[d]) K4 Da3 उग्र- (for उग्रं).

27 27[ab] is damaged in K2. —[a]) T1 दृष्टं; T2 उग्रं (for इष्टं). —[b]) K7 G1 द्वेष्यो; Da4 द्वेष्य-; Dn4 द्वेष्य- (for द्वेष्यं). B0 Dn1.n4 Ds D2.3.8 [दृ]श्यते (for [उ]च्यते). —[d]) K1.2.4.7 V1 D4.5.7.9 पश्य(D9 °श्ये)त; T G1.3 पश्य(T2 °श्यं)ति (for पश्यस्व). M1.5–7 पार्श्वः.

C.12.10848
B.12.296[5].27
K.12.301.27

कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥ २७
नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते ।
प्राकाश्यं चैव गच्छन्ति कृत्वा निष्कल्मषं तपः ॥ २८
अप्रियाण्यवमानांश्च दुःखं बहुविधात्मकम् ।
फलार्थी सत्पथत्यक्तः प्राप्नोति विषयात्मकम् ॥ २९
धर्मे तपसि दाने च विचिकित्सास्य जायते ।
स कृत्वा पापकान्येव निरयं प्रतिपद्यते ॥ ३०
सुखे तु वर्तमानो वै दुःखे वापि नरोत्तम ।
स्ववृत्ताद्यो न चलति शास्त्रचक्षुः स मानवः ॥ ३१
इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता ।
रसने दर्शने घ्राणे श्रवणे च विशां पते ॥ ३२
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात्पुनः ।
बुधा येन प्रशंसन्ति मोक्षं सुखमनुत्तमम् ॥ ३३
ततः फलार्थं चरति भवन्ति ज्यायसो गुणाः ।
धर्मवृत्त्या च सततं कामार्थाभ्यां न हीयते ॥ ३४
अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा ।
प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ॥ ३५
मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् ।

---

28 a) K4 पश्यंत. — b) Ds1 -भुज्यते (for -भुञ्जते). — G1 om. 28c–30d. — c) K1 प्राकास्यं; K2 प्राकाम्यं; D7 T1 प्रकाश्यं; G2 प्राकाशं; Cn (gloss: विख्याततां) प्राकाश्यं (as in text).

29 G1 om. 29 (cf. v. l 28). — a) T1 अप्रियं हि (for °याणि). K2 अवसानांश्च; K7 D4 9 T G3 अवमानं च; Dn4 °मानाश्च (for °मानांश्च). K1 अप्रियान्यद्रुमानाश्च (sic). — Da3. a4 D7 om. (hapl.) 29cd. — c) G2 फलानि (for फलार्थी). K6 सत्पथे; B8 M7 सत्पथं; D8 सत्पथा; T1 सत्फल- (for सत्पथ-). Dn1. n4 Ds T2 फलार्थी तत्फलं (Dn4 T2 सत्फलं; Ds सत्पथं) त्यक्त्वा. — d) K1. 2. 4. 6. 7 D3. 4 G2 विषयात्मकः; T1 °त्मभिः (for °त्मकम्).

30 b) K6 B6. 7. 8 (marg.). 9 Da3 a4 Dn1. n4 Ds D3. 8 Cn (gloss: अविहितकार्यचिकीर्षा) Cpp विधित्सा च; V1 धिहिकित्सा (sic); D2 विधिधित्सा च (hypermetric) (for विचिकित्सा). — c) K4. 6 Bo. 6. 9 Da3. a4 Dn1 n4 Ds1 D2. 3. 8 एवं (for एव).

31 a) B8 (marg.) सुखे वा; Ds2 सुखेति; D3 T1 G1. 3 सुखेपि; D5. 7 सुखेन (for सुखे तु). K2 D5. 7 [ऽ]पि; G2 वा (for वै). — b) V1 B6 Da3. a4 G2 चापि; D5. 7 न च; T G1. 3 [ऽ]पि च (for वापि). K7 D9 T1 नरोत्तमः. — c) K4 B5. 6 Dn1. n4 Ds D2. 8 G1. 2 सु-; G3 स (for स्व-). K6 V1 Bo. 6–9 Da3. a4 G3 -वृत्त्या (for -वृत्ताद्). K6 V1 Bo. 6 Da3. a4 Dn1. n4 Ds D2. 3. 8 G2 M1. 5–7 चलते.

32 a) G1 इक्षु-; M1 इष्टु (sic) (for इषु-). B8 (marg.). 9 -प्रस्थान-; Da4 -प्रताप- (for -प्रपात). K1. 6 B6 (marg.) Da3. a4 Ca -मात्रे; K2 D5. 7 G3 -मात्रा (for -मात्रं). ❀ Ca: इषुप्रपातमात्रे, अत्यल्पकाले । ❀ — b) K1. 2. 4 B3 -योग- (for -योगे). K6 G1 स्मृताः; Da4 सृताः; Ds1 D2. 8 स्पृहा; M1. 5–7 स्मृतः (for स्मृता). — d) M5. 7 [ऽ]पि (for च).

33 b) Bo तत्प्रियात् (for तत्क्ष°). D4 om. from पुनः up to ज्याय (in 34b). — c) Bo. 8 (marg. as in text) Dn1. n4 Ds D2. 3. 8 Cn (Cnp as in text) अबुधा न (for बुधा येन). K7 D9 तं न; D5. 7 तेन (for येन). — d) K7 भोक्तुं (for मोक्षं).

34 D4 om. up to ज्याय (cf. v l 33). — a) K2. 6. 7 D9 T2 G3 M7 तपः (for ततः). K7 D9 फलात्तु; T1 फलोत्थाः; T2 G1 फलार्थाः; G3 फलार्थः (for फलार्थं). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 9 T2 G1–3 सर्वस्य; T1 सर्वेभ्यो; Ca चरतः (for चरति). — b) B6. 9 Da3 a4 G2 M1 5–7 भवति (for भवन्ति). K4 ज्यायसा; V1 M1. 5–7 Ca. p (both, gloss: अधमस्य) [अ]ज्यायसो; Bo. 7 Dn1. n4 Ds1 s2 (before corr. as in text) D2. 3. 8 ज्यायसे; Da4 ज्यायशो; D5. 7 [अ]तिशया (D7 °यो) (for ज्यायसो). K4. 7 B6. 9 Da3. a4 D3 G2 M1. 6. 7 गुणः (for गुणाः). — c) T1 G1 M7 -वृद्ध्या (for -वृत्त्या). K1. 2. 4. 7 V1 B8 (marg.) D4. 5. 7. 9 G2 हि (for च).

35 a) K6 सर्वा (for सेव्या). ❀ Cn: अप्रयत्नागताः, प्रारब्धकर्मोपस्थापिताः । ❀ — b) K6 G1 ग्रहस्थैर्. V1 तथा (for सदा). — c) K1. 2. 4. 7 D3 D4. 9 -संगम्य (for -गम्यश्च). Dn4 प्रयत्नैर्नोपनीयश्च; T1 G3 प्रयत्ने नापि कर्तव्यः; G1 अप्रयत्नोपभोग्याश्च. — d) Dn4 ह्यधर्मं; Ds स्वभाव; D5. 7 धर्मश्च; G1 स्वधर्मा (for स्वधर्म). D5. 7 नो (for मे).

36 b) K7 नित्य- (for नित्यं). K1. 2. 4 -सेविनां;

धर्मक्रियावियुक्तानामशक्त्या संवृतात्मनाम् ॥ ३६
क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ ३७
सर्वात्मना तु कुर्वीत गृहस्थः कर्मनिश्चयम् ।
दाक्ष्येण हव्यकव्यार्थं स्वधर्मं विचरेन्नृप ॥ ३८
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ३९

इति श्रीमहाभारते शान्तिपर्वणि चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

# २८५

जनक उवाच ।
वर्णो विशेषवर्णानां महर्षे केन जायते ।
एतदिच्छाम्यहं श्रोतुं तद्ब्रूहि वदतां वर ॥ १
यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः । C.12.10812 B.12.297[6].2 K.12.302.2

---

Da4 -मानुषां (for -चक्षुषाम्). — c) K6 V1 Bo. 6. 7. 9 Dn1. n4 Ds D2. 3. 8 क्रियाधर्मविमु( V1 B6 Dn1. n4 Ds °यु )क्तानाम्; B8 Da3. a4 D5. 7 G2. 3 M7 धर्मक्रियाविमु- ( D5. 7 M7 °भियु-; G2. 3 °नियु )क्तानाम्. — d) K1 अशक्त्यां; Dn1 T2 अशक्या; Dn4 अशक्ता; G1 शंक्यानां; G2 अशक्यं; G3 शक्तानां; M1. 5. 7 नाशक्यं; M6 नाशंक्यं; Cv असग्यं (for अशक्त्या). ❀ Cn: संवृतात्मनाम्, मूढमनसाम् ॥ Cv: सम्यग्वृतः वशीकृतः आत्मा चित्तं येषां ते । ❀

37 a) K1. 2 4. 7 Ds1 क्रियमानं; Da3. a4 ह्रियमाणं (for क्रिय°). B8 (marg.) यथा (for यदा). — b) Da3. a4 T2 गच्छंति. — c) Da4 नान्यकृते; D5 नान्य- दृतं; D7 नान्यकृतं (for नान्यदृते). — d) G3 दृश्यते (for विद्यते).

38 a) D8 स्वत्त्वात्मना (for सर्वा°). Dn4 Ds2 D4. 7 G3 [अ]नु-; Ds1 न (for तु). K6 कुर्वंति (for कुर्वीत). — D8 om. (hapl.) $38^{b}$–$39^{c}$. — b) K1 गृहस्थाः (for °स्थः). M1. 5–7 धर्म- (for कर्म-). Ds1 om. from निश्चयम् up to श्रमिणः (in $39^{c}$). — c) V1 B7. 8 Dn4 दाक्षेण. — d) K6 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D2–5. 7. 9 T G1. 3 स्वधर्मे. K4 विविचेन्; V1 Bo. 6. 8. 9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5. 7 G2 M1. 5–7 विच- रन्; T2 हि चरेन् (for विचरेन्).

39 = Manu. 6. 90; (var.) Vasiṣṭha Smṛti 8. 15. Ds1 om. up to श्रमिणः; D8 om. $39^{abc}$ (for both, cf. v. l. 38). — a) K6 सर्वं (for सर्वे). — b) K1. 4. 6 Da4 T2 M1. 7 संस्थितं. — B9 om. (hapl.) $39^{cd}$. — c) T1 G1 3 तथैवाश्रमिणः सर्वे. — d) K1 T2 M1. 7 संस्थितं; B7 संस्थितिः (for संस्थितिम्).

Colophon. Ś1 D6 G6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* K1. 2. 4. 6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 T G1–3 M1. 5–7 मोक्षधर्म. — *Adhy. name:* K1. 2. 4. 6 V1 Bo 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8. 9 M1. 6 पराश( K6 Da4 °स )रगीता; K7 D4. 5. 9 M5. 7 पराश- ( D4 °स )रगीतासु तपःप्रशंसा ( M5. 7 °शंसनं ). — *Adhy. no.* ( figures, words or both ): B7 116; Dn1 121; Dn4 Ds2 ( marg. *sec. m.* ) M5 120; D8 1015 (sic); T1 G1. 3 119; T2 132; G2 135; M1. 6. 7 118 ( M7 18 ). — *Śloka no.:* Da4 39; Dn4 40.

## 285

☞ This adhy. is missing in Ś1 D6 G6 ( cf. v. l. 12. 274. 13; 283. 15; 259. 1. ).

1 a) Da4 G2 M1. 5–7 वर्णो; D3 ( by corr. ). 7 वर्णा ( for वर्णो ). Ds2 ( by corr. ) T G1–3 M1. 5–7 विशेषो ( for विशेष- ). K6 B6. 7. 8 ( marg. ) Da3. a4 -धर्माणां ( B7 °नां ) ( for -वर्णानां ). — c) K6 V1 Bo. 6 7. 8 ( marg. as in text ). 9 Da3. a4 Dn1. n4 Ds D2 3. 8 ज्ञातुं ( for श्रोतुं ). — d) Da4 वरं ( for वर ).

2 a) K1. 2. 4 यदस्य; G2 य एतज् ( for यदेतज् ). D8 ज्ञायते ( for जायते ). K6. 7 V1 B8 ( marg. as in text ). 7 D4. 5. 7. 9 सत्यं ( for ऽपत्यं ). — b) Dn4

C. 12. 10862 B. 12. 297. 2 K. 12. 302. 2 कथं ब्राह्मणतो जातो विशेषग्रहणं गतः ॥ २

पराशर उवाच ।

एवमेतन्महाराज येन जातः स एव सः ।
तपसस्त्वपकर्षेण जातिग्रहणतां गतः ॥ ३
सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः ।
अतोऽन्यतरतो हीनादवरो नाम जायते ॥ ४
वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे ।
सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः ॥ ५
मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रबन्धवः ।
ऊरुजा धनिनो राजन्पादजाः परिचारकाः ॥ ६
चतुर्णामेव वर्णानामागमः पुरुषर्षभ ।
अतोऽन्ये त्वतिरिक्ता ये ते वै संकरजाः स्मृताः ॥ ७
क्षत्रजातिरथाम्बष्ठा उग्रा वैदेहकास्तथा ।
श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः ॥ ८
आयोगाः करणा व्रात्याश्चण्डालाश्च नराधिप ।
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परम् ॥ ९

जनक उवाच ।

ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् ।

---

[अ]हम् (for [अ]यम्). — c) K1 2 कथं हि (K2 वा) ब्राह्मणो जातो.

3 c) M1. 5–7 तपसस्तु प्रकर्षेण.

4 a) K1 स्वक्षेत्रश्; K2 D5. 7 सुक्षेत्रश्; K6 स्वक्षत्राच्; Ds1 D8 स्वक्षे° (for सुक्षे°). K1. 2. 4 D5. 7 सुबीजश्; Ds1 D8 स्वबीजाच् (for सुबी°). — b) T2 पुंसो; G3 पुण्ये (for पुण्यो). — c) K6 V1 G2. 3 ततो (for अतो). — d) B6–9 Da3. a4 G1 अधरो; G2 अपरो (for अवरो). G2 न स्म (for नाम).

5 b) M1 [अ]भिजज्ञिरे (for [अ]थ ज°) — c) Hypermetric. T2 सृष्टिः (for सृजतः). K7 D9 ब्राह्मणो (for प्रजापतेर्). B6. 8 (marg. as in text). 9 Da3. a4 लोका; T G1. 3 अंगाद् (for लोकान्).

6 a) K1 2 मुखतो (for मुखजा). K2 ब्राह्मणो. K1 जातौ; K2 जाता; D5. 7 तत्र; T1 G1. 3 तावद् (for तात). — b) K1. 2. 4 बाहुभ्यां (for बाहुजाः). T G3 M1. 5–7 क्षत्रबांधवाः (for °बन्धवः). K6 B7 Da3. a4 Dn1. n4 Ds D2. 3. 8 G2 बाहुजाः क्षत्रियाः स्मृताः; B8 क्षत्रिया बाहुजाः स्मृताः. — c) K1 तरुजा; K6. 7 Da4 Dn4 उरुजा; Ds1 उरूजा (for ऊरुजा). B6 च विशो; T2 G1 M1. 5–7 वणिजो (for धनिनो). — d) M1. 5. 7 पादकाः (M5 °तः) (for पादजाः). K2 Bo. 6. 8 Ds2 D3 T G3 परिचारिकाः; D4 °वारकाः; D5. 7 शूद्रयोनयः (for परिचारकाः).

7 a) K1. 2. 4 इति; B8 (marg.) अपि (for एव). — b) ❀ Cs : आगमः, उत्पत्तिः । ❀ — c) D4 corrupt. K1 G1. 3 व्यतिरिक्ता; T1 चाति° (for त्वति°). — d) K2 G2 संकारजाः; T1 G1. 3 संकीर्णजाः (for संकरजाः). G1. 3 मताः (for स्मृताः).

8 a) Da4 Dn1. n4 D2. 3 क्षत्रियातिर्; G1 क्षेत्रजातिर् (for क्षत्र°). Da3. a4 अथोंबष्ठा (for अथाम्बष्ठा). K2 4 क्षत्रजातिरथाः सृष्टा. ❀ Cs : क्षत्रजातिरिति मूर्धाभिषिक्तः, ब्राह्मणस्य राज्यामुत्पन्नः । तथा च वैजयन्ती (Oppert, pp. 72–76) — सवर्णं ब्राह्मणाद्राज्ञी सूते मूर्धावसिक्तकम् । वैश्याम्बष्ठं निषादं तु शूद्रा पारशवश्च सः ॥ वैश्याद्वैदेहकं विप्रा क्षत्रकन्या तु मागधम् । सूतं विप्रा नृपाद्वैश्या माहिष्यं जवनश्च सः ॥ चण्डालं ब्राह्मणी शूद्रात्क्षत्रियात्पारधेनुकम् । वैणवं सैव चौर्येण वैश्याच्चायोगवं तथा ॥ विप्रा नापितमम्बष्ठादस्मिन्कापि श्वपाकवाक् । श्वपचश्चैव चण्डालाच्चर्मकञ्चुकजीवनम् । रथकारं तु माहिष्यात्करणी महिषस्यकम् । पुष्कराच्चैव चण्डालात्किरातं पलगण्डुकम् ॥ इत्यादि द्रष्टव्यम् । ❀ — b) T1 G1. 3 इति; Cs (gloss : परशवः) उग्रा (as in text). K7 V1 Ds1 D4. 9 G2 वैदेहिकास. K1. 2 स्मृताः (for तथा). — c) K1 श्वपाकः; K2 श्वापकाः (for श्वपाकाः). K2 पुल्कस-; K6 पुक्कसाः; K7 D4. 5 पुष्कसाः; V1 पुष्कशाः; Bo. 6. 7. 9 Ds1 पुक्कशाः; B8 पुल्कशाः; D9 पुष्फसाः (for पुल्कसाः). K3 स्तेन- (for स्तेना). — d) G1 निषधाः (for निषादाः).

9 a) K4. 6 V1 Bo 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 7. 8 T2 अयोगाः; D4 अयागाः; D5 अयोप- (for आयोगाः). K1. 2 T1 M1. 7 कारणा; D7 G1. 3 केरला; M6 कर्मणा (for करणा). — b) K6. 7 V1 B6. 7. 9 Da3. a4 Ds D2–5. 7. 8 चांडालाश्. K1. 2. 4 नराधमाः; Da4 D4 °धिपः (for °धिप). — d) K6 V1 Bo. 6–8 Da3. a4 Dn1 Ds D2. 3. 8 परस्परात् (D2 °राः).

10 a) Ds1 D5 T2 G2 Cnp ब्राह्मणा (for ब्र°). K1. 2. 4 M1. 5–7 ब्राह्मणैः केन जातानां. — b) K1. 2. 4 B9 गोत्रता (for गोत्रतः). D5 स्मृतः; D9 स्मृतं; G2 पथः (for कथम्). — cd) K7 B8 D4 T G1. 3 बहूनीमानि; B8 (marg.) Dn4 °निह हि; Ds2 °नीहेह; D5. 7 °नि

बहूनीह हि लोके वै गोत्राणि मुनिसत्तम ॥ १०
यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः ।
शूद्रयोनौ समुत्पन्ना वियोनौ च तथापरे ॥ ११

पराशर उवाच ।

राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना ।
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥ १२
उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ॥ १३
पितामहश्च मे पूर्वमृश्यशृङ्गश्च काश्यपः ।
वटस्ताण्ड्यः कृपश्चैव कक्षीवान्कमठादयः ॥ १४
यवक्रीतश्च नृपते द्रोणश्च वदतां वरः ।
आयुर्मतङ्गो दत्तश्च द्रुपदो मत्स्य एव च ॥ १५
एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽऽश्रयात् ।
प्रतिष्ठिता वेदविदो दमे तपसि चैव हि ॥ १६
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
अङ्गिराः कश्यपश्चैव वसिष्ठो भृगुरेव च ॥ १७
कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
नामधेयानि तपसा तानि च ग्रहणं सताम् ॥ १८ C. 12. 10878 B. 12. 297[6]. 18 K. 12. 302. 18

---

नाम; D9 बहुनामानि; G2 बहूनि खलु (for °नीह हि). K1. 2. 4 transp. लोके वै and गोत्राणि. B8 (marg. as in text) T1 G1. 3 [ऽ]स्मिन् (for वै). Da4 D8 मुनिसत्तमः.

11 a) D4 lacuna; D5. 7 यत्र (for तत्र). ❀ Ca. p: यत्र तत्रेति, अनियतयोनौ। ❀ — b) K1. 2. 4 सुगोत्रं; K6 स्वैयोनिं (sic); Da4 स्वयोनि-; G2 सुयोनिं (for स्व°). K7 यथा; B9 गतः (for गताः). — c) Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 8 शुद्रयोनौ; Da4 शुद्धं योनौ (for शूद्रयोनौ). K1 समुत्पन्नान्; M1 °त्पन्नौ. — d) K1 नियोनौ (for वि°). Dn4 वा (for च). ❀ Cs: वियोनौ, योन्यभावे कलशादौ। ❀

12 a) K1. 2. 6 B6–8 D3. 4 T1 G1. 2 M7 एतद् (for नै°). K6. 7 D4. 9 गुह्यम् (for ग्राह्यम्). — b) K1. 2. 4 अनिकृष्टेन; K7 D4. 9 अव° (for अप°). V1 कर्मणा (for जन्मना). — c) K1. 6 महात्मानं (for °त्मनां). D5. 7 समुत्पत्तिं. — d) G1 भावितात्मनः.

13 ab) K1. 2. 4 transp. मुनयो and नृपते. Ds2 D8 जायंते (for नृपते). K4 हि; T1 वा; G1. 3 ते (for ह). — c) Dn4 त्वेनैव; Ds1 स्वे स्वेनैव (hypermetric); T2 तेनैव (for स्वेनैव).

14 a) G2 corrupt. Ds D8 च वै; D2 चैव (for च मे). ❀ Cs: पितामहः वसिष्ठो वरुणरेतसा कुम्भे जातः। ❀ — b) K1. 2. 4. 6. 7 Bo. 6–8 Da3 Dn1. n4 Ds1 D2. 4. 8 ऋष्यशृंगश्च; D9 ऋक्ष° (sic); G1 ऋश्या° (sic) (for ऋश्य°). K6 D5. 7 कश्यपः; G1 कश्यपं. — c) K4 वरस; K6 वटु-; K7 B7 वठस्; Bo. 6. 8 (marg.). 9 Ds D3 वटुस्; B8 (also marg.) पठस्; Da3. a4 वट-; Dn1 वेदस्; Dn4 बहुस्; D2. 8 बटुस्; D7 वचश्च; T1 G1 वसुस्; T2 मनुस्; G2 पटस्; G3 वस्तुस्; M1. 5–7 वटुर् (for वटस्). K1 तड्यः; K2 तुंड्यः; K4 तंड्य-; Dn4 तांद्यः; Ds1 तांड्रयः; D4 तांड्य-; D5 चाघः; D7 चाद्याः; G2 तंड्यः; M1. 5–7 यास्काः (for ताण्ड्यः). — d) K1 V1 कांक्षीवत्-; K2 कार्ष्णवत्-; K4 Bo. 6–8 Da3. a4 Dn1. n4 D2. 3. 8 काक्षीवत्-; K7 कांक्षीवान्; B9 D4. 9 काक्षीवान्; D5 कश्यपः; G2 M1. 5–7 कक्षीवत्- (for कक्षीवान्). K1. 2. 4 कवचादयः; Dn4 कर्मवा°; T G1–3 M1. 5–7 कवषा° (for कमठा°).

15 D5. 7 om. 15ab. — a) D9 -क्रीवश्च (for -क्रीतश्च). — b) K1. 2. 4 ददतां (for वदतां). T1 M1. 5–7 वर (for वरः). — c) D2 मतेगो (sic); D4 मतंगा (for मतङ्गो). K6 मत्तश्च; K7 Ds1 D2. 4. 8. 9 दक्षश्च; V1 दांतश्च; D5. 7 मंतुश्च (for दत्तश्च). — d) K2 द्रुषदो; Dn1. n4 D3. 8 द्रुमदो; D4 द्रुपदा (for द्रुपदो). K7 दक्ष; V1 Bo. 9 Dn1. n4 Ds D2. 3. 8 मात्स्य (for मत्स्य).

16 a) K6 B7 D5 एतेषां (for एते स्वां). — b) K2 D4 वेदेह (sic); B7 विदेह (for वैदेह). Ds1 D2. 3 (by corr.) तपसा (for तपसो). B6 T2 [ऽऽ]श्रमात्; T1 [ऽ]ग्रहात्; M1. 5–7 बलात् (for ऽऽश्रयात्). — d) K7 V1 B8 D4. 5. 7. 9 G1 M1. 5–7 ह; G3 च (for हि). K6 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 दमेन तपसैव ह (Bo. 6 Dn1. n4 Ds D2. 3. 8 हि).

17 b) T2 G1 भारत (for पार्थिव). — K2 D4. 7 G2. 3 om. (hapl.) 17c–18b. — c) K6 V1 Bo Dn4 D3. 5 T G1 M1. 5–7 काश्यपश्च. — d) K6. 7 B6. 8 वशिष्ठो (for वसिष्ठो).

18 K2 D4. 7 G2. 3 om. 18ab (cf. v. l. 17). — d) B8 (marg.) यानि; G1. 3 नाम (for तानि). K2

C. 12. 10679
B. 12. 297(c). 19
K. 12. 302. 19

जनक उवाच ।

विशेषधर्मान्वर्णानां प्रब्रूहि भगवन्मम ।
तथा सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ १९

पराशर उवाच ।

प्रतिग्रहो याजनं च तथैवाध्यापनं नृप ।
विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना ॥ २०
कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि ।
द्विजानां परिचर्या च शूद्रकर्म नराधिप ॥ २१
विशेषधर्मा नृपते वर्णानां परिकीर्तिताः ।
धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे ॥ २२
आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ २३
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ २४
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
अत्र तेषामधीकारो धर्मेषु द्विपदां वर ॥ २५
विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथासन्तमाश्रित्येह स्वकर्मसु ॥ २६

---

निग्रहणं (for च ग्र°). G2 सत्तम (hypermetric) (for सताम्). ❀ Cv: ग्रहणं सतां, प्राप्तानीत्यर्थः । ❀

19 G2 om. the ref. — a) D5.7 विशेषधर्मं (for °धर्मान्). — b) Ds1 प्रजा ब्रूहि (hypermetric) (for प्रब्रूहि). B8 (marg.) वदतां वर (for भगवन्मम). — c) B0.8 Dn1.n4 Ds D2 3.8 ततः; B6 damaged (for तथा). Ds1 -धर्मंश्च; D9 -धर्माश्च (for -धर्मांश्च). B3 तु (for च). — d) G1 प्रब्रूहि (for सर्वत्र). Da4 शमलो (for कुशलो).

20 K1 पाराशरा (for पराशर). — a) D7 पालनं (for याजनं). K7 om. च. V1 B6.8 (marg.) Da3.a4 G2 प्रतिग्रहोथ य(Da3 या)जनं. — b) K6 V1 D5.7 [अ]ध्ययनं (for [अ]ध्यापनं). — c) K1.4.6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3 8 विशेषधर्मा; D5.7 °धर्मं (for °धर्मो).

21 a) K4 Dn1 n4 Ds2 G2 M1 5–7 पशुपाल्यं; K7 पाशुपाल्यश्च; D4 **पाल्यं. D4 om. च. — b) K2 वानिज्यं; D4 वणिजा; D7.9 M1.5.6 वणिज्या (for वाणिज्यं). K1 2 4 विशां प्रभो (K1 °भोः) (for विशामपि).

22 a) D2 om. from धर्मा up to संवि (in 23b). — b) D5 वर्णानां परिकीर्तितः; G2 °नां च प्रकीर्तिताः. — c) Ds1 साधारणं; D4 °णास् (for °णांस्). — d) K6 तत् (for मे).

23 D2 om. up to संवि (cf. v. l. 22). — b) K6 G1 M1.5–7 प्रमादः; K7 D4 5.7 प्रशमः; B8 (marg.) प्रसादः; D9 प्रथमः (for [अ]प्रमादः). K7 T2 G1.M1.5–7 संविभागता (K7 °गिताः); Dn4 सविभागिना (for संविभागिता). K1.2 [अ]प्यप्रमादः स्वकर्मसु; K4 प्रमादः स्वकर्मसु (submetric). — c) K1.2.4 श्राद्धं कर्म; K6 श्राद्धधर्म-; G1 श्रद्धाकर्म (for श्राद्धकर्म). T G1.3 M1 [आ]तिथेयत्वं (M1 °श्च) (for °यं च). — d) B6 वा (for च).

24 b) K4 M5 शौच-; K6.7 D4.6 शौर्यं (for शौचं). K7 D4 9 नित्यानसूयिता; Dn4 Ds1 D2.8 °नुसूयता. — c) Da3.a4 आत्मा ज्ञानं (for आत्मज्ञानं). — d) M1.6 साधारणो (for °णा). Ds2 D2 स्मृताः (D2 °ता) (for नृप). K1.2 Ds1 D5.7.8 T2 G1–3 धर्मः साधारणो (G1 °णे) नृप (Ds1 D8 स्मृतः; D5.7 मतः).

25 a) K1.2.4 ब्राह्मणः क्षत्रियो वैश्यस्. — b) D4 reads from त्रयः up to द्विजा (in 28b) twice. — c) K6 यत्र (for अत्र). K6 आधिकारो (for अधी°). ❀ Cn: अधीकारः, उपसर्गे घञ्यमनुष्ये बहुलम् (Pāṇini 6. 3. 22) इति दीर्घः । ❀ — d) K7 Ds1 वरः.

26 For the repetition in D4, cf. v. l. 25. — a) K1.2 D7 विकर्मा चास्थिता; K4 B6.7 Da4 D9 विकर्म चास्थि°; K6 विकर्म वास्थि°; K7 विकर्मा च स्थि°; B8 (marg. as in text) विकर्मसु स्थि°; Da3 D4 (both times) विकर्म वास्थि°; D5 विकर्मा वा स्थि°; T G1.3 M1.5–7 विकर्मणि स्थि°; G2 विकर्मे च स्थि° (for विकर्मावस्थिता). — b) K6 B0.6–8 Da3.a4 Dn1.n4 Ds D2.3.8 पतंते (for पतन्ति). T1 G3 निरये (for नृपते). — c) K1.2 यथा वृत्तम्; B0.8 D5.7 यथासत्त्वम्; B6.9 T G1.3 M1.5–7 Ca यथासन्नम्; B8 (marg.) यथान्यायम्; D4 (both times).8.9 यथा सत्यम्; G2 यथायत्नम् (for यथासन्तम्). ❀ Cs: यथासन्तं, यथाविहितम् । ❀ — d) D5.7 आवृत्य (for आश्रित्य). Ds2 [इ]व (for [इ]ह). K1 सुकर्मसु; G2 M1.5–7 स्वकर्म

न चापि शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति वा ।
श्रुतिप्रवृत्तं न च धर्ममाप्नुते
न चास्य धर्मे प्रतिषेधनं कृतम् ॥ २७
वैदेहकं शूद्रमुदाहरन्ति
द्विजा महाराज श्रुतोपपन्नाः ।
अहं हि पश्यामि नरेन्द्र देवं
विश्वस्य विष्णुं जगतः प्रधानम् ॥ २८
सतां वृत्तमनुष्ठाय निहीना उज्जिहीर्षवः ।
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः ॥ २९
यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते ॥ ३०

जनक उवाच ।

किं कर्म दूषयत्येनमथ जातिर्महामुने ।
संदेहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि ॥ ३१

पराशर उवाच ।

असंशयं महाराज उभयं दोषकारकम् ।
कर्म चैव हि जातिश्च विशेषं तु निशामय ॥ ३२ C.12.10892 B.12.297(e).31 K.12.30.22

---

च (for स्वकर्मसु). K2 आश्रित्य स्वेपु कर्मसु. ❀ Ca: आश्रित्य, अन्ततरावरवर्णवृत्त्याश्रयणेन । ❀

27 For the repetition in D4, cf. v. l 25. — a) K7 वा (for च). G2 [अ]ति· (for [अ]पि). D2 शूद्राः. G3 पतितश्च (for पतति). K7 न; Da4 G2 ह; G3 च (for [इ]ति). — b) D4 (both times) वा (for च). K1.2 V1 B6–9 Da3.a4 D2.4 (both times).9 G2 च; Dn4 D5.7 T G1.3 M7 lacuna (for वा). — c) D8 T G1 M1.5–7 श्रुतिप्रयुक्तं; D7 श्रुतप्रवृत्तं; G3 श्रुतिश्च प्रयुक्तं (for श्रुतिप्रवृत्तं). D4 (both times) नव·; D5 च न (by transp.). D5.7 वृत्तम्; T G1.3 कर्म (for धर्मम्). D5 अश्नुते; T G1.3 सोऽश्नुते (for आप्नुते). — d) D4 (both times) तत्रास्य धर्मे; G2 न ह्यधर्मे (for न चास्य धर्मे). K6 धर्मं; K7 धर्मः; Da4 धर्म· (for धर्मे). K7 प्रतिसाधनं (for °षेधनं). ❀ Ca: धर्मे, आनृशंस्यादि(st 23–24)त्रयोदशकरूपे । ❀

28 For the repetition in D4, cf. v. l. 25. — a) K7 D3.9 T2 वैदेहिकं; G3 °ह तं (for °हकं). D5.7 वेदं हि शूद्राः समुदाहरंति. ❀ Cn: वैदेहकं, विदेहेषु विदितम् । ये स्थूलं शरीरं त्यक्त्वा लिङ्गमेवात्मत्वेन प्रतिपन्नास्ते विदेहाः । [तेषां] मुक्तिर्जन्मद्वयेन व्यवहिता ॥ Cs: वैदेहेति संबुद्धिः । कशब्दः प्रजापतिवचनः । द्विजाः कं, प्रजापतिं, तत्सदृशब्राह्मणमुदाहरन्ति ॥ Cv: वैदेहकं, वैदेहकः ब्राह्मण्यां वैश्याज्जातः (Amara 2. 10. 3) । ❀ — b) K7 D4.9 गुणोपपन्नाः; D5.7 गुणप्र° (for श्रुतोप°). — c) G1.3 दैवतं (for देवं). — d) T G1.3 M1.5–7 Cs प्रतिष्ठां (for प्रधानम्).

29 a) B9 Da3.a4 G2 वृत्तिम् (for वृत्तम्). K6.7 B0.7.8 Dn1.n4 D8 D2.3.5.8 G1 अधिष्ठाय; Da3.a4 अनुध्याय; G2 lacuna (for अनुष्ठाय). — b) K1 Dn1 T2 विहीना; K2.4 Dn1 D2.5.8 G1 निहीनान्; K6 V1 B0.6–8 Da3.a4 नि(B8 marg. वि)हीनानि; K7 D4.9 निहीनम्; D7 हीनानपि; G1 विहीनाश्च; G2 *हीनापि; G3 निहीनश्च; M1.5–7 निहीनापि; Cn (gloss: शूद्राः) निहीना (as in text). B3.7.9 Da3.a4 उज्जिहीर्षयेत्; Dn1.n4 Cn (gloss: आत्मानमुद्धर्तुमिच्छवः) उद्दिधीर्षवः (Dn4 °याः); G1.3 च जिगीषव; Cnp (gloss: कामादीन्दोषानुच्छेत्तुमिच्छवः); Cs (gloss: शूद्रत्वादात्मानमुद्धर्तुमिच्छवः) उज्जिहीर्षव. (as in text). — c) K7 D7 G3 मंत्रवर्जा; B7 Da3 °बद्धा; Da4 °वद्वा; M1.5–7 °वर्ज्यं (for °वर्जं). K2 दुह्यंति; K7 दूष्यंति (for दुष्यन्ति). — d) D2 कुर्वाणां. K6.7 B0.7.9 पौष्टिकीं; B8 D7 °कीं; D2 °काः; G1 °क· (for °कीः). B8 D7 क्रियां.

30 a) B7 om. the first यथा. K7 सद्वृत्ताम्; V1 यद्वृत्तम्; G2 सद्वृत्तिम् (for सद्वृत्तम्). — b) D5.7 आवर्तंति (for आलम्बन्ति). B8.9 Da3.a4 आलंबेदितरो जनः; G3 आलंबन्तितरे जनाः. — c) K7 प्राप (for प्राप्य). — d) K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.7.8 Cn मोदते; M1.5–7 शोभते (for शेरते). T G1.3 नंदंति प्रेत्य चेह च.

31 a) K6 G2 [ए]तम् (for [ए]नम्). — M1.5–7 om. (hapl.) 31b–34c. — b) K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.7.8 T1 अथो; T2 G1.3 उक्त· (for अथ). T2 जातिं. — d) K6 B6 (marg. as in text).9 ततो (for तन्मे). K1 Dn4 D81 अर्हति (for अर्हसि).

32 M1.5–7 om. 32 (cf. v. l. 31). V1 reads 32–37 on marg. — b) K2 ह्यभयं (for उभयं). K1.2.4 V1 B9 D82 D5.7 दोषकारणं (for °कारकम्). — c) K1 कर्मे (for कर्म). D4 [इ]व; G2 [अ]पि (for [ए]व).

C. 12. 10893
B. 12. 297[6]. 33
K. 12. 302. 33
जात्या च कर्मणा चैव दुष्टं कर्म निषेवते ।
जात्या दुष्टश्च यः पापं न करोति स पूरुषः ॥ ३३
जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम् ।
कर्म तद्दूषयत्येनं तस्मात्कर्म नशोभनम् ॥ ३४
जनक उवाच ।
कानि कर्माणि धर्म्याणि लोकेऽस्मिन्द्विजसत्तम ।
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा ॥ ३५
पराशर उवाच ।
शृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि ।
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ॥ ३६
संन्यस्याग्नीनुपासीनाः पश्यन्ति विगतज्वराः ।
नैःश्रेयसं धर्मपथं समारुह्य यथाक्रमम् ॥ ३७
प्रश्रिता विनयोपेता दमनित्याः सुसंशिताः ।
प्रयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ॥ ३८
सर्वे वर्णा धर्मकार्याणि सम्य-
क्कृत्वा राजन्सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वाधर्मं दारुणं जीवलोके
यान्ति स्वर्गं नात्र कार्यो विचारः ॥ ३९

इति श्रीमहाभारते शान्तिपर्वणि पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

---

$K_1$ हृ; $K_2$ $V_1$ [इ]ह (for हि). $K_6$ $B_{3.9}$ $Da_{3.a4}$ विजानीहि (for हि जातिश्च). —[d]) $T_2$ विशेषश्च. $D_{4.9}$ तु; $D_6$ $T_2$ च; $D_7$ मे (for तु). $Dn_4$ निशामयः; $G_3$ निरामया (for निशामय).

33 $M_{1.5-7}$ om. 33 (cf. v. l. 31). $V_1$ reads 33 on marg. —[b]) $K_{2.7}$ $Ds_2$ $D_{5.7}$ $G_3$ दुष्ट-; $B_6$ दुष्टः (for दुष्टं). $K_6$ $B_7$ दुष्टः ($B_7$ °ष्ट-) कर्मा($B_7$ °र्म)णि सेवते; $Dn_{1.n4}$ $D_{2.3.8}$ दुष्टं कर्म न सेवते ($Dn_1$ °से). — $G_2$ om. (hapl.) 33[cd]. —[c]) $G_1$ यत् (for यः). —[d]) $K_2$ न करोषं निशामय (sic).

34 $M_{1.5-7}$ om. 34[abc] (cf. v. l. 31). $V_1$ reads 34 on marg. —[a]) $D_8$ (by corr.) प्रधान- (for °नं). $K_4$ कुर्वाणं (for पुरुषं). —[b]) $V_1$ निष्ठतं; $D_{5.7}$ $T_1$ $G_3$ धिष्ठितं; $T_2$ $G_1$ दुष्कृतं (for धिक्कृतम्). $K_4$ कर्म धिक्कृतं परं (submetric). —[c]) $D_{5.7}$ सं-; $T_1$ तं; $T_2$ $G_{1.3}$ कं (for तद्). —[d]) $K_1$ कर्मैव; $K_2$ कश्चैव; $K_7$ $D_{4.5.7.9}$ कर्म च; $G_2$ कर्मैव (for कर्म न-).

35 $M_{1.5-7}$ om. the ref. $V_1$ reads 35 on marg. —[a]) $G_1$ यानि (for कानि). $K_{6.7}$ $Da_{3.a4}$ $D_{5.7}$ $T_2$ धर्माणि; $M_{1.5-7}$ [अ]हिंस्राणि (for धर्म्याणि). —[c]) $D_7$ हिंसति. $K_7$ $D_{4.5.7.9}$ हि; $T_2$ ह (for [इ]ह). —[d]) $K_{1.2.6.7}$ क्रियमानानि. $D_5$ सर्वशः (for सर्वदा).

36 $V_1$ reads 36 on marg. —[a]) $K_6$ $B_{6.7.9}$ $Da_3$ $D_{5.7}$ $G_3$ तन् (for ऽत्र). $B_8$ (marg as in text) शृणुष्वैतन्महाराज. —[b]) $M_{1.6.7}$ मा (for मां). $M_6$ [अ]र्थं (for त्वं). $D_9$ परिपृच्छति; $G_1$ पर्यंपृच्छसि (for परि°). —[d]) $T_2$ नरान्. $Da_4$ आचयंति (sic) (for त्रायन्ति).

37 $V_1$ reads 37 on marg. —[a]) $Da_{3.a4}$ $Dn_4$ $D_9$ $T_2$ $G_2$ सन्यस्य (for सं°). $T_2$ $G_3$ [अ]ग्निम् (for [अ]ग्नीन्). $K_1$ corrupt; $K_2$ उपासीनान्; $K_{6.7}$ $V_1$ $B_{0.6-9}$ $Dn_{1.n4}$ $D_8$ $D_{2-4.8.9}$ उदासीनाः ($D_4$ °नो); $Da_{3.a4}$ उदासीनां; $D_{5.7}$ उपासीत; $M_{1.7}$ °सीता (for °सीनाः). $G_1$ अन्येस्याग्निमुपासीनास् (sic). ❀ Cn : संन्यस्याग्नीन्, पारिव्राज्यं कृत्वेत्यर्थः । ❀ —[b]) $K_{1.2.4}$ मनसि ($K_1$ °सा) विगतज्वरः ($K_4$ °राः); $V_1$ $B_{7-9}$ न पश्यंति गतज्वराः; $B_0$ न पश्यंति विगतज्वराः (hypermetric); $Da_{3.a4}$ T $G_{1.3}$ Ca तपस्यंति गत°; $D_{4.5.7.9}$ $G_2$ $M_{1.5-7}$ नमस्व ($D_5$ $G_2$ $M_{1.5-7}$ नमस्या; $D_7$ मनस्या) विगतज्वराः ($D_9$ °रः). —[c]) $K_6$ $V_1$ $B_{0.6-9}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ Cn (gloss : योगम्) कर्मपथं (for धर्म°). —[d]) ❀ Cn : यथाक्रमम्, वितर्कविचारानन्दास्मिताख्यासु योगभूमिषु पूर्वपूर्वभूमिकां त्यक्त्वा उत्तरोत्तरभूमिकामारुह्य । ❀

38 [a]) $D_{5.7}$ प्रथिता; Cn (gloss : श्रद्धावन्तः) प्रश्रिता (as in text). $K_2$ विनशोपेता; $K_4$ विनियो°; $G_2$ विनयोपेत-. $K_7$ $D_{4.9}$ प्रकृत्या क्षमयोपेता. —[b]) $D_8$ दमनिष्ठाः (for °नित्याः). $K_{1.2.4}$ $D_{5.7}$ $M_5$ सुसंश्रिताः; $K_7$ $D_{4.9}$ °वृताः; $V_1$ $D_{2.8}$ सुसंसिताः; $B_7$ सुसंशितः; Cn (gloss : अतिसूक्ष्मबुद्धयः) °ताः (as in text). —[c]) $D_2$ om. from प्रयान्ति up to दारुणं जी in (39[c]). $K_7$ प्रयाति. $D_7$ अरजं (by metathesis); $G_1$ (before corr.) अचिरं (for अजरं). —[d]) $K_2$ स्वर्गकर्म-; $D_9$ सर्वकाम- (for °कर्म-). $K_7$ समारुह्य यथाक्रमं (= 37[d]). ❀ Cp : सर्वकर्मविवर्जिताः, संन्यासिनः । ❀

# २८६

पराशर उवाच ।
पिता सखायो गुरवः स्त्रियश्च
न निर्गुणा नाम भवन्ति लोके ।
अनन्यभक्ताः प्रियवादिनश्च
हिताश्च वश्याश्च तथैव राजन् ॥ १
पिता परं दैवतं मानवानां
मातुर्विशिष्टं पितरं वदन्ति ।
ज्ञानस्य लाभं परमं वदन्ति
जितेन्द्रियार्थाः परमाप्नुवन्ति ॥ २
रणाजिरे यत्र शराग्निसंस्तरे
नृपात्मजो घातमवाप्य दह्यते ।
प्रयाति लोकानमरैः सुदुर्लभा-
न्निषेवते स्वर्गफलं यथासुखम् ॥ ३
श्रान्तं भीतं भ्रष्टशस्त्रं रुदन्तं
पराङ्मुखं परिबर्हैश्च हीनम् ।
अनुद्यतं रोगिणं याचमानं C.12.10203 B.12.298.4 K.12.303.4

---

39 D2 om up to दारुणं जी (cf. v. l. 38). — a) D4 om. (hapl.) from र्याणि up to नात्र का in ($39^{d}$). — b) K2 कृत्या (sic); Ds1 कृता (for कृत्वा). — c) K6 V1 Bo 7. 8 Cpp कर्म (Cp धर्मं) (for [अ]धर्मं). — d) K7 D7 याति (for यान्ति). Dn4 स्वर्गं.

Colophon. Ś1 D6 G6 missing: K3 5 B1–5 Da1. a2 Dn2. n3 D1 G4 5 M2–4 absent — *Sub-parvan:* K1. 2. 4. 6. 7 V1 Bo. 6. 7. 9 Da3 a4 Dn1. n4 Ds D2–4. 7–9 T G1–3 M1 5–7 मोक्षधर्म. — *Adhy. name:* K1. 2. 4. 6 V1 Bo. 6. 8 9 Da3 a4 Dn1. n4 Ds D3–5. 8 पराशरगीता; K7 D9 पराशरगीतासु वर्णधर्मः; D2 परा * * गीता. — *Adhy no.* (figures, words or both): K6 21; B7 T1 G1. 3 120; Dn1 122; Dn4 Ds2 M5 121; D8 1016 (sic); T2 133; G2 136; M1. 6. 7 119. — *Śloka no.:* Da4 Dn1. n4 D8 39.

## 286

☞ This adhy. is missing in Ś1 D6 (cf. v. l. 12. 274. 13; 283. 15).

1 G6 resumes. D4 परासर (for °शर). — a) K1. 2. 4. 7 D4. 9 पितामहा (K7 °हो) ये; V1 T G1. 3. 6 पिता सहाया (V1 °यो) (for पिता सखायो). — b) K1 निर्गुणं नाम; K6 B6. 7 Da3. a4 °णानां तु; Dn1 Ds D8 °णानां प्र-; T G1–3. 6 M1. 5–7 °णानां हि (for °णा नाम). ❀ Cn: निर्गुणानाम्, भक्त्यादिहीनानाम् । ❀ — c) K2 अनन्यभक्त्या (for °भक्ताः). — d) D5. 7 वश्याश्च (for हिताश्च). K1 कश्याश्च; K4 G6 वध्याश्च; D5. 7 गम्याश्च (for वश्याश्च). K1. 2. 4 B8 (marg) भवंति (for तथैव).

2 a) Da3. a4 पितामहं (for पिता परं). K7 दैवत- (for °तं). K1 नामवानां; G2 lacuna (for मानवानां). — b) K2 विदांतं (for विशिष्टं). D4. 5. 7 T G1. 3. 6 परमं (for पितरं). B7 वदंते. — D4. 9 T1 transp. $2^{c}$ and $2^{d}$. — c) T2 परमाप्नुवंति; G3. 6 परमं स्तुवंति (for °मं वदन्ति). — G2 reads $2^{d}$ twice. — d) K1 जितेंद्रियार्थः. K6 परमा वदंति; G2 (first time) परमं * वंति (for °माप्नुवन्ति).

3 a) G2 M1. 7 यस्तु; M6 यत्तु (for यत्र). K2 शराय; G1 नराग्नि- (for श°). B8 -संभरे (for -संस्तरे). — b) Dn4 दह्मनं (sic); D4 दह्यत; T2 दंह्यते (for द°). — c) G6 M7 प्रयांति. K1 असुरैः; T1 G1–3 अपरैः (for अमरैः). — d) Ds2 तथा सुखं; D4 यथा-सुखं; T1 G1. 3 सुदुष्करं; T2 G6 M1. 5–7 सुपुष्कलं (for यथासुखम्).

4 a) Da3. a4 Ds1 D2. 8 शांतं (for श्रान्तं). K2 भीरुं; Ds1 भीष्टं; D3 भीमं (for भीतं). B8 (marg. as in text) D5. 7 नष्ट-; T G1. 3. 6 M1. 5–7 व्यस्त- (for भ्रष्ट-). Ds1 नुदंतं; D8 नु° (for रु°). — b) Dn1 Ds D8 Cn पारिबर्हैश्च (for परि°). G2 विहीनः (for च हीनम्). ❀ Ca. p: परिबर्हैः, वाहनादिभिः परिकरैः ॥ Cn: पारिबर्हैः, रथाश्वकवचादिभिः । ❀ — c) Dn1 Ds2 D3. 8 अनुद्यंतं; Dn4 अविद्यतं; G6 अनुद्युक्तं (for °द्यतं). K2 Dn4 रोगिनं; K7 रोगिनां; M7 रोहिणं (for रोगिणं). K6 पावमानं (for याच°). — d) Da3. a4 नरो (for न वै). K1. 2 हिंसेद्; Da3 D4 हि स्याद्

C. 12.10903 B. 12.291[7].4 K. 12.303.4

न वै हिंस्याद्बालवृद्धौ च राजन् ॥ ४
परिबर्हैः सुसंपन्नमुद्यतं तुल्यतां गतम् ।
अतिक्रमेत नृपतिः संग्रामे क्षत्रियात्मजम् ॥ ५
तुल्यादिह वधः श्रेयान्विशिष्टाच्चेति निश्चयः ।
निहीनात्कातराच्चैव नृपाणां गर्हितो वधः ॥ ६
पापात्पापसमाचारान्निहीनाच्च नराधिप ।
पाप एव वधः प्रोक्तो नरकायेति निश्चयः ॥ ७
न कश्चित्त्राति वै राजन्दिष्टान्तवशमागतम् ।
सावशेषायुषं चापि कश्चिद्देवापकर्षति ॥ ८
स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्तयेत् ।
हिंसात्मकानि कर्माणि नायुरिच्छेत्परायुषा ॥ ९
गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम् ।
निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥ १०
आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति ।
नाकारणात्तद्भवति कारणैरुपपादितम् ॥ ११
तथा शरीरं भवति देहाद्येनोपपादितम् ।

---

(for हिंस्याद्). M1. 5–7 बालवृद्धे (for °वृद्धौ).

5 a) K2 परिवर्यैः; B8 Dn1 n4 Ds2 D3. 5 पारिबर्हैः (for परि°). K2 समुत्पन्नम्; K4 Bo. 7 Dn1. n4 Ds D2. 3. 8 सुसंयुक्तम्; G2 M1. 5–7 °यत्तम् (for °पन्नम्). — b) K1 अस्पतं (sic); K2 Ds2 D4. 5. 7 G1 उद्यंतं; Da4 उह्यंतं (for उद्यतं). G3 उद्यतं तुल्यमागतं. — c) T G1. 3. 6 M5. 7 Cp अभि- (for अति-). K6. 7 Da3 D4. 9 -क्रामेत; Bo. 7 Dn1. n4 Ds D2. 3 8 -क्रमेत्तं; Da4 -कामेत्तं; D5. 7 -क्रामेन्न; Cp (gloss: तेन सह युद्धमीहेत) -कामेत (for -क्रमेत). — d) B9 Da4 क्षत्रियात्मकं.

6 a) K1. 2 श्रीमा(K2 °या)न् (for श्रेयान्). — b) K6 B6 Da3. a4 वेति; D8 नेति; D6 चैव (for चेति). K1. 2 न श्रुतं (for निश्चयः). K7 विशिष्टाच्च नराधिप. — V1 reads 6c–7d on marg. — c) K1 विहीनां; K2 Ds1 T G1. 3. 6 M1. 5–7 विहीनात् (for नि°). B8 (marg. as in text) G1 कारणाच्; T2 प्रहीताद्य् (for कातराच्). — d) K6. 7 Bo 6–9 Da3 a4 Dn1. n4 Ds D2. 3 8 कृपणाद् (for नृपाणां). Bo गर्हिणो (for °तो).

7 V1 reads 7 on marg. — b) K1 2 G1. 3. 6 M1. 5–7 विहीनाच्; Da4 निहिनाच् (for निही°). — c) D6 वाध (sic); D7 वाम (for पाप). K4 B9 Dn1. n4 D3. 8 एष; G2 येव (for एव). K2 बुधः; G1 [अ]धमः; G6 विधि- (for वधः).

8 a) K1. 2 D4. 5. 7. 9 G2 त्रायते; Da4 त्राहि वै; Dn4 नाति वै (for त्राति वै). — b) K7 दिष्टांतं; Ds1 दिष्टंत-; Cn (gloss: मृत्युः) दिष्टान्त- (as in text). Da4 -वधम् (for -वशम्). V1 आगमत् (for °तम्). B8 दिष्टांतवशवर्तितं. — c) K6 Bo. 6. 7. 9 Dn1 D3 वापि (for चापि). D4 सावशेषायुधं चापि; D5. 7 सविशेषायुषं वापि; G2 सावसेषाबुषं वापि (sic). — d) K1. 2. 4 न कश्चिद्; K6 कश्चिद्दैव; Dn1. n4 Ds2 D3 T G1 3. 6 M1. 5–7 कश्चिन्नैव; D5. 7 °न्नेह (for °देव). K7 B6 (marg as in text) [अ]व-; B8 (marg.) प्र-; Dn4 [अ]थ (for [अ]प-). K1 -कर्शति.

9 a) G1 समद्धैः (for स्निग्धैश्च). K2. 4. 7 क्रियमानानि; K6 ह्रियमाणानि (for क्रिय°). — G2 om. (hapl.) 9bc. — b) D2 कर्मानि. T G1. 3 6 त्रि-; M7 ह (for [इ]ह). D5. 7 निवर्तयन्; M1. 7 °र्तये. — c) V1 सिंहात्मकानि (for हिंसा°). K4. 7 Bo. 8 (marg. as in text) Dn1. n4 Ds D2–4. 8. 9 T G1. 3. 6 सर्वाणि; D5. 7 तान्सर्वा (for कर्माणि). — d) K7 D4. 9 पुरायुषः; T2 परायुषः (for °युषा). ❀ Cp: परायुषा, परं प्राप्य मांसभक्षणेन न स्वजीवनमिच्छेत् ॥ Cv: परायुर्नाशयित्वा स्वयं न जीवेदित्यर्थः । ❀

10 a) K7 D9 T G1. 3. 6 च (for तु). — b) K2 -कांक्षितां. ❀ Cn: विनाशं, बन्धक्षयम् । यद्वा, विः पक्षिः परमात्मा, तेन (इत्थंभावे तृतीया [Pāṇini 2. 3. 21]) परमात्मभावेन, शं परमानन्दमभिकाङ्क्षतामित्यर्थः ॥ Cp: विनाशं, स्वजीवनार्थं परनाशमाकाङ्क्षताम् । ❀ — Da3. a4 om. (hapl.) 10cd. — d) T2 G2 M1. 5–7 पुळिनेषु.

11 a) G2 आयुषी क्षयमापन्नः. — b) D5. 7 अपि (for उप-). — After 11ab, T G1. 3. 6 read 13ab. — c) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 तथा ह्यकारणाद्भवति (hypermetric); K7 D4. 9 तच्चास्या (D9 न चास्या)कारणाद्भ° (hypermetric); D5. 7 अकारणाद्भगवति; T G1. 3 M1. 5–7 यथा ह्यगारं भवति; G2 तथा ह्यकरुणं हंति. ❀ Ca. p [न]आकारणात् (Cp: अकारणात्), प्रयत्नादिविना । ❀ — d) G1 M1. 6 करणैर्; G2 करुणैर् (for कारणैर्). K2 उपसादितं; K6 Bo. 6–9 Da3. a4 Ds1 D2. 3 (before corr. as in text). 5. 7 °पादितः (for °पादितम्). ❀ Ca: कारणैः, ईश्वरादृष्टकालादिभिः,

अध्वानं गतकश्चायं प्राप्तश्चायं गृहाद्गृहम् ॥ १२
द्वितीयं कारणं तत्र नान्यत्किंचन विद्यते ।
तद्देहं देहिनां युक्तं मोक्षभूतेषु वर्तते ॥ १३
सिरास्नाय्वस्थिसंघातं बीभत्सामेध्यसंकुलम् ।
भूतानामिन्द्रियाणां च गुणानां च समागमम् ॥ १४
त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः ।
गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतम् ॥ १५
शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम् ।
भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति ॥ १६
भावितं कर्मयोगेन जायते तत्र तत्र ह ।
इदं शरीरं वैदेह म्रियते यत्र तत्र ह ।
तत्स्वभावोऽपरो दृष्टो विसर्गः कर्मणस्तथा ॥ १७
न जायते तु नृपते कंचित्कालमयं पुनः ।
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् ॥ १८ C. 12. 8919 B. 12. 298[7]. 18 K. 12. 302. 18

---

उपपादितं, अर्जितम् ॥ Cn : उपपादितं, हठेन जलप्रवेशादिना संपादितम् । ❀

12 D5. 7 G1 om. (hapl.) 12$^{ab}$. V1 reads 12$^{ab}$ on marg. — $^{a}$) B8 (marg.) यथा (for तथा). Dn4 शरीरे (for °रं). — $^{b}$) K1 देहाइयो न (sic); K4 °श्येन (sic); K6 °थैन; K7 Ds1 D4. 9 °देव; Da3. a4 देहांतेन (for देहाद्येन). Da4 उपपादिकं (for °पादितम्). M1. 5–7 करणैरुपपादितं. ❀ Cn : देहात् (ल्यब्लोपे पञ्चमी [ Vārttika on Pāṇini 2. 3. 28 ]) देहं प्राप्य । ❀ — D9 reads 12$^{c}$ on marg. — $^{c}$) B0 Da3 a4 M1. 5–7 अध्वान-; G2 अध्वन- (for अध्वानं). K2 पतकश्च; K7 D4 गतवांश्च; D5. 7 मृतकश्च; T1 G1. 6 च गतश्च; M1. 5–7 -गतिकश्च (for गतकश्च). D4 वाथ (for चायं). D9 अध्वानं च तथाध्वानं. ❀ Cs : गतकः, कप्रत्ययः कुत्सायाम् । ❀

13 T G1. 3. 6 read 13$^{ab}$ after 11$^{ab}$. — $^{a}$) K7 D4. 9 चात्र; T1 G6 तात (for तत्र). — $^{b}$) K7 D4. 9 किंचित्तु (for किंचन). K6 B0. 6–9 Da3 a4 Ds D2 G2 नान्यद्विद्यति (Ds2 °द्येत) किंचन; T G1. 3. 6 M1. 5–7 किंचिदन्यं न विद्यते. — $^{c}$) K7 D4. 5. 7 तं देहं; D9 दंडेहं (sic) (for तद्देहं). Da3. a4 योगिनां (for देहिनां). Cp (gloss: योगेन नियमितं) युक्तं (as in text). B8 T G2. 3 M1. 5–7 तद्देहं देहिना मुक्तं. ❀ Cn: तद्देहम्, क्लीबत्वमार्षम् । ❀ — $^{d}$) K1. 2. 4 मुख्यं; T G1–3. 6 M1 5–7 पंच- (for मोक्ष-). ❀ Cp : मोक्षभूतेषु जीवन्मुक्तेषु यथा अपेक्षां विनैव शरीरं तिष्ठति, तद्वदन्यस्यापीति भावः । ❀

14 $^{a}$) K1. 4. 6. 7 V1 B0. 6. 7 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7–9 T1 G6 शिरा-; B8 (marg. as in text). 9 शिरः-; G1 सिर-; G3 शिर- (for सिरा-). K1 -स्नाय्वस्ति-; K7 स्नाय्वास्थि-; B0 Da4 -स्नायूस्थि- (for -स्नाय्वस्थि-). B0 -संहातं (for -संघातं). D4 शिरास्नाय्वस्थितं यातं. — $^{b}$) D5 बीभत्सामेध्य-. D8 G2 M1. 5–7 -संयुतं (for -संकुलम्). — $^{c}$) K2 D3. 9 तु (for च). — $^{d}$) K1. 2. 4 भूतानां वशमागतं; D4 गुणा न तु समागमं. ❀ Cp : समागमं, समाहारम् । ❀

15 $^{a}$) T1 त्वगतं; G2 अटतं (for त्वगन्तं). — $^{b}$) Da3 a4 ध्यानचिंतकाः. — $^{c}$) K2 परीक्षीणं. — $^{d}$) K7 D4. 9 T G1–3. 6 M1. 5–7 संहतां (for मर्त्यतां).

16 $^{a}$) Dn4 शरीरिणां; G1 °रिणः (for °रिणा). — $^{b}$) Ds1 निश्चेष्ट- (for °ष्टं). D5. 7 निःश्रेयो गतजीवितं. — $^{c}$) K7 प्राकृतिम् (for प्र°). B9 D4 आपन्ने; D5. 7 °न्नं (for °न्नैस्). ❀ Cs : प्रकृतिमापन्नैः, महाभूतैः स्वां योनिं प्राप्तैः । ❀ — $^{d}$) D5. 7 तथा (for ततो).

17 $^{a}$) D1 corrupt. M1. 7 ज्ञापितं (for भावितं). — $^{b}$) B0. 8 (marg.) Dn1 M1 5–7 यत्र (for the first तत्र). K1 3. 4 च; T G1 हि (for ह). — K1. 2. 4 B0 Da3. a4 T1 om. (hapl.) 17$^{cd}$. — $^{c}$) K7 शरीर- (for °रं). M7 वैदेहं. — $^{d}$) Ds1 T2 G1. 3 6 M6. 7 ध्रियते (for म्रियते). K6 T2 G1 तत्र (for यत्र). K6 7 V1 B6–8 Dn1 Ds D4. 5. 7. 9 G3 यत्र (for तत्र). K7 D4. 5. 7 9 च; G2 वः (for ह). — $^{e}$) K1 तत्र (for तत्स्व-). K6. 7 Da4 D4. 9 G3 -प्रभावो (K6 °व-); V1 -प्रवादो; T G1. 6 M1. 5–7 -प्रयाते (M5 °तो) (for -स्वभावो). K6 Das a4 दृष्ट्वा (for दृष्टो). B6. 7. 9 तत्पुरा- (B7 तत्प्रसा-; B9 तत्स्वा-)दपरो दृष्ट्वा; D5. 7 तत्र भावः परो दिष्टो. — $^{f}$) Ds1 D2. 3 (marg.). 8 विमर्दः; G2 निसर्गः (for वि°).

18 $^{a}$) K6 7 B0. 8. 9 D4 9 न म्रि(K6 मृ)यते (for तु नृपते). — $^{b}$) K2. 5. 7 B9 D4 G2. 3 6 किंचित् (for कं°). K2 पुनः (for अयं). — $^{d}$) B8 (marg. as in text) नद्याम्; T1 G6 दिवीव (for द्यामिव). B6–9 Da3 a4 D7 यथा (for महान्). K6 यामिवांजधरो यथा (sic).

19 $^{b}$) K2. 4. 6 प्राप्येव (for °ह). G3 तनयं (for

शाणीवालपरीधानो व्याघ्रचर्मपरिच्छदः ।
सिंहचर्मपरीधानः पट्टवासास्तथैव च ॥ १२
कीटकावसनश्चैव चीरवासास्तथैव च ।
वस्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् ॥ १३
भोजनानि विचित्राणि रत्नानि विविधानि च ।
एकवस्त्रान्तराशित्वमेककालिकभोजनम् ॥ १४
चतुर्थाष्टमकालश्च षष्ठकालिक एव च ।
षड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः ॥ १५
सप्तरात्रदशाहारो द्वादशाहार एव च ।
मासोपवासी मूलाशी फलाहारस्तथैव च ॥ १६
वायुभक्षोऽम्बुपिण्याकगोमयादन एव च ।
गोमूत्रभोजनश्चैव शाकपुष्पाद एव च ॥ १७
शैवालभोजनश्चैव तथाचामेन वर्तयन् ।
वर्तयञ्शीर्णपर्णैश्च प्रकीर्णफलभोजनः ॥ १८ C. 12. 11282 B. 12. 304[3]. 20 K. 12. 309. 20

12 [a]) K6 B9 Da3. a4 शाणिवाल-; K7 D4. 9 साणी°; D5. 7 G1 शण°; T1 G6 शा( G6 श )णफाल- ( for शाणीवाल- ). Da4 -परिधानो; D4 -परा°; M6 -पराधीनो ( for -परीधानो ). ❀ Cn : वालेत्याविककम्बलो लक्ष्यते ॥ Cv : शाणी 'सणबुं' इत्यपभ्रंशभाषा । बालः, बाला ख्यतृणगुल्मम् । ❀ — [b]) K1 व्याघ्रचर्मापरिच्छदाः; T G1 3. 6 M1. 5–7 °मोत्तरच्छदः. — After 12, K6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 Ca. n editions ins. :

751* फलकं परिधानश्च तथा कण्टकवस्त्रधृक् ।

[ K6 V1 Bo. 7 Da3. a4 Dn1 Ds1 D2. 8 फलक- ( B7 °कः ); B9 कटकं ( for फलकं ). K6 B3 (marg.) परिधानं. ❀ Cn : फलकं, भूर्जत्वगादि चिपिटकाष्ठं वा । ❀ B9 फलक-; Da4 Cnp कटक- ( for कण्टक- ). ❀ Cn : कण्टकवस्त्रं शाल्मल्यादितूलजम् । कटकेति पाठे, तृणमयः कटः । ❀ ]

13 K4 om. ( hapl. ) 13[ab]; Dn1 reads it on marg. — [a]) K6 कीटकीवसनश्च; K7 B8 D4. 9 G2 कीटिका°; D7 कटका° ( for कीटका° ). Dn1 तथा पाटजवासाश्च; T G1. 3. 6 कीटकार्पासवसनश्च. ❀ Ca : कीटकावसनः, कौशेयवस्त्रः ॥ Cn : पट्टसूत्रजवस्त्रः । ❀ — [b]) Dn1 कीटकावसनस्तथा ( = 13[a] ); M1. 5–7 दर्भचीरोत्र- ( M5 °रावृ )तस्तथा. — [d]) K7 Ds2 D4. 5. 7. 9 [अ]भिमन्येत ( for °न्यति ). K1. 2. 7 Ds2 D4. 5. 7. 9 ( marg. as in text ) बुद्धिमान् ( for [अ]बु° ). — After 13, M1. 5–7 read 25[ef] for the first time, repeating the same in its proper place.

14 M1. 5–7 om. 14[ab]. — [b]) G1. 2 व्रतानि ( for रत्नानि ). — [c]) K6. 7 V1 Bo 6. 8. 9 Da3. a4 Dn1. n4 Ds1 D2–4. 8. 9 एकरात्रांतराशित्वम्; B7 D5. 7 एकरात्रांतराशी च ( B7 °वाशित्वम् ). ❀ Cs : एकवस्त्रं अन्तरं मध्यं यथा भवति तथा योऽश्नाति, एकाहान्तरिताशित्वमित्यर्थः । ❀ — [d]) K1. 2. 4. 7 D4. 9 एकमेकांत( K7 D4. 9 °त्र )भोजनं ( K1. 2. 4 °नः ); D5. 7 तथैकांतरभो°; D9 ( by corr. ) एकमेकसभो°; T G1–3. 6 M1. 5–7 एकमेकाहभो°.

15 [a]) Da4 -काले; D5. 7 -कालं; G3 -कालाश्च ( for -कालश्च ). K6 B9 चतुर्थाष्टककालश्च. — [b]) D5. 7 -कालकम्; G1 -कालक ( for -कालिक ). — [c]) D5. 7 -भोजनं. — [d]) K7 D4. 9 तथा सप्ताहभोजनः ( K7 °नाः ); D5. 7 तथा चाष्टाह( D7 °ष्टम )भोजनः.

16 [a]) D5. 7 G1 सप्तरात्रं. ❀ Cn : दशाहारो, दशाहाहारः । एको हाकारो लुप्तः । दशाहेन आहारो यस्येत्यर्थः । ❀ — [b]) K6 V1 Bo 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 द्वादशाह्निकभोजनः; D5. 7 °ह्निक एव च. — After 16[ab], K1 reads 17[c]. K2. 4 G2 om. ( hapl. ) 16[cd]. D5. 7 om ( hapl. ) 16[c]–17[b]. T1 G6 om. 16[c]–24[d]. — [d]) D2 फलहारस्; T2 G1 M1. 5–7 जला° ( for फला° ).

17 D5. 7 om. 17[ab]; T1 G6 om. 17 ( for both, cf. v. l. 16 ). — [a]) G1 वात- ( for वायु- ). K7 D4. 9 -भक्षश्च; B3 Da3 a4 पिण्याकी ( for -पिण्याक- ). — [b]) K2 -गोमयादश ( sic ); K7 °योदनम्; T1 °याशाद; G1 °यादय; G2 °यादान; G3 °याहार ( for °यादन ). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 दधिगोमय( K6 °यम )भोजनः; V1 दधिगोमयाद एव च ( hypermetric ); M1. 5–7 गोमयं दारुपेषणं. — D2 om. ( hapl. ) 17[cd]. K1 reads 17[c] after 16[ab]. — [c]) M1 -भोजनं ( for °नश्च ). — [d]) K1. 2. 4 शाकपुष्पाश( K2 °क ); K6 शाकं पुष्पाद; B6. 9 Da3 a4 D5. 7 G1 काशपुष्पाद ( for शाक° ).

18 T1 G6 om. 18 ( cf. v. l. 16 ). G1 om. ( hapl. ) 18–20. V1 reads 18 on marg. — [a]) K1. 2. 4 B9 D4. 9 -शेवाल-. K2 -भोजनाश्च; M1 -भोजनं. — [b]) K7 Da4 Ds1 वर्तयेत् ( for °यन् ). ❀ Cn. p : आचामेन, भक्तमण्डेन ( Amara : 2. 9. 49 ) । ❀ — [c]) K2. 4. 6 Da4 शीलपर्णैश्च; T2 G2. 3 M7 जीर्ण° ( for शीर्ण° ). — [d]) K6 प्रकीर्णं; M1. 5–7 प्रशीर्ण- ( for प्रकीर्ण- ). D5. 7 -भोजनैः.

C. 12. 11282
B. 12 304(3) 20
K. 12. 309. 20

विविधानि च कृच्छ्राणि सेवते सुखकाङ्क्षया ।
चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च ॥ १९
चातुराश्रम्यपन्थानमाश्रयत्याश्रमानपि ।
उपासीनश्च पाषण्डान्गुहाः शैलांस्तथैव च ॥ २०
विविक्ताश्च शिलाछायास्तथा प्रस्रवणानि च ।
विविधानि च जप्यानि विविधानि व्रतानि च ॥ २१
नियमान्सुविचित्रांश्च विविधानि तपांसि च ।
यज्ञांश्च विविधाकारान्विधींश्च विविधांस्तथा ॥ २२
वणिक्पथं द्विजक्षत्रं वैश्यशूद्रं तथैव च ।
दानं च विविधाकारं दीनान्धकृपणेष्वपि ॥ २३
अभिमन्यत्यसंबोधात्तथैव त्रिविधान्गुणान् ।
सत्त्वं रजस्तमश्चैव धर्मार्थौ काम एव च ।
प्रकृत्यात्मानमेवात्मा एवं प्रविभजत्युत ॥ २४
स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रियाः ।

---

19 T1 G6 om. 19 (cf. v. l. 16). G1 om. 19 (cf. v. l. 18). — a) D4 corrupt. D5. 7 विचित्राणि (for च कृच्छ्राणि). — b) Ds2 D3 सेवंते. K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T1 सिद्धि(T2 फल)कांक्षया (for सुख°). — c) K2 चंद्रादणानि. — d) ❀ Cs: लिङ्गानि, आश्रमलिङ्गानि कषायधारणादीनि । ❀

20 T1 G6 om. 20 (cf. v. l. 16). G1 om. 20 (cf. v. l. 18). — a) K2. 4 G3 चतुराश्रम(K2 °म्य)पंथानम्. — b) D5. 7 आश्रयेत (for °यति). K1. 6. 7 D4 9 G2 आश्रयानपि (K1 °णि च; K6 °ण्यपि); K2. 4 °मांस्तथा; Da3. a4 °मादपि; Dn1. n4 Ds D2. 3. 8 अपथानमपि; T2 G3 आश्रमाणि च (for °नपि). — c) D5. 7 उपासतश् (for °सीनश्). K1. 2 पाषांडान्; T2 G2. 3 पाषाणान् (for पाषण्डान्). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3 8 उपाश्रमानप्यपरान्; Ds1 युप पातक * परान् (sic). ❀ Cn (reading उपाश्रमान्): पाशुपतपाञ्चरात्राद्युक्तदीक्षायोगान् । ❀ — d) K7 D4. 9 गुहाशीलांस्; D5. 7 G3 M7 गुहाशैलास् (for गुहाः शैलांस्). K2 शैलस्; K4 शैलास् (for शैलांस्). K6 V1 Bo. 6–9 Da3 a4 Dn1. n4 Ds D2 3. 8 पाषंडान्विविधान(K6 °न्य)पि.

21 T1 G6 om 21 (cf. v. l 16). — a) K7 D9 शिलाश्छायास्; G1 °स्थायास् (for °छायास्). — b) K4. 6. 7 V1 B8 D2. 4. 5. 8 प्रश्रवणानि (for प्रस्र°). — After $21^{ab}$, K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3 5. 7. 8 ins.:

755* पुलिनानि विविक्तानि विविक्तानि वनानि च ।
देवस्थानानि पुण्यानि विविक्तानि सरांसि च ।
विविक्ताश्चापि शैलानां गुहा गृहनिभोपमाः ।

[ Ds2 om. lines 1–2. — (L. 1) D5. 7 विचित्राणि (for the first विविक्तानि). B8 om. (hapl.) the second विविक्तानि. — (L. 3) B8 (marg.) विविधाश्चैव (for °क्ताश्चापि). K6 Da4 गृहा (for गुहा). ❀ Cn: गृहेषु ये निभाः, नितरां भान्ति ते, दिव्यगृहोपमा इत्यर्थः । ❀ ]

— V1 reads $21^{cd}$ on marg. — c) Da3. a4 Dn1. n4 Ds D2. 3. 8 M1. 5. 6 विविक्तानि (for °धानि). — d) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 G2 व्रतानि विविधानि (by transp.).

22 T1 G6 om. 22 (cf. v. l. 16). — a) K6 V1 B6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 विविधांश्चापि; K1 D4. 5. 7. 9 च विचित्रांश्च; Bo विषयांश्चापि; B8 (marg.) विविधांश्चैव (for सुविचित्रांश्च). — b) V1 तपांसि विविधान्यपि. — c) T2 यज्ञांश्च विविधान्कृत्स्नांश्; G1 यज्ञाश्च विविधाकाराश्. — d) K1 Ds1 विधीश्च; T2 G1. 3 चिकीर्षन् (for विधींश्च). Da4 D4 M7 त्रिविधास्. B6 (marg. as in text) अपि (for तथा). V1 B8 विविधाश्च विधींस्तथा.

23 T1 G6 om. 23 (cf. v. l. 16). — a) K6. 7 Bo. 7–9 M1. 5. 6 द्विजक्षेत्रं; Da3 Dn1. n4 D5. 7 द्विजं क्षत्रं; T2 G2 द्विजक्षत्र- (for °क्षत्रं). — b) K7 D4. 9 वैश्यशूद्रौ; Dn1. n4 G2 °शूद्रांस्; Ds D2. 3. 8 °शूद्रास्; D5. 7 T2 G1. 3 M5 वैश्यं शूद्रं. — c) K2 Da4 G1 विविधाकारां (G1 °रान्). — d) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 -कृपणादिषु; T2 G2 °णेषु च (for °णेष्वपि).

24 T1 G6 om. $24^{abcd}$ (cf. v. l. 16). — a) K1. 7 अभिमन्यभ्य(K7 °त)संबोधात्; Da4 °त संरोधात्. — b) Bo तत्र (for तथा). D7 त्रिगुणान् (for त्रिविधान्). — d) K7 D4. 9 M5 काममेव (for काम एव). — T G1. 3. 6 read $24^{ef}$ after 26. — e) K1. 2. 4 प्रकृत्यात्मैव चात्मानं; G2 °त्मान एवात्मा. — f) D5. 7 G2 प्रविभजंत्युत.

25 a) K1. 2 V1 स्वाहाकार- (for स्वधा°). K1. 2 -वषट्कार-; D4 °कारः; T G1. 3. 6 °कारान् (for °कारौ). — b) K1. 2 स्वधाकार-; T G1. 3. 6 स्वाहाकारान् (for °कार-). K6. 7 V1 Bo Dn4 Ds2 D2. 3. 5. 8 G3 -नमस्क्रिया; B6. 7. 9 Da3. a4 °स्क्रिये; D7 °स्कृतान्; T1 G1. 6 °स्क्रियां

याजनाध्यापनं दानं तथैवाहुः प्रतिग्रहम् ।
यजनाध्ययने चैव यच्चान्यदपि किंचन ॥ २५
जन्ममृत्युविवादे च तथा विशसनेऽपि च ।
शुभाशुभमयं सर्वमेतदाहुः क्रियापथम् ॥ २६
प्रकृतिः कुरुते देवी महाप्रलयमेव च ।
दिवसान्ते गुणानेतानभ्येत्यैकोवतिष्ठति ॥ २७
रश्मिजालमिवादित्यस्तत्कालेन नियच्छति ।
एवमेषोऽसकृत्सर्वं क्रीडार्थमभिमन्यते ॥ २८
आत्मरूपगुणानेतान्विविधान्हृदयप्रियान् ।
एवमेव विकुर्वाणः सर्गप्रलयकर्मणी ॥ २९
क्रियाक्रियापथे रक्तस्त्रिगुणस्त्रिगुणातिगः ।
क्रियाक्रियापथोपेतस्तथा तदिति मन्यते ॥ ३० C. 12. 11296 B. 12. 304[3]. 34 K. 12. 309. 34

(for °श्क्रियाः). — c) D4 om. from याजना up to मृत्यु (in 26a). K1.2.4 G2 M7 या(K2 य)जनाध्यापने; K6 B6.7 Da3.a4 य(K6 या)जनाध्ययने; V1 T G3.6 यजनाध्ययनं; D5.7 G1 यजनाध्यापनं. — d) T2 G6 [अ]हूं-; G1 हि (for [आ]हुः). Da4 प्रदक्षिणं (for प्रतिग्रहम्). — M1.5–7 read 25ef for the first time after 13. — e) K1.6 Da3 Ds2 D5.7 याजनाध्ययने; V1 B6.7 Dn1 T G1.3.6 M1.5–7 (last four first time) या(Dn1 G1 य)जनाध्यापने. —25f–26b is damaged in B7. — f) K1.2 तथा (for यच्च). K6 किंच नः. G1 यच्चादपि कथंचन (sic); M1.5–7 (all first time) यच्चान्यदुपजीवति.

26 D4 om. up to मृत्यु (cf v l 25). 26ab is damaged in B7. T G1.3.6 transp. 26ab and 26cd. — a) B6.8 (marg.) Da3.a4 -विवादौ; D5.7 G2 M1.5–7 -विवाहे (for -विवादे). — b) ❀ Cn: विशसने, संग्रामे । ❀ — c) G1 शुभाशुभमिदं; M1.5–7 °मतं (for °मयं). K1 सर्वे (for सर्वम्). — d) K1.2 एतम् (for एतद्). T G1.3.6 क्रियाफलं (for °पथम्). — After 26, T G1.3.6 read 24ef.

27 a) T G1–3.6 प्रकृतौ (G2 °तिं). K4 corrupt; D5.7.9 दैवी; T1 G6 देहे; T2 G3 देहो; G1 देवो (for देवी). — b) K6.7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds1 D2.3.8 भवं; Ds2 D5.7 भयं; T G1.3.6 महत् (for महा-). D4.9 -प्रलय (for -प्रलयम्). — d) K1 corrupt; K2 अध्येत्यैकेव तिष्ठति; K6 B9 D5.7 अभ्येत्येकोवतिष्ठते; K7 °त्येकैवतिष्ठते; Ds2 °त्यैको न तिष्ठते; D4.9 अभ्यत्यैके(D9 °भ्येत्यैकै)वतिष्ठति; T G1.3.6 M7 आवृत्येको(G3.6 °त्यैको-; M7 °त्यैका)वतिष्ठते (M7 °ति); G2 अभ्येत्येकावतिष्ठते; M1.5.6 °त्यैकावतिष्ठति.

28 B7 om. (? hapl.) 28ab. — b) K6 त*त्काले; V1 B0.6.8.9 Da3.a4 Dn1.n4 Ds D2.3.8 G3 M1.5–7 तत्तत्काले (for तत्कालेन). — Da3 om. 28cd. — c) K6 G3 एषा; T1 G1.3.6 M1.5–7 एव (for एषो). K4 B8 Dn1.n4 Ds D2.3.8 पूर्वं; K7 D4.5.7.9 कृत्स्नं; G1 सर्वान् (for सर्वं). — d) T2 G2 M1.5–7 क्रियार्थम् (for क्रीडार्थम्). K7 D4.9 अभिगम्यते; Dn1 इति मन्यते (for अभिम°).

29 a) K6 T2 M7 आत्मा रूप-; Da3 दिवसांते (for आत्मरूप-). — c) G3 एष (for एवम्). K1.2 एते; K4.6 V1 B6–9 Da3.a4 Dn1.n4 Ds D2.3.8 एतां; K7 B0 D4.9 T G1.6 एषो; D5.7 एतैर् (for एव). K1.2.4 Ds1 विकुर्वाणाः; V1 B6.8 °र्वाणां; B7 (marg.) °र्वाणान्. — d) B9 सर्गः (for सर्ग-). K4 -कर्पणे; K6 V1 B0.6–9 Dn1 D3 (before corr.) -धर्मिणीं; Dn4 Ds D2.3 (by corr.).8 -धर्मिणां (Dn4 °णो; D8 °णः); Da3.a4 D5.7 -कर्मणा; T G1.3.6 M5–7 °णि (for °णी).

30 G2 reads 30ab twice. — a) K6 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 क्रियां क्रिया- (for क्रियाक्रिया-). G2 (first time) -फले; G2 (second time) -पथो (for -पथे). K2.4 सक्तस्; K6 B6.7 Da3.a4 रक्तां; B6 (marg.) रक्तं; Dn4 कर्मं; G2 (second time) [उ]पेतस्; M5 युक्तस् (for रक्तस्). — b) K2 Ds1 D2 G2 (first time) त्रिगुणास्; K6 V1 B7.8 Da3.a4 Ds2 D8 °णांस्; Dn1 °णां (for °णस्). K6 V1 B0.6–9 Da3 Dn1.n4 Ds D2.3.5.7.8 त्रिगुणाधिपः (B9 °प); Da4 °धिकाः; T1 G1.3.6 °धिकः; T2 °गतिः (for °तिगः). — c) K4.6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 क्रियां (for the first क्रिया-). K1.2.4 -पथोपेतं; K6 -पंथोपेतस् (for -पथोपेतस्). — d) K2 [अ]मन्यते. T G3.6 तदा तमभिमन्यते; G1.2 M7 तदा (M7 °था) तदभि°. — After 30, K1.2.4.6.7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2–5.7–9 editions ins.:

756* प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो ।
रजसा तमसा चैव व्याप्तं सर्वमनेकधा ।

[(L. 1) K1.2.4 [ए]तज् (for [इ]दं). K1 अन्वीकृतं; D8 वंची° (for अन्धी°). K6 D5.7 प्रभो; B7 विभोः (for विभो). — (L. 2) K6 प्राप्तं (for व्याप्तं). K2 अनेकदा (for °कधा).]

C.12.11297
B 12.204[3].26
K.12.309 36

एवं द्वंद्वान्यथैतानि वर्तन्ते मम नित्यशः ।
ममैवैतानि जायन्ते बाधन्ते तानि मामिति ॥ ३१
निस्तर्तव्यान्यथैतानि सर्वाणीति नराधिप ।
मन्यतेऽयं ह्यबुद्धित्वात्तथैव सुकृतान्यपि ॥ ३२
भोक्तव्यानि मयैतानि देवलोकगतेन वै ।
इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयम् ॥ ३३
सुखमेव च कर्तव्यं सकृत्कृत्वा सुखं मम ।
यावदन्तं च मे सौख्यं जात्यां जात्यां भविष्यति ॥ ३४
भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकम् ।
महद्दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥ ३५
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः ।
मनुष्यत्वाच्च देवत्वं देवत्वात्पौरुषं पुनः ।
मनुष्यत्वाच्च निरयं पर्यायेणोपगच्छति ॥ ३६
य एवं वेत्ति वै नित्यं निरात्मात्मगुणैर्वृतः ।

---

31 a) T1 G1–3.6 M1.5–7 मम; T2 मह (for एवं). K6 B6.7.8 (marg.) 9 Da4 D5.7 अतीतानि (for अथै°). — G1 om (hapl.) $31^{b}$–$32^{a}$. — b) T1 G3.6 वर्तते. T G3.6 M1.5.6 मयि (for मम). K6 B6 D5.7 G2 समं (G2 मम) वर्तंति नित्यशः; V1 Bo 7–9 Da3 a4 Dn1. n4 Ds D2.3.8 समा(V1 B9 °म)वर्तंति नि°. — T G3.6 om. $31^{cd}$. — c) K1 समेवैतानि; K2.6 B8 ममैव तानि; K7 समैवैतानि; D4 मम वै तानि; D5.7 ममैतानि च; D9 मम चैतानि (for ममैवैतानि). V1 om. from यन्ते up to सेवनात् (in 12. 293. $11^{d}$). K6 जायंत; K7 D4 जायते (for जायन्ते). — d) K1 7 B9 Dn1. n4 Ds D2.3.8.9 धावंते; B7 वायंते (sic); Da3 lacuna; G2 बाधान्ये (sic) (for बाधन्ते). K1.2.4.7 अपि (for इति). K6 D4 9 धावत्येतानि मामपि (K6 °मिति).

32 V1 om. 32; G1 om. $32^{a}$ (for both, cf. v. l. 31). — a) K1 निस्तीर्तव्यानि; Da3. a4 निव°; G3 निवर्तवानि (for निस्तर्तव्यानि). T2 [अ]धीतानि (for [अ]थै°). K2.4 विस्तीर्णवान्यथैतानि. — b) G3 सर्वाणि च (for °णीति). — c) K6 Ds1 मन्यंते; B6 (marg.) D7 T G1–3.6 M1.5–7 मन्यति. Instead of ह्यबुद्धित्वात्तथैव सु, Dn4 reads $34^{a}$, repeating the same in its proper place. K7 B5.7 Da3. a4 Dn1 Ds2 D2–5.8.9 M1.5–7 ह्य(K7 D4.5.9 अ)बुद्धत्वात्.

33 V1 om. 33 (cf. v. l. 31). — a) Dn4 **व्यानि; D7 गोप्तव्यानि (for भोक्त°). K6 तथैतानि (for मयै°). — c) D7 G3 चैव; G2 चैतद्; M5 चैवं (for चैनं). — d) D5 -फलोदये.

34 V1 om. 34 (cf. v. l. 31). For the first occurrence of $34^{a}$ in Dn4, cf. v. l. 32. — a) D7 T G1.3.6 M1.5–7 पुण्यम् (for सुखम्). Ds1 D2 एवं (for एव). K6 Bo 6.7.9 Da3. a4 Dn1. n4 (both times) Ds D3.8.8 G2 तु (for च). — b) B8 (orig.) महत्कृत्वा; B8 (marg.) सुकृ°; D7 यत्कृत्वा च; T G1.3.6 तत्कृत्वा सु-; M1.5–7 तत्कृत्वा च (for सकृत्कृत्वा). D5 समं (for मम). G2 नाकृत्वा सुखमेधते. — After $34^{ab}$, K7 D4.9 ins :

757* सुखार्थी च त्यजेदु खं सुखदुःखविपर्ययम् ।

[ K7 त्यज्यते (for च त्यजेद्). ]

— c) D9 यच्चेद् (for यावद्-). K4 -अंते च; K7 D4.9 -अंतस्य; Ds1 -दत्तं च; T1 G1.3.6 दानस्य; T2 आर्तस्य (for -अन्तं च). K1.2.4 वै (for मे). — d) K2 जात्या जात्यं; Da4 जात्यां **; T1 G1.6 जात्यां (G1 °त्या) मम (for जात्यां जात्यां).

35 V1 om. 35 (cf. v. l. 31). — a) K7 Bo.6.8 (marg) Da3. a4 D5 न (for च). D5 दुःखे (for दुःखं). — b) K1.2.4 G1 [अ]नंतरं (for [अ]नन्तकम्). D5 कृते मे वाप्यनंतकं. — c) K6 Bo.6.7 Da3. a4 Ds2 D5 सुखदुःखे (Ds2 °खं); B8 (marg.) सुखे दुःखे; G2 M1.5–7 मम दुःखं (for महद्दुःखं). B8 (marg. as in text) G2.3 च (for हि). G2 मनुष्यं; M1.5–7 मानुष्ये. — K1 om. $35^{d}$–$36^{c}$. Ds2 om. (hapl.) $35^{d}$–$36^{a}$.

36 V1 om. 36 (cf. v. l. 31). K1 om. $36^{abc}$; Ds2 om. $36^{a}$ (for both, cf. v. l. 35). — a) K2.4 निरयः (for °याच्). — b) K2.4 कालेनेहामि (sic); B7 D3.7 T G2.6 काले नेष्यामि; G1 कालयेष्यामि (sic); G3 काले नेच्छामि (for कालेनैष्यामि). — c) K2 D7 T G1.3 मानुष्य(G1 °ष)त्वाच्. — K7 D4.9 om. $36^{de}$. — d) K1 M7 देवतात् (for °त्वात्). D8 मानुषं (for पौरुषं). — e) K1.2.4 G3 मानुष्यत्वाच् (K1 °श्च); D5.7 T G1.6 मानुषत्वाच्. — f) K2 परयेन (sic); K6 पर्यायेन; Da4 पर्ययेण (for पर्या°). K7 D4.9 [ए]व गच्छति; D5 [अ]भिग° (for [उ]पग°). — After 36, K7. D4.9 ins. :

758* एवं पर्यायशो दुःखं पुनरेष्याम्यहं सुखम् ।

37 V1 om. 37 (cf. v. l. 31). — a) K1.4 T1

तेन देवमनुष्येषु निरये चोपपद्यते ॥ ३७
ममत्वेनावृतो नित्यं तत्रैव परिवर्तते ।
सर्गकोटिसहस्राणि मरणान्तासु मूर्तिषु ॥ ३८
य एवं कुरुते कर्म शुभाशुभफलात्मकम् ।
स एव फलमश्नाति त्रिषु लोकेषु मूर्तिमान् ॥ ३९
प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥ ४०
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ।
त्रीणि स्थानानि चैतानि जानीयात्प्राकृतानि ह ॥ ४१
अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे ।
तथैव पौरुषं लिङ्गमनुमानाद्धि पश्यति ॥ ४२
स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ।
व्रणद्वाराण्यधिष्ठाय कर्माण्यात्मनि मन्यते ॥ ४३
श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाणि च ।
वागादीनि प्रवर्तन्ते गुणेष्वेव गुणैः सह ।
अहमेतानि वै कुर्वन्ममैतानीन्द्रियाणि च ॥ ४४ C. 12. 11312 B. 12. 304[3] 50 K. 12. 309. 50

---

G1. 6 यदेवं; K2 ये देवं; K7 य एनं; D7 यदैव; T2 G3 यदेव ( for य एवं ). K6 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3 8 G2 नित्यं वै ( by transp. ). — $^{b}$) G1 नरात्मा ( for निरात्मा ). G2 न गुणैर्; C4 ( gloss : रजःप्रभृत्यात्मोपघायकैः ) Cn ( gloss : चेतनत्वमत्यस्त्वसुखत्वैः ) [आ]त्मगुणैर् ( as in text ). D7 T1 G6 M7 वृतं ( for वृतः ). ❀ Cn : निरात्मा, निःस्वरूपश्चिदाभासविशिष्टो देहेन्द्रियादिसंघातः ॥ Cs : निर्गतः आत्मा नियामको यस्य स निरात्मा । ❀ — $^{c}$) D5 न च ( for तेन ). — $^{d}$) K7 D2. 4. 9 निरयं ( for निरये ). K7 D4. 9 न; Ds1 वा ( for च ).

38 V1 om. 38 ( cf. v. l. 31 ). — $^{a}$) K1 Da3 a4 ममत्वं न ( for °त्वेन ). — $^{b}$) D5 तत्रैव प्रतिपद्यते. — $^{c}$) K1. 2 4. 7 D4. 9 सर्गकोटी°. K6 om. टिसहस्राणि. — $^{d}$) K1 मरणार्तासु; K6 रमणांतासु ( for मरणान्तासु ). T G1. 3 6 M1. 5–7 योनिषु ( for मूर्तिषु ).

39 V1 om, 39 ( cf. v. l. 31 ). — $^{a}$) K1. 2 एव ( for एवं ). — $^{b}$) D5 -फलात्मिकं. — D7 om ( hapl. ) $39^{c}$–$40^{b}$. — $^{c}$) B7 Dn1. n4 Ds D2. 3. 8 T1 M1. 6 7 एवं ( for एव ). K7 आश्रित्य; Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 आप्नोति ( for अश्नाति ). — $^{d}$) G3 om. ( hapl. ) लोकेषु. D5 om. ( hapl. ) from मूर्ति up to लोकेषु in ( $40^{d}$ ).

40 V1 om. 40 ( cf. v. l. 31 ). D5 om. up to मूर्ति; D7 om. $40^{ab}$ ( for both, cf. v. l. 39 ). K1 T2 om ( hapl. ) $40^{ab}$. — $^{a}$) K2. 4 प्रकृतेः ( for प्रकृतिः ). Da4 पुरुषे; Ds क्रियते ( for कुरुते ). G1 धर्मं ( for कर्म ). — $^{b}$) K2. 4 -फलोदयं ( for फलात्मकम् ). — $^{c}$) K7 स प्रकृतिश्च ( hypermetric ). G1 तदाश्नाति; M1. 5–7 तथा° ( for तद° ). — $^{d}$) K1 मूर्तिमान्; D2 7 8 G3 कामगं ( D7 °गः ); G1 कामगां ( for कामगा ).

41 $41^{ab}$ = 12. 293. $2^{cd}$. V1 om. 41 ( cf. v. l. 31 ). — $^{a}$) K6 B0 6. 7 Da3 a4 Dn1 n4 Ds D2 3. 5. 8 G2 M1 5–7 -योनि-; K7 D4 -योनिर्; D9 -योनिं ( for -योनौ ). K4 Da3 Dn4 D2. 8 G2 -मनुष्यत्वं; Da4 -मनुष्येषु ( for मनुष्यत्वे ). — $^{c}$) G6 वा ( for च ). — $^{d}$) K1 प्रकृतानि; K2 प्रकृत्यानि ( for प्राकृतानि ). K1. 2 B3 हि; B9 D7 T2 G3. 6 च; D5 तु ( for ह ).

42 V1 om 42 ( cf. v. l. 31 ). G1 om $42^{a}$–$43^{b}$. — $^{a}$) G2 आलिंगं ( for अलिङ्गां ). K1 2. 4 B8 ( marg. as in text ) Ds1 प्राहुर्; Da4 T G2. 3. 6 M1 5–7 चाहुर् ( for त्वाहुर् ). D5. 7 अलिंगात्प्रकृतित्वात्तु. ❀ Cn : अलिङ्गां, नित्यानुमेयां, न तु वह्निवत्कदाचित्प्रत्यक्षाम् ॥ Cp : अलिङ्गां, व्यक्तधर्मरहिताम् ॥ Cs : प्रत्यक्षेण नोपलभामहे अत आह अलिङ्गामिति ॥ Cv : अलिङ्गां, अतीन्द्रियत्वात् दृश्यचिह्नरहिताम् । ❀ — $^{b}$) B9 अनुमिमीयते ( for °महे ). K7 D4. 5. 9 लिंगैरेवानुमीयते. — Da3 om. from $42^{c}$ up to the end of this adhy. — $^{c}$) K6 पुरुषं ( for पौरुषं ). ❀ Cv : पौरुषं, जीवसंबन्धि, अस्वातन्त्र्याख्यं लिङ्गम् । ❀ — $^{d}$) K6 B0 6. 7. 9 Da4 Dn1. n4 Ds D2. 3. 8 G2 M1. 5–7 मन्यते; D5 लक्ष्यते; D7 T G3. 6 गम्यते ( for पश्यति ).

43 V1 om. 43 ( cf. v. l. 31 ). Da3 om. 43; G1 om. $43^{ab}$ ( for both, cf. v. l 42 ). — $^{a}$) ❀ Cn : लिङ्गान्तरं, पुर्यष्टकम् । ❀ — $^{b}$) K2 G6 प्रकृतं; G2 प्रकृतिं ( for प्राकृतं ). K7 D4 9 M1 5–7 अव्रणः. — $^{c}$) K2 Ds T1 G3. 6 प्राणद्वाराणि ( for व्रण° ). K1 G1 व्रणद्वारान्यधिष्ठाय. — $^{d}$) K1. 2. 4. 6 B0. 6–9 Da4 Dn1. n4 Ds D2 5 8 G2 कर्मणात्मनि ( for कर्मण्या° ). D7 T G1 3. 6 M1. 5–7 पश्यति ( for मन्यते ).

44 V1 Da3 om 44 ( cf. v. l. 31, 42 ). — $^{a}$) K1. 2. 7 D4. 5 9 च ( for तु ). — $^{b}$) K6 B0. 6–9 Dn1. n4 Ds D2. 3. 8 G2 [अ]थ ( for च ). — D5 om. ( hapl. ) $44^{cdef}$. — $^{d}$) Da4 युगेषु ( for गुणेषु ). K1. 2 M1. 5–7

C. 12. 11313 B. 12. 304[3]. 50 K. 12. 309. 50

निरिन्द्रियोऽभिमन्येत व्रणवानस्मि निर्व्रणः ।
अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः ॥ ४५

असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः ।
अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः ॥ ४६

अक्षेत्रः क्षेत्रमात्मानमसर्गः सर्गमात्मनः ।
अतपास्तप आत्मानमगतिर्गतिमात्मनः ॥ ४७

अभवो भवमात्मानमभयो भयमात्मनः ।
अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते ॥ ४८

इति श्रीमहाभारते शान्तिपर्वणि द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

---

[अ]थ; K6 Bo 6–9 Da4 Dn4 D2 3 8 [इ]ह; Dn1 [इ]व (for [ए]व). — $^{e}$) K2. 4 अप्रमेतानि (sic) (for अद्व°). K7 D4. 9 कुर्वं; Dn1. n4 Ds D2. 3. 8 सर्वं; M1. 7 कर्मं; M5. 6 कुर्मि (for कुर्वन्). — $^{f}$) K4 समेतानि; Dn1. n4 Ds2 D2. 3 8 मत्ये°; Ds1 मयैतान् (for ममैतानि). K6. 7 B6 8 (marg. as in text) Dn1. n4 Ds D2–4. 8. 9 T2 ह; B7 [अ]पि; M1. 5–7 तु (for च).

45 V1 Da3 om. 45 (cf. v. l. 31, 42). — $^{a}$) K4 निरंद्रियो. K6 [ऽ]स्मि मन्येत; K7 Bo. 6–9 Da4 Dn1. n4 Ds D2–5. 8. 9 हि मन्येत (for ऽभिम°). — $^{b}$) Ds1 ब्रह्मणवान् (hypermetric); G2 प्राणवान् (for व्रण°). K1 निव्रणः; Ds2 नव्रणः; G2 निर्घृणः (for निर्व्रणः). — $^{c}$) ❀ Cn: अलिङ्गः, लिङ्गादन्यः । ❀ — G2 om. (hapl.) $45^{d}$–$48^{c}$. — $^{d}$) T1 अकालं (for अकालः). K7 B8 (marg. as in text) D4. 9 अगतिर्गतिमात्मनः; D5 अबुद्धिर्ह्योभिमन्यते.

46 V1 Da3 G2 om. 46 (cf. v. l. 31, 42, 45). K1 G1 om. (hapl.) $46^{a}$–$48^{b}$. — $^{a}$) B7–9 Da4 T1 (by corr.). 2 G3 6 M1 असत्त्वः; T1 (before corr.) अतत्त्वस् (for असत्त्वं). T1 (before corr.) तत्त्वम् (for सत्त्वम्). K2 असत्त्वासत्त्वमात्मानम्; D5 अतस्त्वास्तत्त्व°; D7 अभवो भव आत्मानम्. — Ds1 reads $46^{b}$–$47^{a}$ twice. — $^{b}$) K6 B6. 9 Da4 T G3. 6 अतत्त्वस्; M1. 5–7 °थ्यस् (for अतत्त्वं). M7 तथ्यम् (for तत्त्वम्). K2 असर्गः सर्गमात्मनः; K7 B8 D4. 7. 9 अभयोभय°; D5 अमृत्यु ** मात्मनः. — K2. 4 D5 om. (hapl.) $46^{c}$–$47^{b}$. B6 om. (hapl.) $46^{cd}$. — $^{c}$) K6 मृत्युर् (for मृत्युम्). — $^{d}$) Da4 आत्मानश्चरमात्मनः; D7 T G3. 6 M1. 5–7 Cs (gloss: तमः, ग्लानिम्) अतम(Cs °मा)स्तम आत्मनः.

47 For the repetition in Ds1, cf. v. l. 46. V1 Da3 G2 om. 47 (cf. v. l. 31, 42, 45). K1 G1 om. 47 (cf. v. l. 46). K2. 4 D5 om. $47^{ab}$ (cf. v. l. 46). — $^{a}$) D4 अक्षत्रं; D9 अक्षेत्रं (for अक्षेत्रः). — $^{b}$) D9 असर्गं (for असर्गः). — $^{c}$) K7 D4. 7. 9 अतपस् (for °पास्). K7 Bo तपम् (for तप). D5 अतत्त्वास्तत्त्वमात्मानम्. — $^{d}$) K2 अत्रयोत्रयमात्मनः; K7 D4 9 अकालः काल°; D5 अतपास्तपमात्मनः; T2 अमतिर्मति°.

48 V1 Da3 om. 48 (cf. v. l. 31, 42). K1 G1 om. $48^{ab}$ (cf. v. l. 46). G2 om. $48^{abc}$ (cf. v. l. 45). K2. 4. 7 D7. 9 om. (hapl.) $48^{ab}$. — $^{a}$) K6 अभावा; D4 T1 G6 अभावो (for अभवो). T1 G6 भावम् (for भवम्). Da4 आत्मानः (for °नम्). D6 अकालः कालमात्मानम्. — $^{b}$) B8 (marg. as in text) D4 अतत्त्वस्तत्त्वमात्मनः. — After $48^{ab}$, D7 T G1. 3. 6 M1. 5. 7 Kumbh. ed. (G1, after $45^{cd}$) ins.:

759* अकर्ता कर्तृ चात्मानमबीजो बीजमात्मनः ।

[D7 कर्तृतात्मानम्; M1. 5. 7 चैव कर्तृत्वम् (for कर्तृ चात्मानम्). D7 बीज आत्मनः (for बीजमा°). T1 बीजो बीजमिवात्मनः (for the post. half).]

— $^{c}$) B7 अक्षर· (for अक्षरः). Da4 आत्मानः. D5 अतत्त्वस्तत्त्वमात्मानम्; G1 अरक्षः रक्ष°. — $^{d}$) K1. 2. 4 अभिमन्यते (for त्वभि°). D5 अक्षरं क्षरमात्मनः; D7 अबुद्धिं स्वभिमन्यते; M1. 5–7 अबुद्धास्त्विति म°.

Colophon om. in V1 Da3.; Ś1 D6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan*: K1. 2. 4. 6. 7 Bo. 6–9 Da4 Dn1. n4 Ds D2. 4. 5. 7 8 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name*: K1 D8 करालजनकसंवादः; K2. 4. 6 B6–9 Da4 Dn1. n4 Ds2 वसिष्ठकरालजनकसंवादः; K7 D4. 9 करालजनकवसिष्ठ- (D4 om. वसिष्ठ)संवादे अनित्यतोपदेशः; Bo D2. 8 G2 वसिष्ठकरालसंवादः; Ds1 वसिष्ठकरालणां (sic); D5. 7 वसिष्ठकरालजनकसंवादे अनित्यतोपदेशः; T1 बुद्धिलक्षणं; G1. 6 करालजनकवसिष्ठसंवादे बुद्धिलक्षणं; M5. 6 वसिष्ठजनकसंवादे देहाभिगमनं. — *Adhy. no.* (figures, words or both): B7 M1. 6. 7 126; B8 130; Dn1 129; Dn4 Ds2 G3 M5 128; Ds1 117; D8 124; T1 G1. 6 127; T2 140; G2 143. — *Śloka no.*: Da4 Dn1 D8 54; Dn4 56.

# २९३

वसिष्ठ उवाच ।
एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ।
सर्गकोटिसहस्राणि पतनान्तानि गच्छति ॥ १
धाम्ना धामसहस्राणि मरणान्तानि गच्छति ।
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ॥ २
चन्द्रमा इव कोशानां पुनस्तत्र सहस्रशः ।
लीयतेऽप्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान् ॥ ३
कलाः पञ्चदशा योनिस्तद्धाम इति पठ्यते ।
नित्यमेतद्विजानीहि सोमः षोडशमी कला ॥ ४
कलायां जायतेऽजस्रं पुनः पुनरबुद्धिमान् ।
धाम तस्योपयुञ्जन्ति भूय एव तु जायते ॥ ५
षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् । C. 12. 11312 B. 12. 305[4]. 6 K. 12. 310. 6

## 293

☞ This adhy. is missing in Ś1 D6 (cf. v. l. 12. 274. 13; 283. 15).

1 V1 om. up to सेवनात् (in $11^{d}$) (cf. v. l. 12. 292. 31). Ds1 om. the ref. K6. 7 B7. 9 D4 वशिष्ठ (for वसिष्ठ). —$^{a}$) Da4 -बहुत्वाद्; G1 -बुद्धित्वाद् (for -बुद्धत्वाद्). —$^{b}$) D7 अबुद्धिर्; G1 अबुद्धि- (for अबुद्ध-). — Da4 reads $1^{st}$ twice. —$^{c}$) K1. 2 4. 7 B8. 9 D4. 5. 9 सर्गकोटी- (for °कोटि-). —$^{d}$) T G1. 3. 6 मरणांतानि गच्छति.

2 V1 om. 2 (cf. v. l. 1). K7 D9 om. (hapl.) $2^{ab}$. —$^{a}$) K2 corrupt; K6 Bo. 6. 8. 9 Da3. a4 Dn4 Ca. p (gloss : धामभ्य इत्यर्थे) धाम्नां; Ds D7 T G1–3. 6 M1. 5–7 Cs धाम्नो; Cn (gloss : षोडशी कलेति श्रुतिप्रसिद्धया प्रकाशरूपया चित्कलया) धाम्ना (as in text). K6 धामः; T2 धाम्नः (for धाम-). ❀ Cs : °धामशब्देन गुह्यस्थानीयं शरीरमुच्यते ॥ Cv : धाम्ना, एकैकदेहेन । धाम, धामत्वेन मन्यमानं कलापञ्चदशकम् । ❀ —$^{b}$) ❀ Ca : मरणान्तानि, न मोक्षफलानि । ❀ — $2^{cd}$ = 12. 292. $41^{ab}$. —$^{c}$) K6. 7 Da3. a4 Dn1. n4 Ds D2. 8 G2 M1. 5–7 तिर्यग्योनि- (for °योनौ).

3 V1 om. 3 (cf. v. l. 1). —$^{a}$) K2 शोकानां; K6 Bo. 6. 8 कोषाणां; K7 D4. 5. 9 G3 कोशेषु; Dn1. n4 Ds D2. 3. 8 M5 Cv (also) भूतानां; Cv (gloss : दिने दिने जातानाम्) हुतानां (for कोशानां). —$^{b}$) G1 पुरस् (for पुनस्). —$^{c}$) K7 Bo Da3 Dn4 D3 नीयते (for लीयते). Da3 om. from ऽप्रतिबुद्धत्वाद् up to ह्यबुद्धिमान् (in $3^{d}$). ❀ Cv : अप्रतिबुद्धत्वात्, नश्वरपञ्चदशकला मदीया नेति बोधरहितत्वात् । ❀ —$^{d}$) D4. 9 एवमेव; D7 G3 एष एव (for एवमेष). D5 देवाद्देवाच्च बुद्धिमान्; G2 एवं मानुष्यबुद्धिमान् (sic).

4 V1 om. 4 (cf. v. l. 1). D4 om. (hapl.) $4^{a}$–$5^{b}$. —$^{a}$) K1. 2. 4 G1 कालाः; Cs (gloss : कलाशब्दो महाभूतज्ञानकर्मेन्द्रियवचनपरः) कलाः (as in text). K1 यामा; K2. 4 या वै (for योनिस्). K6. 7 D5. 9 कलाः पंचदशायामस्; Bo. 8 Dn1. n4 Ds D2. 3. 8 कला पंचदशी (Ds1 °शां) योनिस्; B6. 7. 9 Da3. a4 योनिः पंचदश कलास्. ❀ Cp : पञ्चदश कला आयामे विस्तारे यस्य । ❀ —$^{b}$) K1 शुद्धाम (for तद्धाम). K1 इति पश्य(*sup lin.* as in text)ते; K7 Ds D9 प्रतिपद्यते; Bo Da3 Dn1 n4 D2. 3 8 प्रतिबुध्यते; B7 इति पच्यते; B9 परिपठ्यते; Da4 परिपम्यते (sic); D5 परिपच्यते; D7 T G1. 3. 6 M1. 5–7 इति मन्यते (for इति पठ्यते). —$^{c}$) T G1. 6 एतं; G3 एवं (for एतद्). G2 विजातीभिः (for विजानीहि). —$^{d}$) M1. 6. 7 सोमं (for सोमः). K1. 2. 4 कलां; G2 कलाः (for कला). K6 Bo. 6–9 Da3 a4 Dn1. n4 Ds D2. 3. 5. 8 सोमं वै षोडशीं कलां; D7 T G1. 3. 6 सोमं षोडशमीं (D7 °मं) कलां. ❀ Cp : षोडशी कला, मूलप्रकृतिरूपा । ❀

5 V1 om. 5 (cf. v. l. 1). D4 om. $5^{ab}$ (cf. v. l. 4). —$^{a}$) B8 Ds1 D8. 9 T G1–3. 6 M1. 5–7 कलया; B9 Ds2 कलाया (for कलायां). K1. 2. 4 तस्यां; T G2. 3 6 जन्यः (for ऽजस्रं). —$^{b}$) M1. 5. 6 अवृद्धिमान् (for अबुद्धि°). —$^{c}$) B6 यस्य (for तस्य). K1. 2. 4. 6 -युंजानो; K7 D4. 9 -युंजीत; G1. 6 Cp -भुंजंति (for -युञ्जन्ति). T1 तामसस्योपभुंजंति. ❀ Cp : धाम, कोषं स्थूलदेहं च, उपभुञ्जन्ति, जनयन्ति । ❀ —$^{d}$) K1. 2. 4. 6 एव न; Bo. 7. 8 Dn1. n4 Ds D2. 3. 8 Cn एवोप- (for एव तु). G2 दिवौकसः (for तु जायते). M1. 7 पितृदेवगणाः पुनः. ❀ Cn : उपजायते, एकवचनमार्षम् । ❀

6 V1 om. 6 (cf. v. l. 1). —$^{a}$) Da4 षोडशीं (for °शी). B8 D9 T1 [इ]ति (for तु). K7 D4. 9 शूक्ष्मा; D7 शूक्ष्माः (for सूक्ष्मा). —$^{b}$) Da4 सोमम्; D9 सौम्य (for सोम). Dn4 -धार्यते; Ds1 -धार्यंती

C. 12. 11322 B. 12. 305[4]. 6 K. 12 310. 6 न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ॥ ६
एवं तां क्षपयित्वा हि जायते नृपसत्तम ।
सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते ॥ ७
तदेवं षोडशकलं देहमव्यक्तसंज्ञकम् ।
ममायमिति मन्वानस्तत्रैव परिवर्तते ॥ ८
पञ्चविंशस्तथैवात्मा तस्यैवा प्रतिबोधनात् ।
विमलस्य विशुद्धस्य शुद्धानिलनिषेवणात् ॥ ९
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ।
अबुद्धसेवनाच्चापि बुद्धोऽप्यबुधतां व्रजेत् ॥ १०
तथैवाप्रतिबुद्धोऽपि ज्ञेयो नृपतिसत्तम ।
प्रकृतेस्त्रिगुणायास्तु सेवनात्प्राकृतो भवेत् ॥ ११

कारालजनक उवाच ।

अक्षरक्षरयोरेष द्वयोः संबन्ध इष्यते ।
स्त्रीपुंसोर्वापि भगवन्संबन्धस्तद्वदुच्यते ॥ १२

---

(for -धार्यताम्). —[c]) K1 न भूप; K7 D4 ननूप- (for न तूप). D4 देवे; Cn s (gloss: इन्द्रियैः; देवैर् (as in text). ❀ Cp: प्रकृतिपक्षे, देवैरिन्द्रियैः । ❀ —[d]) K1. 2 सः; Da4 या (for सा). ❀ Cv: भक्षित कलारूपेण स्थितांस्तान्देवान् शुक्लपक्षे उपयुनक्ति । ❀

7 V1 om. 7 (cf. v. l. 1). —[a]) K1. 4 एवं सं-; B3 (marg. as in text) एवं तत्; D7 T1 G1. 3. 6 नैव तां (D7 तान्); T2 दैवतां (for एवं तां). K6 Da4 तु (for हि). K2 एवं संक्षेपयित्वा हि; K7 Dn1. n4 D2-4. 8. 9 एता( K7 D4. 9 °व )मक्षपयित्वा हि (K7 °त्वापि); Cnp (described as गौडपाठ) (as in text). —[b]) Dn4 जायंते (for जायते). B9 Ds2 नृपसत्तमः (for °त्तम). M1. 5-7 भूय एव न जायते. —[c]) Da4 त्वस्य; D7 G1. 6 तस्य (for ह्यस्य). K1 दृष्ट्वा; K6 B3. 9 Da3 Dn4 G6 दुष्टा; D9 दिष्टा (for दृष्टा). T1 समा हि यस्य प्रकृतिस्.

8 V1 om. 8 (cf. v. l. 1). —[a]) K6 Bo 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M1 6 तदेव; T2 तदेतं (for तदेवं). K2 B7 -कलां; T1 -कले (for -कलं). D5 तदेव वै षोडशकं; G6 तं देवं षोडशकले. —[b]) D5 देवम् (for देहम्). —[d]) D4 तत्रेव; D5 तथैव (for तत्रैव).

9 V1 om. 9 (cf. v. l. 1). —[a]) Bo. 6. 7. 8 (marg.) 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 महानात्मा (for तथैवात्मा). —[b]) K2. 4 B8 तथैव; D5 तत्रैव (for तस्यैव). B6 Ds D3. 7 T1 G1-3. 6 M1. 5-7 प्रतिबो( D7 T G1-3. 6 °सा )धनात् (for आ प्रति°). —[c]) D7 G1 इमं वक्ष्यसि (G1 °ति) शुद्धस्य. —[d]) K4 Bo. 6-9 Da3. a4 Dn1. n4 D2. 3. 5. 8 शुद्धाशुद्ध-; Ds D7 T G1-3. 6 M1. 5-7 शुद्धामल-. Some MSS. -निषेवनात्; D7 M1. 5-7 °वणं. ❀ Cp: शुद्धानिलनिषेवणात्, प्राणायामपरीपाकात् । ❀

10 V1 om. 10 (cf. v. l. 1). —[a]) M1. 5-7 विशुद्ध (for अशुद्ध). T1 इव (for एव). —[b]) K7 D4. 5. 9 पूरुषः; T1 G6 सत्तम (for पार्थिव). D7 G1 तादृक्पार्थिवसत्तम. —[c]) D7 T G1. 3. 6 M1. 5-7 चैव (for चापि). —[d]) K2 बुद्धेपि; K7 B8 D4. 9 G2 M1. 5-7 बुधोपि; Ds1 शुद्धोपि (for बुद्धोऽपि). K2 अबुध्यतां; K4 Bo Dn1. n4 Ds1 D3. 8 T G1 अबुद्धतां (for अबुधतां).

11 V1 om up to सेवनात् (cf. v. l. 1). —[a]) D7 G1 अथैव (for तथैव). T1 G3. 6 प्रतिबुद्धो (for [अ]प्रति°). ❀ Cn: अप्रतिबुद्धः, प्रतीपो बोधः प्रतिबोधः, तद्रहितो विपर्ययहीनः । ❀ —[b]) D5 भरत- (for नृपति-). G2 -सत्तमः (for -सत्तम). K6 Bo. 6-9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T2 G2 M1. 5-7 विज्ञेयो नृपसत्तम. —[c]) K6 प्रकृतिस्; D4 प्रकृत- (for प्रकृतेस्). —[d]) K2 प्रकृतो; K4 प्रकृतिर्; K6 Bo 6. 7. 8 (marg.). 9 Da4 Dn1. n4 Ds D2. 3 5. 8 G2 M1. 5-7 त्रिगुणो (for प्राकृतो). — After 11, K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D2. 3. 8 Ca n. p ins. an addl. colophon [ *Sub-parvan.:* K6 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 D2. 8 मोक्षधर्म. — *Adhy name:* V1 B6 D3 करालजनकसंवादः; Bo 7-9 Da3 a4 Dn1 n4 D2. 8 वसिष्ठकरालजनकसंवादः. — *Adhy no.* (figures, words or both): B7 127; B3 131; Dn1 130; Dn4 129; D8 125. — *Śloka no:* Da4 12; Dn1. n4 D3 11. ]

12 B8 om. the ref. K6. 7 V1 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2-5. 7-9 T G1. 3. 6 M1. 5-7 जनक (for करालजनक). —[a]) D7 T1 G1. 6 एव (for एष). —[b]) T G1. 3. 6 M1. 5-7 उच्यते (for इष्यते). — After 12[ab], D5 reads 14[ab] for the first time, repeating it in its proper place. —[c]) K7 D4. 9 चापि; G2 वाथ (for वापि). K1 Da4 G1. 3 भगवान् (for भगवन्). K2. 4 B8 T1 G2. 6 स्त्रीपुंसयोर्वा भगवन्. ❀ Cp: वाशब्द उपमायाम् । ❀ —[d]) Da3 संपन्नस् (for संबन्धस्). Da4 संपन्नस्तत उच्यते; G2 तयोः संबंध उच्यते.

ऋते न पुरुषेणेह स्त्री गर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो रूपं निर्वर्तयेत्तथा ॥ १३
अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात् ।
रूपं निर्वर्तयत्येतदेवं सर्वासु योनिषु ॥ १४
रत्यर्थमभिसंरोधादन्योन्यगुणसंश्रयात् ।
ऋतौ निर्वर्तते रूपं तद्वक्ष्यामि निदर्शनम् ॥ १५
ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा ।
अस्थि स्नायु च मज्जा च जानीमः पितृतो द्विज १६
त्वङ्मांसं शोणितं चैव मातृजान्यपि शुश्रुम ।
एवमेतद्द्विजश्रेष्ठ वेदशास्त्रेषु पठ्यते ॥ १७
प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।
वेदशास्त्रप्रमाणं च प्रमाणं तत्सनातनम् ॥ १८
एवमेवाभिसंबद्धौ नित्यं प्रकृतिपूरुषौ ।
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते ॥ १९
अथ वानन्तरकृतं किंचिदेव निदर्शनम् ।
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा ॥ २० C 12. 11337 B. 12. 306[5]. 9 K. 12. 3 0. 20

13 $^{a}$) $M_{1.5-7}$ याते (for ऋते). $B_8$ तु; $D_5$ हि (for न). $K_6$ $V_1$ $B_{0.6.7.9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_s$ $D_{2.3.8}$ ऋते तु पुरुषं नेह. — $^{b}$) $K_1$ धारयंस्युत; $G_2$ धारइष्यते (sic). — $^{c}$) $K_2$ पुरुषे; $B_8$ (marg) पुरुषाद् (for पुरुषो). — $^{d}$) $K_2$ निवर्तयेत्; $K_6$ $G_1$ निर्वर्तते (for निर्वर्तयेत्). $K_6$ तदा; $B_6$ $D_4$ यदा (for तथा).

14 $K_6$ $B_{0.6-9}$ $D_{n1.n4}$ $D_s$ $D_{2.3.8}$ repeat $14^{ab}$ after 18. $V_1$ om. $14^{a}$. $D_7$ repeats $14^{a}$. — $^{a}$) $K_7$ $D_{a3}$ $D_{5.7}$ (both times) T $G_{1.3.6}$ [अ]पि; $G_2$ $M_{1.5-7}$ [ए]व (for [अ]भि-). $K_6$ $B_{0.6-9}$ $D_{n1.n4}$ $D_s$ $D_{2.3.8}$ (all second time) अन्योन्यगुगसंरो($K_6$ °बो)-धाद्. —$V_1$ repeats $14^{b}$ after 18. — $^{b}$) $B_3$ (second time [marg. as in text]) -सेवनात् (for -संश्रयात्). $K_{1.2.4}$ अन्योन्यस्य गुणाश्रयात्. — $K_{1.2.4}$ $D_{s1}$ $M_6$ om. (hapl.) $14^{c}$–$15^{b}$. — $^{c}$) $K_6$ $B_9$ निर्वर्तयंति; $K_7$ $D_9$ $M_{1.7}$ निर्वर्तयेद्; $T_2$ निवर्तयति (for निर्वर्त°). $T_2$ एव (for एतद्). ❀ Cp: रूपं, आत्मनो रूपान्तरं पुत्राख्यम् । ❀

15 $K_{1.2.4}$ $D_{s1}$ $M_6$ om. $15^{ab}$ (cf. v. l. 14). — $^{a}$) $T_1$ $G_{3.6}$ स्त्रीपुंसोर्; $T_2$ स्त्रीपुंसाव् (for रत्यर्थम्). $K_6$ $V_1$ $B_{6.9}$ गत्यर्थगुणसंबोधाद्; $B_0$ गत्यर्थमभिसंबोधाद्; $D_{a3.a4}$ गत्यर्थं गुणसंरोधाद्; $D_7$ स्त्रीपुंसोरभिसंबंधाद्. — $^{c}$) $D_5$ $G_2$ ऋते (for ऋतौ). $D_{s2}$ $G_3$ निवर्त्यते; T $M_{1.7}$ निवर्तते (for निर्व°). $K_{1.2.4}$ $D_{4.9}$ $G_1$ ऋतेन वर्तते रूपं. — $^{d}$) $K_{1.2}$ प्रेक्ष्या($K_1$ °क्षा)मि (for वक्ष्यामि). $D_2$ निदर्शने; $D_7$ $T_1$ $G_{1.6}$ निदर्शनात्; $M_5$ निरंतरं (for निदर्शनम्).

16 $^{a}$) $D_5$ पुरुषस्यैव. — $^{b}$) $D_5$ मातुर् (for मातृ-). — $^{c}$) $V_1$ $B_{0.6.7.9}$ $D_{a3}$ $D_{n1.n4}$ $D_s$ $D_{2.5.7.8}$ स्नायुश्च (for स्नायु च). $K_7$ $D_{4.9}$ $G_3$ मज्जानं; $T_1$ मज्जादीन्; $T_2$ $G_1$ मज्जानां (for मज्जा च). — $^{d}$) $K_{1.2.6}$ जानीम; $D_{5.7}$ जानीयात्; $G_1$ जानीत (for जानीमः). $T_1$ $G_{3.6}$ पैतृकान्; $T_2$ $G_1$ पैतृका (for पितृतो). $K_{1.2.4}$ नृप; $B_7$ $D_{a4}$ द्विजाः; $D_{2.8}$ गुणाः; $G_8$ द्विजः (for द्विज).

17 $^{a}$) $K_6$ $V_1$ $B_{0.6.7.9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_s$ $D_{2.3.8}$ $M_{1.5-7}$ $G_2$ चेति (for चैव). — $^{b}$) $T_1$ मातृजान् (for °जानि). $K_{1.4.7}$ $D_{4.5.9}$ $G_2$ अनु- (for अपि). $D_{a4}$ $D_{s1}$ $D_{4.9}$ $G_{1.2}$ $M_{1.6}$ शुश्रुमः (for °म). — $^{d}$) $K_{1.2}$ $D_{s2}$ $G_1$ वेदशास्त्रे च; $D_{a4}$ $D_3$ वेदे शास्त्रेषु. $K_4$ $D_{n4}$ $D_{s1}$ $D_{5.7}$ T $G_{3.6}$ वेदे शास्त्रे च पठ्यते.

18 $B_7$ $D_{s1}$ read $18^{ab}$ after the second occurrence of $14^{ab}$. — $^{a}$) $K_1$ यश्च; $K_4$ $D_{n1.n4}$ $D_3$ यत्स्व-; $D_{a3.a4}$ यत्र (for यच्च). — $^{b}$) $K_{1.2}$ यश्च; $D_7$ $G_1$ ये च (for यच्च). — $^{c}$) $B_0$ $D_{n1.n4}$ $D_s$ $D_{2.3.8}$ -द्वयं चैव; $B_8$ -प्रमाणं यत्; $D_7$ T $G_{1.3.6}$ -प्रमाणानां (for -प्रमाणं च). Cp वेदशास्त्रं प्रमाणं च. — $^{d}$) $B_8$ यत् (for तत्). — After 18, $K_6$ $B_{0.6-9}$ $D_{n1.n4}$ $D_s$ $D_{2.3.8}$ repeat $14^{ab}$, while $V_1$ repeats $14^{b}$.

19 $^{a}$) $V_1$ is damaged from संबद्धौ up to पूरुषौ. $K_2$ $D_{a3.a4}$ -संबंधो; $K_6$ $T_2$ -संबंधौ; $D_5$ -संबद्धा. — $^{b}$) $K_6$ -पुरुषैः; $D_{a4}$ -पौरुषौ; $D_5$ -पौरुषं (for -पूरुषौ). — $^{c}$) $K_7$ $T_2$ भगवांस् (for भगवंस्). — $^{d}$) $K_1$ $V_1$ बुध्यते; $K_2$ वध्यते (for विद्यते). ❀ Cp: मोक्षधर्मः, मोक्षाय उपायानुष्ठानम् । ❀

20 $^{a}$) $D_{5.7}$ -कृतिं (for -कृतं). $K_6$ $B_{6.7.9}$ अथ वानंतरं कृत्यं. ❀ Cn: अनन्तरकृतं, साक्षात्कृतम् । ❀ — $^{b}$) $K_7$ $D_{4.9}$ किंचिदेतन् (for °देव). ❀ Cs: निदर्शनम्, निश्चयज्ञानम् । ❀ — $^{c}$) $B_7$ मया (for मम). — $^{d}$) $K_2$ प्रत्यक्षे (for प्रत्यक्षो). $K_7$ $B_{0.8}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_s$ $D_{2.3.5.7.8}$ T $G_2$ (*sup. lin.*)$_{.3.6}$ सर्वदा (for सर्वथा). ❀ Cp: प्रत्यक्षः, साक्षात्कारवान् । ❀

C.12.11337 B.12.306(5).10 K.12.310.21 मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ।
अदेहमजरं दिव्यमतीन्द्रियमनीश्वरम् ॥ २१

वसिष्ठ उवाच ।

यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम् ।
एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् ॥ २२
धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः ।
न तु ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर ॥ २३
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ २४
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥ २५
ग्रन्थस्यार्थं च पृष्टः संस्तादृशो वक्तुमर्हति ।
यथा तत्त्वाभिगमनादर्थं तस्य स विन्दति ॥ २६
यस्तु संसत्सु कथयेद्ग्रन्थार्थं स्थूलबुद्धिमान् ।
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥ २७
निर्णयं चापि छिद्रात्मा न तं वक्ष्यति तत्त्वतः ।

---

21 $^{a}$) Da4 वापि (for चापि). — $^{b}$) G2 M1. 5–7 कांक्षाम (for काङ्क्षामो). K1.4 यमसाधनं; K2 यमसावनं; K6 यमसादनं. — K2. 4 om. $21^{cd}$. — $^{c}$) D5 अमरं (for अजरं). V1 damaged from दिव्य up to end of $21^{d}$. K6 Bo. 6–9 Dn1. n4 D8 D2. 3. 8 G2 नित्यम्; D5 चैत्रम् (for दिव्यम्). — $^{d}$) K1 अनिंद्रियम्; G1 अवतीर्यम् (for अतीन्द्रियम्). ❀ Cv : अनीश्वरम्, ईश्वराद्भिन्नं मुक्तजीवम् । ❀

22 K1. 7 V1 B9 D4 वशिष्ठ; D5 वासिष्ठ (for वसिष्ठ). — $^{a}$) K2 भवतां (for भवता). D7 G1 एतदुक्तं भगवता. — $^{c}$) K1 यया (for यथा). K6 V1 D5 चैव; D4 वैतन् (for चैतन्). — $^{d}$) K1, 2, 4 Bo. 6. 8 Dn1. n4 Ds2 D2. 3. 7. 8 T2 G2 निगृह्णाति; K6 B7 Da8 गृह्णाति न (by transp.); K7 Ds1 निगृह्णामि. K6 B7 Da3 यथा (for तथा). Ds1 भवात् (for भवान्). D5 तथा चैव न तत्खलु.

23 $^{a}$) K2 ह (for हि). M1. 5–7 यथा (for त्वया). — $^{b}$) B8 (marg.) शास्त्रवेदयोः. — $^{c}$) K4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 न च; D4 मनु-; D5 नव- (for न तु). — $^{d}$) K2 Da3 G2 यथातत्त्वं; V1 यथा च त्वं; Dn4 यथा त्वं च; G1 यथा वक्तुं (for यथावत्त्वं). K1 नरेश्वरः; Da4 नरेश्वरं (for नरेश्वर). K6 यथावत्प्रतिपद्यते.

24 K6 om. 24. — $^{a}$) K1 Da4 वेद (for वेदे). Dn1 शास्त्रे ते (for शास्त्रे च). — $^{b}$) M7 -तत्परं (for -तत्परः). — B9 om. $24^{cd}$. $24^{c}$ is damaged in V1. — $^{c}$) Ds2 D4 नव- (for न च). M1. 5–7 ग्रंथस्य (for ग्रन्थार्थ-). — V1 reads $24^{d}$–$27^{d}$ on marg.

25 V1 reads 25 on marg. — $^{a}$) K6 भावं (for भारं). K1. 2. 4 आवहते (for स वहते). G2 यस्तु (for तस्य). — $^{b}$) K6 च (for न). — G2 om. (hapl.) $25^{c}$–$26^{d}$. — $^{c}$) B8 (marg. as in text) यत्तु (for यस्तु). — $^{d}$) M1 न चास्य (hypermetric) (for नास्य). K1. 2. 4 V1 B8 (marg. as in text) D7 T G1. 3. 6 ग्रंथगुणो; M1. 5–7 तद्धारणं (for ग्रन्थागमो).

26 G2 om. 26 (cf. v. l. 25). V1 reads 26 on marg. — $^{a}$) Da3 Dn1. n4 Ds1 D2. 3. 8 G1 [अ]र्थस्य (for [अ]र्थं च). K7 B5 (marg. as in text). 7. 9 Da3. a4 Dn4 D4. 9 पृष्टः स; G1 पृच्छंतस् (for पृष्टः संस्). D7 ग्रंथस्यास्य पृछंतस् (sic). — $^{b}$) B9 त्वादृशो; D5 तादृशं (for तादृशो). — $^{c}$) K7 तत्राभि- (for तत्त्वाभि-). Da4 -गमनाम् (for -गमनाद्). — $^{d}$) T2 M1. 5–7 न (for स).

27 V1 reads 27 on marg. — $^{a}$) K4. 6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2 3. 5. 8 न यः (for यस्तु). Da4 संयस्तु; Cn (gloss: विद्वत्सभासु) संसत्सु (as in text). — $^{b}$) K7 Bo. 8 D2. 8 T1 ग्रंथार्थ- (for ग्रन्थार्थं). D4. 9 -बुद्धिषु (for -बुद्धिमान्). — $^{c}$) K6 कथं स (by transp.). T1 मद- (for मन्द-). K1 -विज्ञातो (for -विज्ञानो). — $^{d}$) D7 G1 वक्ष्यामि (for वक्ष्यति). D4 om. (hapl.) from निर्णयात् up to वक्ष्यति (in $28^{b}$).

28 D4 om. up to वक्ष्यति (cf. v. l. 27). D5 om. $28^{ab}$. — $^{a}$) K2 निलयं; D7 T G1–3. 6 M1. 5–7 निर्णयाच् (for निर्णयं). G2 वा (for च). D7 G1 गच्छंति; T1 G3. 6 शुद्धात्मा (for छिद्रात्मा). K7 D9 छिद्रात्मा निर्णयं चा(D9 वा)पि. ❀ Cs : छिद्रात्मा, विकल्पबुद्धिः । ❀ — $^{b}$) K7 D9 कथं; M1. 5–7 न चेद् (for न तं). K1. 2. 4 M5. 7 (*inf. lin.* as in text) वक्ष्यामि; D8 पश्यति (for वक्ष्यति). — $^{c}$) K7 सोवाहसात्मतामेति; K2 सोहं वासा°; K6. 7 D4. 9 सोवहासा°; Da3. a4 सोपहासार्थतामेति; D7 T G6 M1 5–7 सोपहास्यात्मतामेति; G1 सोपभास्या°; G2 सोवभासा°; G3

सोपहासात्मतामेति यस्माच्चैवात्मवानपि ॥ २८
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते ।
याथातथ्येन सांख्येषु योगेषु च महात्मसु ॥ २९
यदेव योगाः पश्यन्ति सांख्यैस्तदनुगम्यते ।
एकं सांख्यं च योगं च यः पश्यति स बुद्धिमान् ॥ ३०
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थि स्नायु च ।
एतदैन्द्रियकं तात यद्भवानिदमाह वै ॥ ३१
द्रव्याद्द्रव्यस्य निष्पत्तिरिन्द्रियादिन्द्रियं तथा ।
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ॥ ३२
निरिन्द्रियस्याबीजस्य निर्द्रव्यस्यास्य देहिनः ।
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ॥ ३३
गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च ।
एवं गुणाः प्रकृतितो जायन्ते च न सन्ति च ॥ ३४
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थि स्नायु च । C. 12.11352 B. 12.306[5]. 24 K. 12.310.35

---

सोपि हास्या°. — $^{d}$) K1 यः साश्नावाप्तवानिति (sic); K2 तस्माच्चावाप्तवानिति; K7 V1 Ds2 यस्माच्चैवात्तवानपि (K7 °सि); D4.9 T G2.3.6 M1.5–7 यस्माच्चावाप्तवानपि (T1 G3.6 °यं; M1.5–7 °सि); D7 G1 यस्माच्चापास्त-(G1 °प्त)वानपि.

29 $^{b}$) D8 T1 [अ]नुपश्यते (Ds1 °ति) (for °दृश्यते). — $^{c}$) K1 यथातथेषु; V1 B0 T1 G1.3 यथा-तथ्येन; Da4 D7 T2 M1.6.7 यथातथ्येषु; D4.5.9 M5 याथातथ्येषु. — $^{d}$) D9 यागेषु (for योगेषु). K1 महा-त्मना; D5 T2 महत्सु च (for महात्मसु).

30 K2.4 om. 30$^{ab}$. — $^{a}$) T2 योगां (for योगाः). — $^{b}$) T G6 अव- (for अनु-). K1 सांख्ये तदानुदृश्यते; K6 B6 (marg. as in text).7.9 Da3 सांख्यस्तदनुपश्यति; D4 सांख्ये तदनुगम्यत; D7 G1 सांख्ये तदव(G1 °प)-गम्यते; G2 सांख्यास्तदनुचक्षते. — 30$^{cd}$ = (var.) 6. 27. 5$^{cd}$. — $^{c}$) K1.2 B6 D4.7 G1 एवं (for एकं). K7 D9 एकं योगं च सांख्यं च. — $^{d}$) T G1–3.6 M1. 5–7 पश्यति (for बुद्धिमान्).

31 31$^{ab}$ = 35$^{ab}$. — $^{a}$) V1 B0 Dn4 Ds2 D8 T G3 त्वङ्मांस- (for त्वङ्मांसं). K2.4 मेधाः; K6 G3 मेद-; Da3 मेद-; D7 G2 मेदं (for मेदः). — $^{b}$) K1 corrupt. B0.7 Da3 Dn1.n4 Ds2 D2.3.8 G6 मज्जा च (for मज्जास्थि). K6 स्नायवः (for स्नायु च). K2 पित्ते मज्जास्थि नायु च (sic); D7 T1 G1 मज्जास्थिस्नायुमे(T1 °रे)व च. — $^{c}$) K2 [ऐं]द्रियके; D4.9 °यिकं (for °यकं). T2 G1 प्राह; G3.6 प्राहुर् (for तात). ❀ Cn: ऐन्द्रियकम्, इन्द्रियसमुदायः ॥ Cs: इन्द्रियग्रहणयोग्यं, प्रत्यक्षम् ॥ Cv: ऐन्द्रियकं इन्द्रियसंबन्धि प्रमेयम् । ❀ — $^{d}$) K1.4 B7.8 D2.5.8 तद् (for यद्). V1 B7.9 Da3 Dn1.n4 Ds2 D2.3.8 G1 आह मां; B0.8 आत्थ मां; Da4 आह हि; D5 आत्थ मे (for आह वै). K2 तद्भ-वादिदमावहै (sic); G2 M1.5–7 यच्च त्वमिदमात्थ वै.

32 $^{a}$) K4 V1 B0.6.7.9 Da3.a4 Dn1.n4 Ds D2.3.8 G1 निर्वृत्तिर्; D4 विष्पत्तिर्; T G1.3.6 निष्पत्तिम् (for °त्तिर्). — $^{c}$) Ds1 Da4 देहादेहम् (for देहाद्देहम्). — After 32, M1.5–7 ins.:

760* सूक्ष्मदेहगता मात्रा बीजाप्यायितवृद्धिकाः ।

33 $^{a}$) K1.2.6 B6–9 Da3.a4 Ds1 D2 T2 G1 Cv बीजस्य; K4 V1 जीवस्य (for [अ]बीजस्य). ❀ Cv: निरिन्द्रियस्य, प्राकृतेन्द्रियरहितस्य । बीजस्य, सर्वजगन्निमित्त-कारणस्य । ❀ — $^{b}$) K1.6 B0.6.7 Da3.a4 Dn4 Ds D2.3.5.8 [अ]प्यदेहिनः; K2.4 B8 (marg.) Dn1 अपि देहिनः; V1 [आ]त्मदे° (for [अ]स्य दे°). ❀ Cv: निर्द्रव्यस्य, प्रकृत्याख्यद्रव्यसंबन्धराहितस्य । देहिनः, ज्ञानानन्दमयदेहिनः । ❀ — $^{d}$) G1 महात्मना (for °त्मनः). ❀ Cv: महात्मनः, अक्षरपदवाच्यस्य परमात्मनः । ❀

34 $^{a}$) B8 D5 वर्तंते (for जायन्ते). — $^{b}$) K1.2.6 V1 तथैव (for तत्रैव). K2 विनिशंति; K7 D8 D4.9 विलयंति; B6.7.9 G2 M1.5–7 विनशंति; B8 (marg. as in text) च विशंति; Da3.a4 विलसंति (for निविशन्ति). — B7 Da4 om. (hapl.) 34$^{cd}$. — $^{c}$) G1 प्रतिकृतो (for प्रकृतितो). — $^{d}$) K6.7 B6.8.9 Da3 G2 जायंति (for जायन्ते). M1 न च (by transp.); M5 (*inf. lin.*) अस्मिन्. K4 Dn1.n4 D2.3.5.7.8 T G1.3.6 निविशंति; K7 D4 निवसंति; Da3 G2 च वि(G2 न)-शंति (for च न सन्ति).

35 35$^{ab}$ = 31$^{ab}$. — $^{a}$) V1 damaged. K7 Ds1 D7 T2 G1.3 त्वङ्मांस- (for त्वङ्मांसं). K1.2 मेधः; D4 मंदः; G1 मेद- (for मेदः). — $^{b}$) K2 पित्ते; D5 G1 M7 पित्त- (for पित्तं). K6 D4 -स्नाय(D4 °यु)वः; D8 मज्जा च; D5 सुष्ठु च (for स्नायु च). — $^{cd}$) D7 T G1–3.6 M7 अष्टैतानि (for अष्टौ तानि). Da3.a4 जानीहि शुक्रेण (by transp.). G2 शुक्लेन; M1 कृच्छ्रेण (for शुक्रेण). K1.2 जायंते; G6 जानीयात् (for जानीहि). D3.5.7 G1–3 M1 प्रकृतानि (for प्राकृतानि).

C.12.11352 B.12.306 [5]. 24 K.12.310.35 अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै ॥ ३५

पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम् ।
नैव पुमान्पुमांश्चैव स लिङ्गीत्यभिधीयते ॥ ३६

अलिङ्गा प्रकृतिर्लिङ्गैरुपलभ्यति सात्मजैः ।
यथा पुष्पफलैर्नित्यमृतवो मूर्तयस्तथा ॥ ३७

एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते ।
पञ्चविंशतिमस्तात लिङ्गेष्वनियतात्मकः ॥ ३८

अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः ।
केवलं त्वभिमानित्वाद्गुणेष्वगुण उच्यते ॥ ३९

गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।
तस्मादेवं विजानन्ति ये जना गुणदर्शिनः ॥ ४०

यदा त्वेष गुणान्सर्वान्प्राकृतानभिमन्यते ।
तदा स गुणवानेव परमेणानुपश्यति ॥ ४१

यत्तद्बुद्धेः परं प्राहुः सांख्या योगाश्च सर्वशः ।

---

36 a) K6 om. (hapl.) from वापु up to श्चैव (in $36^{c}$). M1.7 पुमांश्च (for [अ]पु°). ❀ Cv: पुमान् जीवः, अपुमान् देहादिः । ❀ — K2.4 M5 om. (hapl.) $36^{bc}$; V1 reads the same on marg. — b) K1 Ds T2 G2.3.6 M1.6.7 त्रैलिंगं; K7 D4.5.7.9 T1 G1 स्त्रीलिंगं; V1 त्रिविधं; Bo त्रैलोक्यं; B7 त्रिलिंग्यं; Da4 सालिंग्यं (for त्रै°). ❀ Cn: त्रैलिङ्ग्यम्, त्रीणि लिङ्गानि, स्वार्थे ष्यञ् ॥ Cv: त्रैलिङ्ग्यं, त्रिगुणसंबन्धि । ❀ — c) Bo.8 Da4 Dn1.n4 Ds D2.3.8 Cv न वापुमान् (for नैव पुमान्). ❀ Cv: अपुमान्, जीवव्यतिरेको नारायणः । ❀ — d) K6 स लिंगं; K7 D4.9 स्त्रीलिंगी; D5 स्वालिंगी स लिङ्गी). K1.2.6.7 D4.9 हि (for [इ]ति).

37 a) K4.7 Da3.a4 Dn1.n4 Ds1 D2.5.7.8 Cn (gloss: ल्यब्लोपे पञ्चमी, अलिङ्गं पुरुषं प्राप्य; Cnp as in text) अलिंगान्; B6 (marg.) अलिंगी; G1 °गाः; G3 M1.6.7 °ग- (for °गा). K2 प्रकृति-; M1.7 -प्रकृतिं (for प्रकृतिर्). — b) K1.2 उपलभ्येत; K4 Bo Da3 Dn1 Ds D2.3.8 M1 उपालभ्य(Da3 °भ्ये)ति; B8 Da4 D5 उपलभ्येति (for °लभ्यति). K1 सांबजैः (sic); K2 Da4 G2 सास्वजैः; K7 D4.9 शास्त्रजैः; M1.5–7 ना(M5 चा)त्मजैः (for सा°). Cs उपलभ्यातिरसा यथा (hypermetric). ❀ Cs: अतिरसा, आत्यन्तिको रसो रागो यस्यां फलितायाम् । ❀ — d) K2.4.6 मृतयस् (for मूर्त°). Cs ऋतावामूर्तयस्तथा. ❀ Cs: आमूर्तयः, समन्तादुपचितमूर्तयः ॥ Cv: मूर्तयः, अन्योन्यविलक्षणास्तरुमूर्तयः । ❀

38 $38^{ab}$ is damaged in V1. — b) Da3.a4 नालिंगम्; D7 G1 अलिंग; T G3.6 ह्यलिंग (for °गम्). Ds1 ह्यलिंगोप्युपलभ्यते. ❀ Cn: अलिङ्गम्, शुद्धचिन्मात्रम् । ❀ — c) Da4 M1.5–7 -विंशतिकस् (for °तिमस्). D8 पंचविंशतिमात्रस्तु. — d) K1.2.4 V1 Bo Da4 Dn1.n4 D2.3.8 नियतात्मकः; K6 B6.7 D5 [अ]पि यता(K6 D5 °था)त्मकः; D7 [अ]नियतात्मनः (for °त्मकः). ❀ Cs: अनियतात्मकः, अनियतस्वभावः । ❀

39 b) K2 सर्वदर्शो; Da4 °दर्श-; M1.5–7 °दर्शो (for °दर्शी). ❀ Cs: निरामयः, अपक्षयादिरहितः । ❀ — c) K1.2 G2 M1.7 सा(G2 M1.7 त्व)भिमानत्वाद्; G1 त्वभिमानित्वं (for °मानित्वाद्). Ds1 स्वगुणा त्वाभिमानित्वाद् (sic). ❀ Cv: केवलं, मायाद्युपाधिं विना । ❀ — d) K2.4.6.7 V1 Bo.6.7 (marg. as in text).9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 M7 गुण; G2 गुणम् (for [अ]गुण). K2 तन्यते; D4 उद्यते (for उच्यते). G1 निर्गुणेष्वगुणोच्यते.

40 G1 om. (? hapl.) 40–41. — a) D7 प्राहुर् (for सन्ति). — b) K7 D4.9 तु के (for कुतो). ❀ Cv: निर्गुणस्य, सर्वथा गुणरहितस्य, ज्ञानानन्दगुणा अपि कुतः । ❀ — c) K6 M7 देवं; B3 (marg.) देहं; G2 तेन (for एवं). — d) K1.2.4 नरा; T1 गुणा (for जना).

41 G1 om. 41 (cf. v. l. 40). $41^{ab}$ is partly damaged in V1. — a) K1.2.4.6 Da3.a4 Cnp (gloss: श्रवणमननाभ्यामालोच्य) [अ]न्विष्य; G3 त्वेव; M1.6.7 तेषां; M5 त्वेषां (for त्वेष). K6 Bo.6.7.8 (orig.).9 Da3.a4 Dn1 n4 Ds D2.3.8 G2 M1.5–7 एतान्; T G3.6 एव (for सर्वान्). — b) T G6 M1.5–7 प्रकृताच्; G2 निर्गुणस् (for प्राकृतान्). K1.2.4 D4 T G3.6 अनु-; G2 त्वभि- (for अभि-). — K1 om. $41^{c}$. — c) K2 गुणहात्वेनं; K4 °हात्येनं; K6 Bo.8 D3 °हान्यैनं; V1 °हान्यैवं; B5.8 (marg.).9 °हान्यैव; B7 Dn1 D2 M5 °हान्यै तं; Dn4 D8 °हान्येनं; D5.7 °हीनं तु (for °वानेव). — d) K6 Bo.7 Dn1.n4 D2.3.5.7 8 M5 परमेव; K7 D4.9 गुणहाने; V1 B6.8 परमेन (for °मेण). T1 G3.6 -दृश्यते; T2 -पश्यते (for °ति). D8 परमं नानुविंदति; Cv परमेनं च पश्यति. ❀ Cv: एनं परमात्मानं, गुणहान्या, प्राकृतगुणहान्या, परं भिन्नं उत्तमं च पश्यति । बन्धत्वाबन्धत्वाभ्यां जीवेश्वरयोर्भेदं पश्यति । ❀

42 D5 reads 42 twice. — a) B8 Da4 यत्तु बुद्ध्या

परं पञ्चाशतो नार्यो वारमुख्याः समाद्रवन् ॥ ३७
पाद्यादीनि प्रतिग्राह्य पूजया परयार्च्य च ।
देशकालोपपन्नेन साध्वन्नेनाप्यतर्पयन् ॥ ३८
तस्य भुक्तवतस्तात तदन्तःपुरकाननम् ।
सुरम्यं दर्शयामासुरेकैकश्येन भारत ॥ ३९
क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चैव ताः शुकम् ।
उदारसत्त्वं सत्त्वज्ञाः सर्वाः पर्यचरंस्तदा ॥ ४०
आरणेयस्तु शुद्धात्मा त्रिसंदेहस्त्रिकर्मकृत् ।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ॥ ४१
तस्मै शय्यासनं दिव्यं वरार्हं रत्नभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं ददुस्ताः परमस्त्रियः ॥ ४२
पादशौचं तु कृत्वैव शुकः संध्यामुपास्य च ।
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ॥ ४३
पूर्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः । C. 12. 12256 B. 12. 22(5).42 K. 12. 333. 44

37 Ś1 K2. 4 om. $37^{a}$; D8 om. $37^{ab}$ (for both, cf. v. l. 36). K1 om. $37^{a}$. — $^{a}$) V1 B0 6 (marg.). 8 (marg as in text) Da3 a4 D7 T G1–3 6 कालोपचार-; M1. 5–7 कला( M5 °लो )पचार- (for कामोप°). — $^{b}$) K1 भावज्ञः; T2 कालज्ञाः; C8 (gloss: भावो विलासो भेदस्तज्ज्ञाः) भावज्ञाः (as in text). D8 T G1 M1. 5–7 C8 (gloss: सत्त्वं, परचित्तं, तद्रञ्जनसमर्थाः) सत्त्वकोविदाः; D5 स्मित°; D7 G2. 3 सत्य°; G6 तत्त्व° (for सत्त्व°). — $^{c}$) K2 परं पंचशतो; K6. 7 V1 B0 7–9 Da3 Dn1 n4 D8 D2. 3. 8 G1 M1. 5–7 परं पंचाशतं; B6 D4. 9 परं पंचशता; B8 (marg.) D5. 7 T G3. 6 परं पंचशतं; Da4 परं पंचाशता; D8 परे पंचाशतो; G2 परं परःशतं; Ca (gloss; पञ्चाशदधिकाः) परं पञ्चाशतो (as in text). — $^{d}$) Ś1 समद्रवन्; K1 समुद्धवन्; K2 समाक्रमन् (for °द्रवन्).

38 $^{a}$) K1. 4 पद्यादीनि (for पाद्यादीनि). Dn1 G2 प्रतिगृह्य (for °ग्राह्य). D7 पाद्यादि प्रतिगृह्याथ. — $^{b}$) K6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 परया- ( K6 B0 °मा )र्चयन्; T G1–3. 6 परयास्य च (for परयार्च्य च). D5. 7 पूजया चैनमर्चयत् ( D5 °न् ). — $^{c}$) K6. 7 B0. 6 (marg. as in text). 7–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 M1. 5–7 कालोपपन्नेन तदा ( B6 °था ). — $^{d}$) K6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 T1 G1. 3. 6 स्वाद्वन्नेन; D5 lacuna; G2 स्वाद्वन्नैर् (for साध्वन्नेन). K4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2–4. 8. 9 अभ्य- ( V1 °भि )तर्पयन्; D7 अप्यतर्पयत्.

39 $^{a}$) Da4 तस्य भुक्तस्य वचसा. — $^{d}$) Ś1 K1. 2. 4 एकैकध्ये( K2 °ध्ये )न; B9 Dn4 D2. 4 T2 °कस्येन; D82 °कस्यानु; D5. 7 °कत्वेन; T1 G6 °कस्य च; G2. 3 °कस्याश्च (for °कश्येन).

40 $^{a}$) K1. 4 क्रीडंतिश्च. — $^{b}$) G2 नृत्यंत्यश्च (for गायन्त्यश्च). K6 V1 B0. 8 Dn1. n4 D82 D2. 3. 8 चापि; D81 चाथ (for चैव). K1 तां; T1 G2. 3. 6 तं (for ताः). B0. 8 (marg. as in text) Dn1 n4 D8 D2. 3. 8 शुभं (for शुकम्). B6. 7. 8 (marg.) जिगीयंत्यश्च तं शुकं; B9 गायंत्यत्यश्च तं शुकं; Da3. a4 जिगीषंत्यश्च तं शुकं. — $^{c}$) D5 तत्त्वज्ञाः; G2 सर्वज्ञाः (for सत्त्वज्ञाः). — $^{d}$) K4. 6 V1 B0. 6–9 Da3 a4 Dn1. n4 D81 D2. 3. 5. 8 स्त्रियः (for सर्वाः). K6 B0 6. 7. 8 (marg. as in text) Da3. a4 Dn1 n4 D8 D2. 3 8 T1 G3. 6 तथा (for तदा).

41 $^{a}$) K1 आरणीयस्; K6 Dn4 °ण्येयस् (for °णेयस्). D8 M1. 5–7 Ca त्रि- (for तु). V1 D5 धर्मात्मा (for शुद्धात्मा). — $^{b}$) K4. 7 B7–9 Da3 Dn1. n4 D2–4. 8. 9 नि( D4. 9 नृ )संदेहस् ( K4. 7 °हं ); T1 G6 विसं° (for त्रिसं°). K7 Dn1. n4 D2 3. 8 स्वकर्मकृत् (for त्रि°). ❀ Ca: संदेहव्युदासार्थमेव त्रीणि कर्माणि श्रवणमननानिदिध्यासनानि कृतवान्। यद्वा। त्रिकर्मकृत, यज्ञाध्ययनदानपरः। यद्वा दैहिकमाहारविहारादिकर्म प्राणायामादिकमिति ॥ C8: त्रिसंदेहः, त्रिषु गार्हस्थ्याद्याश्रमेषु संदेहो यस्य। किमुत्पन्नज्ञानेन शरीरोत्पत्त्यनन्तरं ब्रह्मचर्यावस्थायां विदिते परमात्मतत्त्वे किं गार्हस्थ्यादिषु स्थातव्यमुत नेति संदेहो यस्य। त्रिकर्मकृत्, भिक्षाध्ययनगुरुशुश्रूषाकृत् ॥ Cv: त्रिषु, मोक्षेतरपुरुषार्थेषु संदेहः अनिषिद्धश्चेदस्तु, निषिद्धं च मास्त्विति। ❀ — $^{c}$) K1 कश्येंद्रियो; D2 वशें°. — $^{d}$) Da4 हृष्यति; D81 दुष्यति; D5 तप्यति (for कु°).

42 $^{b}$) K2 M7 परार्हं; K6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 देवार्हं (for वरार्हं). — $^{c}$) K1 सव्यास्तरण-; K2 सव्या°; K7 D81 D5 स्पर्धा°; Da4 सद्या°; D7 स्वाध्वा°; T1 G1. 6 स्वध्या°; G2. 3 साध्वा° (for स्पर्ध्या°). K2 B8 9 Dn1. n4 D8 D2. 8 G2 -संकीर्णं; M7 -संस्तीर्णा (for °र्णं). — $^{d}$) D81 परमाः (for परम-).

43 $^{a}$) K6 D5 च (for तु). K1 om. (hapl.). from कृत्वैव up to रात्रे तु (in $44^{a}$). Ś1 K2 कृत्वा वै; K6 D4 कृत्वेव. — $^{d}$) Da4 तमेकार्थं; T2 तदेवार्थं (for तमे°).

C.12.12257 B.12.322[5].43 K.12.333.44 मध्यरात्रे यथान्यायं निद्रामाहारयत्प्रभुः ॥ ४४
ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम् ।
स्त्रीभिः परिवृतो धीमान्ध्यानमेवान्वपद्यत ॥ ४५
अनेन विधिना कार्ष्णिस्तदहःशेषमच्युतः ।
तां च रात्रिं नृपकुले वर्तयामास भारत ॥ ४६

इति श्रीमहाभारते शान्तिपर्वणि द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

# ३१३

भीष्म उवाच ।
ततः स राजा जनको मन्त्रिभिः सह भारत ।
पुरः पुरोहितं कृत्वा सर्वाण्यन्तःपुराणि च ॥ १
आसनं च पुरस्कृत्य रत्नानि विविधानि च ।
शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात् ॥ २
स तदासनमादाय बहुरत्नविभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ॥ ३
पुरोधसा संगृहीतं हस्तेनालभ्य पार्थिवः ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ॥ ४
तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रत्यपूजयत् ।
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत् ।
स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि ॥ ५

---

44 K1 om. up to रात्रे तु ( cf. v. l. 43 ). — [a] ) D5 तस्य; M7 कृत्वा ( for तत्र ). — [c] ) V1 मध्ये ( for मध्य- ). Ś1 K2 T2 यंथान्यायं. — [d] ) Ś1 K1. 2 आहरयत्; M1. 7 आहारयन् ( for °यत् ).

45 [a] ) Ds1 मनो ( for ततो ). D7 T1 G2. 3. 6 मुहूर्तम् ( for °र्ताद् ). — [b] ) K7 कृत- ( for कृत्वा ). Da4 अनंतकः ( for अनन्तरम् ). — [c] ) B8 ( marg. ) शुको ( for परि- ).

46 [a] ) G2 [ अ ]भीक्ष्णं ( for कार्ष्णिस् ). — [b] ) G2 तदंगं ( for तदहः- ). B8 ( marg ) अप्युत; B9 T1 G2. 3. 6 अच्युत. — [c] ) M7 तं ( for तां ). D7 T1 G2. 3 नृपः काले ( for नृपकुले ). — [d] ) B7 Da4 भारतः.

Colophon. D8 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan :* Ś1 K1. 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 4. 5. 8 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name :* Ś1 K1. 2. 4. 6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D3 शुकोत्पत्तिः; K7 D4. 5. 9 शुकोत्पत्तौ मिथिलाप्राप्तिः ( K7 °लाप्रवेशः ); D2. 8 शुकोत्पतनं; M5 शुकोत्पत्तौ मिथिलाभिगमनं; M6 मिथिलाभिगमनं. — *Adhy. no.* ( figures, words or both ): K6 50; B7 145; B8 251; Dn1 151; Dn4 Ds2 149; D8 G1 M1. 6. 7 146; T1 G6 147; T2 160; G2 163; G3 148; M5 183. — *Śloka no. :* Da4 47; Dn1. n4 45; D8 46.

## 313

This adhy. is missing in D6 ( cf. v. l. 12. 283. 15 ).

1 V1 reads 1 on marg. — [a] ) Ś1 K1. 2. 4 सहितो ( for जनको ). — [b] ) Da4 भारतः. Ś1 K1. 2. 4 मंत्रिभिः कुरुसत्तम. — [c] ) K1 पुरा; Da4 पुनः ( for पुरः ). D7 T G1–3. 6 M1. 5–7 पुरोहितं पुरस्कृत्य.

2 K2. 4 G3 om. ( hapl ) 2[ab]; Ś1 reads it on marg. — [c] ) K6 Dn1. n4 D5. 7 G2 चार्घम् ( for चार्घ्यम् ). — [d] ) G2 उग्रपुत्रं ( for गुरु° ). K6. 7 B6. 7. 9 Da3. a4 D4. 5. 7. 9 T G1–3. 6 समभ्ययात् ( for °भ्यगात् ).

3 [a] ) B9 आसाद्य ( for आदाय ). Ś1 K1. 2. 4 महदासनमादाय. — [b] ) Ś1 K1. 2 सर्व- ( for बहु- ). — [c] ) K6 Ds1 D5 स्पर्द्धास्तरण-; D7 T G1–3. 6 स्वाध्वा( D7 स्वाध्या-; T G1. 6 स्वध्या )स्तरण- ( for स्पर्ध्या° ). B8 ( marg. ) Ds G2 -संकीर्णं ( for -संस्तीर्णं ). — [d] ) Da4 ऋद्धिमान् ( for °मत् ).

4 [a] ) G2. 3 पुरोहितं ( for °धसा ). B8 संगृहीतुं; D5. 7 सद्गृहीतं ( for संगृ° ). K6 पुरोधसा गृहीतं तं; T1 G6 पुरोहितगृहीतं वै. — [b] ) K7 G2 पार्थिव. — [d] ) Ś1 K1. 2 परमोचितं; T1 G6 °मासनं ( for °मार्चितम् ).

5 [a] ) K1 ततोपविष्टं ( for तत्रो° ). — [b] ) B0 शास्त्रे

प्रतिगृह्य च तां पूजां जनकाद्द्विजसत्तमः ।
गां चैव समनुज्ञाय राजानमनुमान्य च ॥ ६
पर्यपृच्छन्महातेजा राज्ञः कुशलमव्ययम् ।
अनामयं च राजेन्द्र शुकः सानुचरस्य ह ॥ ७
अनुज्ञातः स तेनाथ निषसाद सहानुगः ।
उदारसत्त्वाभिजनो भूमौ राजा कृताञ्जलिः ॥ ८
कुशलं चाव्ययं चैव पृष्ट्वा वैयासकिं नृपः ।
किमागमनमित्येव पर्यपृच्छत पार्थिवः ॥ ९

शुक उवाच ।

पित्राहमुक्तो भद्रं ते मोक्षधर्मार्थकोविदः ।
विदेहराजो याज्यो मे जनको नाम विश्रुतः ॥ १०
तत्र गच्छस्व वै तूर्णं यदि ते हृदि संशयः ।
प्रवृत्तौ वा निवृत्तौ वा स ते छेत्स्यति संशयम् ॥ ११
सोऽहं पितुर्नियोगात्त्वामुपप्रष्टुमिहागतः ।
तन्मे धर्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ॥ १२
किं कार्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः ।
कथं च मोक्षः कर्तव्यो ज्ञानेन तपसापि वा ॥ १३

जनक उवाच ।

यत्कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ।
कृतोपनयनस्तात भवेद्वेदपरायणः ॥ १४
तपसा गुरुवृत्त्या च ब्रह्मचर्येण चाभिभो ।
देवतानां पितॄणां चाप्यनृणश्चानसूयकः ॥ १५ C. 12. 12275 B. 12. 327[6]. 15 K. 12. 334. 15

---

च ( for शाश्वतः ). Ś1 K1. 2. 4 शास्त्रदृष्टेन कर्मणा ; K7 D4. 5. 7. 9 T G1–3. 6 M1. 5–7 शाश्वतः प्रतिपूज्य च. — $^{d}$) K1 अर्घ्यैं ; Ds1 अर्घं. Ś1 K1. 2 B3 Da3 अन्ववेदयत् ( for च न्य° ). — $^{e}$) T1 स च तं ; G2 स नाम ; M6 सततां ( for स च तां ). Ś1 K1. 2. 4 संव्रतः ; G1 मंत्र-वित् ( for °वत्- ). — Da4 om. ( hapl. ) $5^{f}$–$6^{a}$. — $^{f}$) K6 7 प्रत्यगृह्णाद्.

6 Da4 om. $6^{a}$ ( cf. v. l. 5 ). — $^{a}$) K4. 7 V1 B0. 6–9 Da3 Dn1. n4 Ds D2–5. 7–9 T G1–3 6 तु ( for च ). — $^{b}$) M1. 5–7 मुनि- ( for द्विज- ). — $^{c}$) D7 गाश्च. Ś1 K2. 7 D4 समनुज्ञाप्य ( for °ज्ञाय ). — $^{d}$) D9 om. ( hapl. ) from य राजा up to अनुज्ञा ( in $8^{a}$ ). K1 Dn1 Ds1 D5 अनुमन्य ( for °मान्य ).

7 D9 om. 7 ( cf. v. l. 6 ). D5 repeats $7^{ab}$ after सानु च ( in $7^{d}$ ). — $^{c}$) Ś1 K1. 2. 4 महें( K2. 4 °हीं )-द्रस्य ; K6 Da4 महाराज ; T1 G6 च राजेंद्रं ( for °जेन्द्र ). — $^{d}$) K6 B3 Ds च ( for ह ). B0 D5. 7 T G1. 6 शुकस्यानुचरस्य ह ( T1 च ).

8 D9 om. अनुज्ञा ( cf. v. l. 6 ). — $^{a}$) K7 [अ]सौ ( for [अ]थ ). K4 6 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 अनुशिष्टस्तु तेनासौ. — $^{b}$) K2 निषसाध ; D2 निश-साद. D7 स सानुगः ; G3 सदानुगः ( for सहा° ). — $^{d}$) Ds1 भूयो राजा ; D5 राजा भूमौ ( by transp. ).

9 $^{b}$) K2 T G1. 3. 6 वैयासिकिं ; K4 D7 G2 M1. 6. 7 वैयासि( K4 °स )कं ( for °सकिं ). Ś1 K1. 2. 4. 7 Da4 D4. 9 नृप ( for नृपः ). — $^{c}$) B8 ( marg. ) अपि ( for इति ). V1 B0. 8 Da3 Dn4 D2–5. 7. 8 T G1–3. 6 M1. 5–7 एवं ( for एव ). — $^{d}$) D5 G3 पार्थिव.

10 $^{b}$) K1 -कोविदाः. — $^{c}$) Ś1 K1. 2 विदेहराजा ( for °राजो ). Da4 ( marg. ) राजा नो ( for याज्यो मे ).

11 $^{a}$) K2 [आ]गच्छस्व ; K7 D4. 9 गच्छाद्य ; D7 T G2. 3. 6 M1. 5–7 त्वं गच्छ ( for गच्छस्व ). Ś1 K1. 2. 4 transp. वै and तूर्णं. — $^{b}$) D5. 7 G3 संशयं ( for °यः ). Ś1 K1. 2. 4 स ते हृदयसंशयं. — Da4 om. ( hapl. ) $11^{cd}$. — $^{c}$) D5 om. ( hapl. ) निवृत्तौ वा. Ś1 K1. 2. 4 प्रवृत्तौ च निवृत्तौ च ; K7 प्रवृत्तो वा निवृत्तो वा. — $^{d}$) Ś1 K1. 2 सर्वं ( for स ते ). Ś1 K1. 2. 4 T2 G2 [अ]संशयं ( T2 °यः ) ( for संशयम् ).

12 $^{a}$) G1 सोयं. D7 T1 G3. 6 पितृ- ( for पितुर् ). — $^{b}$) K7 उपपृष्टुम् ; Da3. a4 °स्पृष्टुम् ; D5 प्रष्टुं द्रष्टुम् ; D7 द्रष्टुं प्रष्टुम् ( for उपप्रष्टुम् ). K7 B8 ( marg. ) Ds D4. 9 उपागतः ; B0 इवागतः ( for इहा° ).

13 $^{b}$) D5. 7 मोक्षार्थं ( for °र्थश्च ). D5. 7 T1 G2. 3. 6 M1. 6. 7 आत्मनः ( for °कः ). — $^{c}$) K7 Da4 Ds1 मोक्ष- ( for मोक्षः ). K6 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 प्राप्तव्यो ( for कर्तव्यो ). — $^{d}$) K6 B0. 6–9 Da3 Dn1. n4 Ds D2. 3. 8 [अ]थ वा ; Da4 स वा ; G2 विना ( for [अ]पि वा ). — After 13, Ś1 K1. 2. 4 ins. an addl. colophon [ *Sub-parvan :* Ś1 K1. 2. 4 मोक्षधर्म. — *Adhy. name :* Ś1 K1. 2. 4 शुकोत्पत्तिः ].

14 $^{a}$) D5 om. ( hapl. ) from णेनेह up to ब्रह्म ( in $15^{b}$ ). M1. 6. 7 [अ]थ ( for [इ]ह ). — $^{c}$) G2 विप्रा ( for तात ). — $^{d}$) D7 तपोवेद- ; G2. 8 जपवेद- ( for

C.12.12276
B.12.327[6].16
K.12.334.16

वेदानधीत्य नियतो दक्षिणामपवर्ज्य च ।
अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः ॥ १६
समावृत्तस्तु गार्हस्थ्ये सदारो नियतो वसेत् ।
अनसूयुर्यथान्यायमाहिताग्निस्तथैव च ॥ १७
उत्पाद्य पुत्रपौत्रं तु वन्याश्रमपदे वसेत् ।
तानेवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः ॥ १८
स वनेऽग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित् ।
निर्द्वंद्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् ॥ १९

शुक उवाच ।

उत्पन्ने ज्ञानविज्ञाने प्रत्यक्षे हृदि शाश्वते ।
किमवश्यं निवस्तव्यमाश्रमेषु वनेषु च ॥ २०
एतद्भवन्तं पृच्छामि तद्भवान्वक्तुमर्हति ।
यथावेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ॥ २१

जनक उवाच ।

न विना ज्ञानविज्ञानं मोक्षस्याधिगमो भवेत् ।
न विना गुरुसंबन्धं ज्ञानस्याधिगमः स्मृतः ॥ २२

---

भवेद्वेद- ).

15 D5 om. up to ब्रह्म ( cf. v. l. 14 ). — b ) Ś1 K1. 2 चाभितः ( K1 °दः ); K4. 6 V1 B0 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 वा विभो ( for चाभिभो ). — c ) D7 T G1–3. 6 M1. 5–7 ऋषीणां ( for पितृणां ). B6. 9 D4 वा ( for च ). K7 पितृणां देवतानां च. — d ) Ś1 K1. 2, 4 Ds हि ( for [अ]पि ). K6 Da4 D7 T1 G2. 3. 6 [ऽ]प्यनसूयकः; K7 V1 B0. 6. 8 Da3 Dn1 Ds1 D2–5. 8. 9 T2 G1 ह्यनसू°; B7. 9 वा( B7 ना )प्य°; Dn4 Ds2 ह्यनु° ( for चान° ).

16 a ) K6 नियमो ( for °तो ). — b ) K2 अपिवर्ज्यं; K6. 7 अपवर्यं; G3 उपवर्ज्यं; Ca ( gloss : दत्त्वा ) अप° ( as in text ). — c ) Ś1 K2 Ds2 G2 अनु- ( for अथ ). M1 ज्ञाप्य ( for प्राप्य ). — d ) K2. 4 T2 द्विज.

17 a ) K6 समावृत्य; D5 °वर्तें; D7 °वर्त्यं; T1 °वर्तंस्; G1 °वृत्यस्; G3 °वृत्ते ( for °वृत्तस् ). K6 स; V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 च ( for तु ). Dn4 Ds2 गार्हस्थे; D8 °स्थः ( for °स्थ्ये ). G2 समादारत्तस्तु गार्हस्थ्ये ( sic ). — b ) G2 सदार- ( for °रो ). K6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8 M1. 5–7 स्व( Da4 त्व )दारनिरतो वसेत् ( Ds2 वशेत्; D5 [ marg. ] भवेत् ). — K7 D4. 9 om. ( hapl. ) $17^{c}$–$18^{b}$. — c ) Dn4 अनुसूयुर्; M1. 7 अनसूय. Ś1 K1. 2 यथान्याय्यम्. — Ś1 reads $17^{d}$–$18^{d}$ on marg. — d ) K1. 2. 4 D7 T1 G3. 6 अनाहृतः; D5 T2 G1. 2 M1. 5–7 अनावृतः ( for तथैव च ).

18 K7 D4. 9 om. $18^{ab}$ ( cf. v. l. 17 ). Ś1 reads 18 on marg. — a ) Ś1 K1. 2 पुत्रपौत्रांस्; B9 D5. 7 पुत्रं पौत्रं. V1 च ( for तु ). — b ) G2. 3 यत्याश्रम- ( for वन्या° ). K6 वशेत्; Da4 न्यसेत् ( for व° ). — G2 om. ( hapl. ) $18^{c}$–$19^{d}$. — c ) Ś1 K1. 2 M5 ( inf. lin. ) यथान्याय्यम् ( K1 M5 °यम् ) ( for °शास्त्रम् ). — M5 om. ( hapl. ) $18^{d}$–$19^{a}$.

19 G2 om. 19; M5 om. $19^{a}$ ( for both, cf. v. l. 18 ). — a ) K1. 4 Da3. a4 सर्वानग्नीन्; K6 स च तेऽग्नीन् ( for स वनेऽग्नीन् ). Da4 यथाशास्त्रम्; T2 °न्याय्यम्. — b ) K2 आत्मना; K7 आत्मानि. M1. 6. 7 आधाय ( for आरोप्य ). — c ) M1. 7 निर्द्वंद्वे. — d ) D5 ब्रह्माश्रमपदं. ❀ Cn : ब्रह्माश्रमः, संन्यासाश्रमः ॥ Cs : ब्रह्माश्रमपदे, पारिव्रज्यस्थाने । ❀ — After 19, B6 ins. an addl. colophon [ *Sub-parvan* : मोक्षधर्म. — *Adhy. name* : शुकजनकसंवादः ].

20 a ) B9 D7 G2. 3 Ca उत्पन्न-; Da4 °ज्ञो ( for °ज्ञे ). ❀ Ca : ज्ञाने, तत्त्वज्ञाने । विज्ञाने, अरिष्टादिज्ञाने । ❀ — b ) K1 प्रत्यक्ष्ये; K6 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 निर्द्वंद्वे ( for प्रत्यक्षे ). K4 शास्वते. — After $20^{ab}$, Ś1 K1. 2. 4 read $22^{cd}$ for the first time, repeating it in its proper place. — c ) G2 निवमत; M1. 5–7 हि वस्तव्यम् ( for निव° ). — d ) Ś1 K1. 2. 4 न वा नृप; K6 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 भवेत्त्रिषु ( for वनेषु च ). D5 M1. 5–7 वा ( for च ).

21 b ) K1 ( *sup. lin.* as in text ) 7 Da3. a4 Dn1 Ds ( by corr. ) T2 अर्हसि ( for °ति ). — c ) Ś1 K1. 2 वेद-; Ds2 यद्वा ( for यथा- ). — d ) Ś1 K1. 2 त्वं मे ( by transp. ); D7 T G1–3. 6 तत्त्वं. Da4 जनाधिपः; D5. 7 T1 G2. 3. 6 नराधिप.

22 a ) D5. 7 निर्विद्य ( for न विना ). K6. 7 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T G1. 6 M1. 5–7 -विज्ञानात्; Cs -विज्ञाने ( for °नं ). G2. 3 नापि ज्ञानान्न विज्ञानान्. ❀ Cn : ज्ञानं, शास्त्रजा धीः । विज्ञानमनुभवः । ❀ — Ś1 K1. 2. 4 read $22^{cd}$ for the first time after $20^{ab}$. — c ) Ś1 K1. 2. 4 ( all both times ) -संबंधाद्; Da4 °धे

आचार्यः प्लाविता तस्य ज्ञानं प्लव इहोच्यते ।
विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ॥ २३
अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम् ।
पूर्वैराचरितो धर्मश्चातुराश्रम्यसंकथः ॥ २४
अनेन क्रमयोगेन बहुजातिषु कर्मणा ।
कृत्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते ॥ २५
भावितैः कारणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ २६
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ।
त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ॥ २७
राजसांस्तामसांश्चैव नित्यं दोषान्विवर्जयेत् ।
सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना ॥ २८
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्नोपलिप्येत जले वारिचरो यथा ॥ २९
पक्षीव प्लवनादूर्ध्वममुत्रानन्त्यमश्नुते ।
विहाय देहं निर्मुक्तो निर्द्वंद्वः प्रशमं गतः ॥ ३० C. 12. 12290 B. 12. 327[6].30 K. 12. 334. 30

( for -संबन्धं ). — d ) M1.6.7 अधिगतः ( for °गमः ). Ś1 K1.2 ( all second time ) T2 भवेत्; D8 कृतः ( for स्मृतः ). ❀ Ca : अत्र मध्ये 'न विना गुरुसंबन्धम्' इति श्लोकार्धं ( $22^{cd}$ ) केचित्पठन्ति तदसंगतम् । ❀

23 a ) K2.6.7 B6.7 Da3 आचार्य-; K4 Da4 °र्याः ( for °र्यः ). T G2 Cs ( gloss : पारे तारयिता ) प्रापिता; G1 प्रपिता ( for प्लाविता ). Da3.a4 तस्या; D5.7 यस्य. V1 Bo.8 ( marg. as in text ) Dn1.n4 D8 D2.3.8 Cn ( gloss : प्लावयिता, कर्णधारः ) गुरुः प्लावयिता तस्य. — b ) K7 ज्ञान- ( for ज्ञानं ). Bo पूर्वं; G2 पशु ( for प्लव ). — c ) D7 T1 G2.3.6 विज्ञाने; T2 G1 विज्ञान- ( for °य ). D5 om. ( hapl. ) कृत. G3 कृतकृत्यं; M1.7 [अ]कृतकृत्यस्. — d ) K2 तीर्थस्; D4 तीर्णं. Ś1 K1.2 तत्र भयं ( for तदुभयं ).

24 a ) D8 अनुगच्छेदार्यलोकान्. — b ) D8 T2 G1.2 M1.6.7 अविच्छेदाय ( for अनु° ). Da4 कर्मणा. D7 T1 G3.6 विच्छेदाय न ( T1 G6 च ) कर्मणां. — K2.4 read $24^{c}$–$25^{b}$ after $34^{ab}$. Ś1 reads $24^{cd}$ on marg. — d ) Ś1 K1 D8 D7 चातुराश्रम-; K2.4 चतुराश्रम-; G2 चतुराश्रम्य- ( for चातु° ). K2.4.6 V1 Bo.6–9 Da3 Dn1.n4 D2.3.5.8 -संकटः; K7 D4.9 -संकुलः; Da4 -कंटकः; D8 -संग्रहः ( for -संकथः ).

25 For the sequence in K2.4, cf. v. l. 24. — a ) D5 कर्म- ( for क्रम- ). — b ) K7 D4.9 बह्वो जातिषु; M1.5–7 बह्वाजातिषु; Ca ( gloss : नानाजन्मसु ) बहु° ( as in text ). K2.4 V1 Bo.6–9 Da3 Dn1.n4 D8 D2.5.7.8 T G1–3.6 कर्मणां ( for °णा ). K6 Da4 D8 बहुजातिसु ( K6 °स्थ- ) कर्मणा ( Da4 °णा ). — c ) K6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 D2–5.7–9 M5.6 हित्वा; D8 जह्यात्; M1.7 छित्वा ( for कृत्वा ). — d ) K1 मोक्ष-; M1.6.7 मोक्षं ( for मोक्षो ). Da4 मोहेन ( for नामेह ).

26 a ) K4 D4 भवितैः ( for भा° ). K6.7 Dn1.n4 D4.8 T G1.6 M1.5–7 Ca.n करणैश्च; G3 करणश्च ( for कारणैश्च ). D7 G2 भाविते करणाश्चायं. ❀ Ca : भावितैः, जन्मान्तराभ्यासवासितैः ॥ Cn : शोधितैः । ❀ — c ) V1 धर्मात्मा ( for शुद्धात्मा ). — d ) Ś1 K2 मोक्षं हि; K1 मोक्षाति ( for मोक्षं वै ). Bo.6.7.9 Dn1.n4 D3 प्रथमेश्रमे.

27 a ) D8 समासाद्य; D3.4 तमसाद्य ( for तमासाद्य ). D5 प्र- ( for तु ). D4 मोक्षः स्याद् ( for मुक्तस्य ). — b ) K1.7 दृष्ट्वार्थस्य ( for दृष्टार्थस्य ). B8 विपश्चितं. ❀ Cs : दृष्टार्थस्य, विद्वदनुभवसिद्धब्रह्मभावफलस्य । ❀ — c ) K1 त्वर्थो ( for न्वर्थो ). K2 त्रिष्टार्थमेषु कोन्वर्थो ( sic ). — d ) M7 पुरम् ( for परम् ). B8 T1 G1 अभीप्सितः.

28 a ) Bo D4 om. तामसां. K1 om. चैव. V1 B8 राजसं तामसं चैव. — b ) V1 B8 दोषं ( for दोषान् ). — d ) G2 आत्मनः ( for °ना ).

29 $29^{ab}$ = ( var. ) 6. 28. $27^{ab}$; Manu. 12. $91^{ab}$. — a ) The portion from त्मानं up to मुनिः in 12. 314. $30^{d}$ is lost in V1 on missing fol. D4 वा ( for च ). — c ) M1.5–7 संपश्येन् ( for °श्यन् ). K6 D7 G2.3 संपश्यतोपलिप्येत. — d ) B6 ( marg. as in text ) जलचरो ( for वारि° ). ❀ Cn : वारिचरो, हंसादिः । ❀

30 V1 missing ( cf. v. l. 29 ). — a ) K6 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 पक्षिवत्; K7 पक्षीवत्; G3 पक्षींय ( for °व ). K6 प्रणमाद्; K7 B7–9 Dn1 D8 D2–4.8.9 Cn ( gloss : निम्नात् ) Cs : ( gloss : मरणादुत्तरकालम् ) प्रवणाद्; Bo प्रणवाद्; B6 प्रेवणाद्; Da3.a4 प्रेरणाद्; Dn4 श्रवणाद्; T G1–3.6 M5.6 प्रायणाद्; M1.7 प्राणयाद् ( for प्लवनाद् ). K1.6.7 D4.9 ऊर्धम् ( for ऊर्ध्वम् ). — b ) K6 [अ]न्यं तम् ( for [आ]नन्त्यम् ). — G2 repeats from 12. 313. $30^{c}$ to 12. 314. $2^{d}$ after 12. 316. 22. — c ) K2 देवं; K6.7 Bo.6.7.8 (marg).9

C. 12. 12291 B. 12. 327[6]. 31 K. 12. 334. 31 अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना ।
धार्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ॥ ३१
ज्योतिरात्मनि नान्यत्र रतं तत्रैव चैव तत् ।
स्वयं च शक्यं तद्द्रष्टुं सुसमाहितचेतसा ॥ ३२
न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ३३
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३४
संयोज्य तपसात्मानमीर्ष्यामुत्सृज्य मोहिनीम् ।
त्यक्त्वा कामं च लोभं च ततो ब्रह्मत्वमश्नुते ॥ ३५
यदा श्रव्ये च दृश्ये च सर्वभूतेषु चाप्ययम् ।
समो भवति निर्द्वंद्वो ब्रह्म संपद्यते तदा ॥ ३६
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ।
काञ्चनं चायसं चैव सुखदुःखे तथैव च ॥ ३७

Da3. a4 Dn1 n4 Ds D2–4. 8. 9 देहान्; D5 देही ( for देहं ). B8 ( marg. as in text ) निर्द्वंद्वः ( for निर्मुक्तो ). —$^{d}$ ) K7 निर्मुक्तः ( for निर्द्वंद्वः ). Da3. a4 प्रथमं ( for प्रशमं ). D4 गताः; D9 ततः. Ś1 K1 2 निर्द्वंद्वः शुभसंगतः; B8 ( marg. as in text ) प्रसमं सर्वतो गतः; D7 T G1. 2 ( both times ) 3. 6 M1. 5–7 निर्द्वंद्वः शमसंयुतः.

31 For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). —$^{a}$ ) K6 7 B6 Da4 Dn1 Ds1 D7 T1 G3 गाथा; G2 ( first time ) गाथां; G2 ( second time ) गाधा ( for गाथाः ). K7 D7 T1 G1. 2 ( second time ). 3. 6 गीता; Ds [अ]तीतः; G2 ( first time ) गीतां ( for गीताः ). K1 अत्राराथाः पुरी गीतः ( corrupt ). —$^{b}$ ) Ds1 शृणु राजन्यजातिना. —$^{c}$ ) G2 ( second time ) धार्यंते. D7 T1 G2 ( both times ). 3. 6 यद्; M1. 6. 7 यैर् ( for या ). —$^{d}$ ) Da3. a4 -विशारदः ( for °रदैः ).

32 For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). —$^{a}$ ) K2. 4 चात्मनि ( for आत्मनि ). K7 D4. 9 सर्वत्र; B8 D7 चान्यत्र ( for ना° ). G2 ( both times ) ज्योतिरात्मा निरन्यत्र. ❀ Ca : ज्योतिः, चिद्रूपं प्रकाशनम् । ❀ —$^{b}$ ) T1 G2 ( both times ). 6 यत्तदत्र; T2 G1 रमतेत्र ( for रतं तत्र ). K7 D4. 9 संस्थितं ( for चैव तत् ). K6 B6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 सर्वजंतुषु तत्समं; B0 यदा वान्यत्र तत्समं. —$^{c}$ ) M5 स्वेनैव ( for स्वयं च ). K6. 7 B0. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 8. 9 शक्यते ( Da4 °से ); D7 T G1. 2 ( both times ). 3. 6 शक्यं यद् ( for शक्यं तद् ). —$^{d}$ ) D5 स्वयमाहित-; G2 ( first time ). 6 ससमाहित- ( for सुस° ). D7 -तेजसा ( for -चेतसा ).

33 With 33, cf. 12. App. I, ( No. 4 ), lines 27–28; 12. 168. 42; Harivaṁśa I 30. 41. $33^{ab}$ = ( var. ) 12. 21. $4^{ab}$. For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). —$^{b}$ ) K1 परश्च; K2. 4 पराश्च ( for पराच्च ). —$^{c}$ ) G2 ( second time ) यच्च ( for यश्च ). — D5 om. $33^{d}$–$35^{a}$. —$^{d}$ ) K7 D4. 9 हि सः; D7 T G1. 2 ( both times ). 3. 6 M1. 5–7 तु सः ( for तदा ).

34 = ( var. ) 12. 168. 44; 12. App. I, ( No. 4 ), lines 29–30; Harivaṁśa I. 30. 40. For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). D5 om. 34 ( cf. v. l. 33 ). —$^{b}$ ) D7 T1 M6. 7 पावकं; Cs ( gloss : हिंसात्मकम् ) पापकम् ( as in text ). — After $34^{ab}$, K2. 4 read $24^{c}$–$25^{b}$.

35 For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). D5 om. $35^{a}$ ( cf. v. l. 33 ). G2 ( both times ) om. ( hapl. ) 35–38. M1. 6. 7 om. ( hapl. ) 35–36. —$^{a}$ ) K6 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 मनसा ( for तपसा ). —$^{b}$ ) K6 ईर्षाम्. K7 B0. 8 Da3 Dn4 Ds1 D2. 9 M5 मोहनीं; Da4 मोहनी; D4 मोह्निनी. —$^{c}$ ) B0. 8 ( marg. as in text ) Da3 Dn1. n4 Ds D2. 3. 8 मोहं ( for लोभं ). —$^{d}$ ) K6 B0. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M5 तदा ( for ततो ). B8 ( marg. as in text ) तदा ब्रह्म समश्नुते. ❀ Cv : ब्रह्मत्वमश्नुते । ब्रह्मत्वं, सुखबृंहितत्वम् । बृह-बृंह वृद्धाविति धातुः । ❀

36 For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). G2 M1. 6. 7 om. 36 ( cf. v. l. 35 ). —$^{a}$ ) B0 Dn1 Ds2 D3 T2 G1 M5 श्राव्ये; Ds1 श्रोतव्ये ( hypermetric ); D7 T1 G3. 6 शून्ये ( for श्रव्ये ). K6 यदा श्रव्येत दृश्येत. —$^{b}$ ) K2 B7. 8 ( marg. as in text ) D5. 7 T1 G3. 6 चाव्ययं; K7 D4. 9 चाद्विषन्; Dn1. n4 चाप्यहं ( for °यम् ).

37 For the repetition in G2, cf. v. l. 30. V1 missing ( cf. v. l. 29 ). G2 om. 37 ( cf. v. l. 35 ). Ś1 reads 37–38 on marg. —$^{b}$ ) K2. 4 स ( for [ए]व ). —$^{c}$ ) K7 Da4 वायसं. D7 पर्णं ( for चैव ). —$^{d}$ )

शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम् ।
जीवितं मरणं चैव ब्रह्म संपद्यते तदा ॥ ३८
प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ॥ ३९
तमःपरिगतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ ४०
एतत्सर्वं प्रपश्यामि त्वयि बुद्धिमतां वर ।
यच्चान्यदपि वेत्तव्यं तत्त्वतो वेद तद्भवान् ॥ ४१
ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः ।
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ॥ ४२
तस्यैव च प्रसादेन प्रादुर्भूतं महामुने ।
ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ॥ ४३
अधिकं तव विज्ञानमधिका च गतिस्तव ।
अधिकं च तवैश्वर्यं तच्च त्वं नावबुध्यसे ॥ ४४
बाल्याद्वा संशयाद्वापि भयाद्वाप्यविमोक्षजात् ।
उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिम् ॥ ४५ C. 12. 12305 B. 12. 327[6].45 K. 12. 334. 45

---

K6 Bo. 6. 8 (marg. as in text). 9 Da3. a4 T2 G3 M7 सुखं दुःखं; B7 T1 G1. 6 M1. 5 6 सुखदुःखं (for °दुःखे).

38 For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). G2 om. 38 (cf. v. l. 35). Ś1 reads 38 on marg. —$^{a}$) K6 B6. 7. 8 (marg.). 9 Da4 शीतोष्णं च (for शीतमुष्णं). —$^{b}$) K1 Da4 अनर्थं· (for °र्थं).

39 $39^{ab}$ = 12. 187. $6^{ab}$; 239. $4^{ab}$. With $39^{ab}$, cf. 6. 24. $58^{ab}$. For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). —$^{a}$) B8 तथा (for यथा). D5. 7 [आ]त्मानि (for [अ]ङ्गानि). —$^{b}$) K1 संहतते; G2 (first time) संवितते; G2 (second time) संविशते (for संहरते). —$^{c}$) G3 अथ (for तथा). K6 G2 (second time) सर्वाणि (for मनसा). —$^{d}$) K7 Dn4 संयतव्यानि; D5. 7 संजेत°; G2 (second time) नियंत° (for संयन्त°).

40 For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). —$^{a}$) K1 तपः· (for तमः-). Da4 -पतिगतं (for -परि°). —$^{b}$) B7 दृप्यते; D8 दीप्यते; G2 (first time). 3 पश्यते; G2 (second time) पश्यति (for दृश्यते). —$^{c}$) K2 तदा; Da3. a4 अथ (for तथा). —$^{d}$) Ś1 K1. 2. 6 Dn1 D5. 7 शक्यम् (for शक्य). K1 निरीक्षितं; D5. 7 परीक्षितुं (for निरी°).

41 For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). —$^{a}$) K4. 6. 7 Bo. 6–9 Da3. a4 Dn1, n4 D8 D2. 3. 5. 7–9 च; D4 lacuna; T G1. 2 (both times). 3. 6 M1. 5–7 हि (for प्र-). Dn4 पश्यंति (for -पश्यामि). —$^{b}$) K6 B6 (marg. as in text) Da4 तव; G2 (both times) तथा (for त्वयि). K2 बुद्धिसतां; K7 D4. 9 धर्मभृतां; D8 बुद्धिभृतां (for °मतां). Bo वरं; Da4 G2 (second time) वरः. —$^{c}$) Da4 यथा (for यच्च). D5. 7 चेतव्यं; T G1. 2 (both times). 3. 6 नोक्तं ते; M1. 5–7 बोद्धव्यं; Ca (gloss: वेदितव्यम्) वेत्तव्यं (as in text). —$^{d}$) K7 D4. 9 वेत्ति (for वेद). D7 तत्त्वतो वै तदद्भुतान्.

42 For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). —$^{a}$) K7 Da3. a4 ब्रह्मर्षि- (for °र्षे). K2 विनितश्च (for विदि°). K2 चास्मि; K7 B8 (marg. as in text) चापि (for चासि). —$^{b}$) ❀ Ca: विषयान्तम्, विषयवैमुख्यम् । ❀ —$^{c}$) Ś1 K1. 2 चैव (for तव). —$^{d}$) K1 देवोप- (for चैवोप·). K2 -चिक्रिया (sic) (for -शिक्षया). B7 तव चैवोपलक्षया. ❀ Ca: तव चैवोपशिक्षया इति शुकगौरवप्रकाशनार्थम् । यद्वा, तवोपशिक्षार्थमिति विभक्तिव्यत्ययेन चतुर्थ्यर्थे तृतीया। ❀

43 For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). —$^{a}$) Ś1 K1. 2. 4 B8 (marg. as in text) transp. [ए]व and च. T2 प्रभावेन (for प्रसादेन). —$^{b}$) K2. 4 महामुनेः. —$^{c}$) D7 ज्ञानदीपं (for ज्ञानं दिव्यं). Ś1 K1. 2. 4 समादीप्तं; G2 (second time) त्वयि तदा (for ममापीदं). —$^{d}$) T2 मुने (for मम).

44 For the repetition in G2, cf. v. l. 30. V1 missing (cf. v. l. 29). The portion from $44^{a}$ up to 12. 316. $1^{b}$ is lost in Ś1 on missing. fol. —$^{a}$) K6 तदवि·; B9 च तव; D7 T G1. 2 (both times). 3. 6 भवति (for तव वि-). —$^{c}$) G1 अधिका. K1 च तथा; K6. 7 Bo. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds1 D2. 4. 8. 9 तव च (by transp.). —$^{d}$) K7 B9 D4. 7. 9 T2 G1 M1. 5–7 त्वं च (M5 तु) तन्; T1 G2 (first time). 3. 6 तत्त्वं तन्; G2 (second time) किं तत्त्वं (for तच्च त्वं).

45 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing (cf. v. l. 44, 29). —$^{a}$) K6. 7 Ds1 बालाद्

C. 12. 12306
B. 12. 327[6]. 46
K. 12. 334. 46

व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः ।
विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ॥ ४६
भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः ।
व्यवसायादृते ब्रह्मन्नासादयति तत्परम् ॥ ४७
नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपा ।
नौत्सुक्यं नृत्तगीतेषु न राग उपजायते ॥ ४८
न बन्धुषु निबन्धस्ते न भयेष्वस्ति ते भयम् ।
पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ॥ ४९
अहं च त्वानुपश्यामि ये चाप्यन्ये मनीषिणः ।
आस्थितं परमं मार्गमक्षयं तमनामयम् ॥ ५०
यत्फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः ।
तस्मिन्वै वर्तसे विप्र किमन्यत्परिपृच्छसि ॥ ५१

इति श्रीमहाभारते शान्तिपर्वणि त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

---

( for बाल्याद् ). G2 ( first time ) corrupt; G2 ( second time ) बालाद्वंद्वशयाद्वापि. — D4 G2 ( both times ) om. 45[b]. — [b] ) K1. 2. 7 D9 भयाद्वापि विमोक्षजात्; B8 ( marg as in text ) °प्यविमोक्षनात्; D5. 7 °प्यधिमोक्षजात्; T1 G3. 6 मुह्यसे त्वं विमोक्षजात्; T2 विमोहाद्वाविमोक्षजात्; G1 विधाच्चाप्यविमोक्षयन्. — [c] ) K6. 7 वा ( for च ). — [d] ) K2 -गच्छंति; B6. 7. 9 Da4 Ds D2. 3. 5 M5 -गच्छसि; G2 ( second time ) -गच्छत ( for °ति ). D5 मतिं ( for गतिम् ). M1. 6. 7 विज्ञानेनाधिगच्छसि.

46 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing ( cf. v. l. 44, 29 ). — [a] ) D4. 9 बुद्धेन ( for शुद्धेन ). G2 ( second time ) व्यवसायविशुद्धेन. — [b] ) D4. 9 बुद्धिमाञ्; D7 G2 ( second time ) त्वयि यश्; T G1. 3. 6 त्वद्विधश् ( for मद्विधैश् ). K2 -संशयाः; B7 -संशयं. G2 ( first time ) त्वयि यद्यन्नसंशयं. — [c] ) K2 -ग्रंथीर्; Da4 D5. 7 T G1. 2 ( first time ). 3 -ग्रंथिम् ( for -ग्रन्थीन् ). — [d] ) K7 D4. 9 उत्पादयति; M1. 5–7 आसादयसि ( for °यति ). K1. 2. 4 गतिमासादयंति तां.

47 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing ( cf. v. l. 44, 29 ). — [a] ) T1 भावांश्; G2 ( first time ) भात्राश् ( for भवांश् ). Da4 G1. 2 ( second time ) M7 -विज्ञान- ( for °नः ). — [c] ) D7 G2 ( both times ) पृच्छन् ( for ब्रह्मन् ). G3 व्यवसायेन तत्पृच्छन्. — [d] ) B6. 9 Da3. a4 D9 यत् ( for तत् ). Ds1 पदं ( for परम् ).

48 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing ( cf. v. l. 44, 29 ). D4. 9 read 48[a] twice followed by 48[d]. — [b] ) B7. 9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 M1. 5–7 नासि ( for नास्ति ). K1. 2. 4 वस्तुषु; K7 G2 ( second time ) लोलुप; B6. 7. 9 Da3. a4 Ds D2. 5. 7–9 T1 G2 ( first time ). 3. 6 M1. 5–7 लोलुपः ( for °पा ). — [c] ) K1 D3. 4. 7 T1 नोत्सुक्यं; M7 नौत्सुक्य- ( for °क्यं ). K4. 6. 7 Bo. 6–9 Dn1. n4 Ds D2–5. 7–9 T1 G3. 6 नृत्य-; Da4 वृत्र- ( sic ) ( for नृत्त- ). — [d] ) D5 न रागस्योपसेवने.

49 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing ( cf. v. l. 44, 29 ). G2 ( both times ) om. ( hapl. ) 49–50. — [a] ) K4 नि- ( for न ). M1. 5 ( *inf. lin.* ) 6. 7 बंधेषु ( for बन्धुषु ). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 8 [अ]नुबंधस्; M1. 6. 7 निबद्धस् ( for निबन्धस् ). Ds1 न बंधुश्च नबंधुस्ते. — [b] ) K7 D4. 9 भयेपि ( for भयेषु ). — [c] ) M1. 6. 7 पश्याम ( for °मि ). K1. 2 M1. 5–7 त्वा; Bo मां ( for त्वां ). Da4 महाभागस्. — [d] ) G1 -कांचना. K1. 2. 4 तुल्यनिंदात्मसंस्तुतिं = ( var. ) 6. 36. 24[d].

50 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing ( cf. v. l. 44, 29 ). G2 om. 50 ( cf. v. l. 49 ). D5 om. 50[a]–51[b]. — [a] ) Bo Dn1. n4 Ds D2. 3. 8 त्वामनु-; B6. 7. 9 Da3 a4 च त्वां न; D7 G3 च त्वनु-; G1 त्वमनु- ( for च त्वानु- ). M1. 5–7 -यास्यामि ( for -पश्यामि ). — [b] ) K1. 2 चान्येपि; Ds2 [ऽ]प्यन्येन ( for चाप्यन्ये ). — [c] ) K1 आस्तितं; Ds1 आश्रितं; D7 T1 G3. 6 आस्थितः ( for °तं ). Dn4 भागम् ( for मार्गम् ). — [d] ) M6 अक्षयां. K1. 2 अक्षयं चाप्यथाव्ययं.

51 For the repetition in G2, cf. v. l. 30. Ś1 V1 missing ( cf. l. 44, 29 ). D5 om. 51[ab] ( cf. v. l. 50 ). — [a] ) K2 ब्रह्मणस्य ( for ब्रा° ). G2 ( first time ) [इ]व ( for [इ]ह ). — [b] ) Da4 मोक्षार्थस्य; D7 मोक्षार्थे च; G2 ( first time ) मोक्षश्चापि; G2 ( second time ) मोक्षो यश्च ( for मोक्षार्थश्च ). D7 M1. 7

# ३१४

भीष्म उवाच ।
एतच्छ्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः ।
आत्मनात्मानमास्थाय दृष्ट्वा चात्मानमात्मना ॥ १
कृतकार्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः ।
शैशिरं गिरिमुद्दिश्य सधर्मा मातरिश्वनः ॥ २
एतस्मिन्नेव काले तु देवर्षिर्नारदस्तदा ।
हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम् ॥ ३
तमप्सरोगणाकीर्णं गीतस्वननिनादितम् ।
किंनराणां समूहैश्च भृङ्गराजैस्तथैव च ॥ ४
मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः ।
चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः ।
राजहंससमूहैश्च हृष्टैः परभृतैस्तथा ॥ ५

C. 12. 12317
B. 12. 328[7]. 6
K. 12. 335. 6

---

यदात्मनः ( for °त्मकः ). — °) T1 अस्मिन् ( for त° ). G2 ( second time ) वर्ण्यसे ( for वर्तसे ). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M1. 5–7 ब्रह्मन् ( for त्रिप्र ). — d ) M1. 5–7 अनु- ( for परि- ).

Colophon. Ś1 V1 D6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4 5 M2–4 absent. — *Sub-parvan:* K1. 2. 4. 6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 T G1. 2 ( both times ). 3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name:* K1. 2. 4. 6 Bo. 6–9 Da3 a4 Dn1. n4 Ds D2. 3. 8 शुकोत्पत्तिः; K7 D5 जनकशुकसंवादः; D4. 9 G6 शुकजनकसंवादवाक्यं ( G6 om. वाक्यं ); M5. 6 जनकवचनं. — *Adhy. no.* ( figures, words or both ): K6 51; B7 G3 149; B8 153; Dn1 152; Dn4 Ds2 150; Ds1 D8 T1 G1 M1. 6. 7 147; T2 161; G2 ( first time ) 164; G2 ( second time ) 168; G6 148; M5 184. — *Śloka no.:* Da4 Dn4 151; Dn1 52; Ds1 16; D8 53.

## 314

☞ This adhy. is missing in Ś1 D6 ( cf. v. l. 12. 313. 44; 283. 15 ).

1 For the repetition in G2, cf. v. l. 12. 313. 30. V1 missing up to मुनिः ( in 30d ) ( cf. v. l. 12. 313. 29 ). Bo om. the ref. — b ) ❀ Cs: कृतात्मा, जितेन्द्रियः । ❀ — c ) K6. 7 D4. 9 आत्मन्यात्मानमाधा( K6 °स्था )य. ❀ Cs: आत्मानं परमेश्वरं, आत्मना स्वरूपेण, आस्थाय ध्यात्वा । ❀

2 For the repetition in G2, cf. v. l. 1. V1 missing ( cf. v. l. 1 ). — a ) B9 सुखं ( for सुखी ). M1. 5–7 दांतस् ( for शान्तस् ). — b ) T2 उदंग्मुखं. K7 D4. 9 आमंत्र्याथ नृपं ततः. — After 2ab, K7 D4. 9 ins.:

791* प्रययौ योगमास्थाय तुष्टो दिशमथोत्तराम् ।

— c ) K7 D4. 9 शिशिरं ( for शै° ). ❀ Cn: शैशिरं गिरिं, हिमालयम् । ❀ — d ) D7 सधर्मान् ( for °र्मा ). K7 मातरिस्वनः. G2 ( second time ) सधर्मश्च संगिराः. ❀ Ca: मातरिश्वनो वायोः सधर्मा, नित्यमेकत्र नवसन् ॥ Cs: वायोस्तुल्यगतिः । ❀

3 V1 missing ( cf. v. l. 1 ); D7 T2 G1 repeat, while T1 G2. 3. 6 read, 3 after 12. 315. 10. — b ) K1. 2 देवर्षि- ( for °र्षिर् ). K1. 7 Bo. 6–8. 9 ( marg. as in text ) Dn1. n4 Ds D2. 4. 7 ( second time ). 8. 9 T2 ( both times ) G1 ( first time ) M7 तथा; D3 ततः ( for तदा ). — c ) K1. 2 Da4 Ds2 ( before corr. as in text ) G2. 3 अयाद्; K7 D4. 5. 7 ( first time ) 9 T2 G1 ( last two second time ) अगाद्; D7 ( second time ) T1 G6 अथो; T2 G1 ( both first time ) इव ( for इयाद् ).

4 V1 missing ( cf. v. l. 1 ). K4 om. ( hapl. ) 4ab. — a ) K1 तपःसरोगणाकीर्णं; Da3. a4 अप्सरोगणसंकीर्णं; M5 गंधर्वैस्तु समाकीर्णं. — b ) Dn1 शत-; G1 शीत-; Bom. ed. शांत- ( for गीत- ). D7 T G1. 3. 6 -स्वर-; M1 -स्थान-; M6. 7 -स्थन- ( sic ) ( for -स्वन- ). B8 ( marg. ) M1. 5–7 -विनादितं ( for -निना° ). — c ) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 सहस्रैश्; G3 निनादैश् ( for समूहैश् ). — D4 om. ( hapl. ) 4d–5e. — d ) D7 राजहंसैस् ( for भृङ्गराजैस् ).

5 V1 missing ( cf. v. l. 1 ). D4 om. 5abcde ( cf. v. l. 4 ). — a ) K6 महद्भिः; K7 Ds1 D3 ( before corr. as in text ). 8. 9 मंगुभिः; D5. 7 M1. 6 7 बहुभिः ( for मद्गुभिः ). — b ) Dn1 जीवनैः ( for -जीवकैः ). ❀ Cs: खञ्जरीटः खंजनु इति वैजयन्ती । ❀ — D1 T G1–3. 6 om 5cd. — c ) K1 C4 ( gloss: चित्रपक्षैः ) चित्रपर्णैर् ( for °वर्णैर् ). K7 D1 शुकैश्चैव ( for मयूरैश्च ).

C.12.12317
B.12.328[7].7
K.12.325.7

पक्षिराजो गरुत्मांश्च यं नित्यमधिगच्छति ।
चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा ।
यत्र नित्यं समायान्ति लोकस्य हितकाम्यया ॥ ६
विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना ।
यत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः ॥ ७
शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै ।
यत्रोवाच जगत्स्कन्दः क्षिपन्वाक्यमिदं तदा ॥ ८
योऽन्योऽस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः ।
यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्यवान् ॥ ९
सोऽभ्युद्धरत्विमां शक्तिमथ वा कम्पयत्विति ।
तच्छ्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति ॥ १०
अथ देवगणं सर्वं संभ्रान्तेन्द्रियमानसम् ।
अपश्यद्भगवान्विष्णुः क्षिप्तं सासुरराक्षसम् ।
किं न्वत्र सुकृतं कार्यं भवेदिति विचिन्तयन् ॥ ११
स नामृष्यत तं क्षेपमवैक्षत च पावकिम् ।
स प्रहस्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा ।

— $^{d}$) B8 (marg. as in text) ·निनादितैः; M1.5–7 ·विराविभिः (for °जितैः). K7 D9 कुररैश्च शिखंडिभिः. — Ds1 reads $5^{ef}$ twice. — $^{e}$) Ds1 (second time) शुकैश्च राजराजैश्च. — $^{f}$) Bo Da3 Dn1.n4 D2.3.8 कृष्णैः; Ds1 (first time) Cs (gloss: वर्णांतरासंसृष्टैः। इतरपक्षिभ्यो वैलक्षण्यं सूचितमिति बोद्धव्यम्) श्वेतैः (for हृष्टैः). D5.7 परसिकैस् (for °भृतैस्). T1 G2.3.6 अपि (for तथा). Ds1 (second time).s2 अन्यैः पक्षिगणैरपि.

6 V1 missing (cf. v. l. 1). G2 om. $6^{a}$–$7^{b}$. — $^{b}$) K1.2.4.7 D4.5.9 अनु·; D7 T G1.3.6 अभि· (for अधि·). Bo.8 (marg.) Dn1.n4 Ds D2.3.8 यं नित्यमधितिष्ठति. — $^{d}$) B3 (marg. as in text) स देवर्षि· (for देवाः सर्षि·). — Ds2 reads $6^{ef}$ twice. — $^{e}$) K4.6 Bo.7.8 (marg. as in text) Da3.a4 Dn1.n4 Ds1.s2 (second time) D2.3.8 तत्र (for यत्र). K7 Ds2 (first time) D4.9 महादेवो; Ds2 (second time) समायाति. — $^{f}$) K7 Ds2 (first time) D4.9 गौर्या (D4 °र्यां) रुद्रगणैस्तथा.

7 V1 missing (cf. v. l. 1). G2 om. $7^{ab}$ (cf. v. l. 6). — $^{a}$) K6 B8 पुत्रार्थं; Da4 पुत्रास्ते (for °र्थे). ❀ Ca: पुत्रार्थे, साम्बार्थम्। ❀ — $^{c}$) K4.6 Bo.6.7.9 Da3.a4 Dn1.n4 D3 D2.3.8 तत्र (for यत्र). K1.2.7 D4.5.9 transp. एव and च. — $^{d}$) K1.2.6 B9 Da4 M7 क्षिप्त्वा; D5 दीप्ता (for क्षिप्ता). K7 D4.9 महौजसा; Da4 दिवक्षसः (for दिवौकसः).

8 V1 missing (cf. v. l. 1). — $^{a}$) K1.2 D7 G3 शक्तिं; K6 क्षितिर् (for शक्तिर्). K7 D4.9 गिरितटे (for क्षितितले). — $^{b}$) T G1.3 M1.5–7 अवमत्य (for °मन्य). — $^{c}$) Bo Da3 Dn1.n4 Ds2 D2.3.8 G1 तत्र; G3 यत्ते (for यत्र). K1.2.4 सुरान्; Bo गजत् (for जगत्). G2 स्कंधं (for स्कन्दः). — $^{d}$) K7 D4.9 क्षिप्रं (for क्षिपन्). Bo.6.7 तथा (for तदा).

9 V1 missing (cf. v. l. 1). — $^{a}$) K6.7 D4.9 कोन्यो; G2 यो नो; M1.6.7 येन्यो (for योऽन्यो). G2 तेन (for मत्तो). K7 D4.9 ह्यधिको (for ऽभ्य°). — $^{b}$) M1.7 विप्र (for विप्रा). K1.2 अधिक-; Ds2 अधिकाः (for °कं). Ds1 प्रियः. — $^{c}$) Ds1 सो (for यो). K1.2.4 ब्रह्मण्ये; K7 °णो; Da4 ब्राह्मण्यो; M1.5–7 ब्रह्मण्या (for °ण्यो).

10 V1 missing (cf. v. l. 1). — $^{a}$) Da4 [ऽ]भ्यधत्व-रत्विमां; D7 [ऽ]भ्युद्धरन्निमां (for °रत्विमां). — $^{b}$) B9 कल्पयति (for कम्पयतु). — Before $10^{cd}$, B8.9 ins. भीष्म उवाच. — $^{d}$) T1 G3.6 कंपयेद् (for उद्धरेद्). K1.2.4 क इमामुद्धरिष्यति; G2 कुमारपरिनिक्षिप्तौ.

11 V1 missing (cf. v. l. 1). — $^{a}$) D4.9 कथं दै· (D9 अथ दे)वगणान्सर्वान्. — $^{b}$) K7 D4.9 -मानसान्; D7 T2 -मानसः (for °सम्). — $^{c}$) D7 अपश्यन्. Da4 विष्णुं. — $^{d}$) D5.7 सामर· (for सासुर-). K2 क्षिप्त-सासुरराक्षसं; K7 D4.9 क्षिप्तान्सासुरराक्षसान्. — $^{e}$) K6 Bo.6–8 Da3.a4 Dn1.n4 Ds2 D2.3.5.7.8 त्वत्र; K7 Ds1 D4.9 तत्र (for न्वत्र). — $^{f}$) K1.7 विचिंतयं (for °तयन्).

12 V1 missing (cf. v. l. 1). — $^{a}$) K1 मनामृषत तं क्षेमम्; K4 Bo.6–9 Da3.a4 Dn4 Ds D2.3.5.8 G3 अ(K4 G3 स)नामृष्य ततः क्षेप(Ds1 सेय)म्; K6 नामृष्यत ततः क्षेपम्; Dn1 अनाघृष्यत्ततः क्षेपम्; D7 अनामृश्य ततः क्षेमं; T2 अनामृष्यत तं क्षेपम्; G2 समामृश्य ततः क्षेपम्. — $^{b}$) K1.2 अवैक्षित (for °क्षत). K1.4 Da4 Ds (before corr.) पावकं (for °किम्). D5.7 मामवैक्षत पावकिं; G2 अवैक्षत हरिस्तु किं. — $^{c}$) K1 सहसस्य; K4.6 Bo.6–9 Da3 Dn1.n4 Ds D2.3.5.7.8 T2 संप्रगृह्य; Da4 संप्रविश्य; T1 G1.3 संप्र(G1 स·प्र)·

कम्पयामास सव्येन पाणिना पुरुषोत्तमः ॥ १२
शक्त्यां तु कम्पमानायां विष्णुना बलिना तदा ।
मेदिनी कम्पिता सर्वा सशैलवनकानना ॥ १३
शक्तेनापि समुद्धर्तुं कम्पिता सा न तूद्धृता ।
रक्षता स्कन्दराजस्य धर्षणां प्रभविष्णुना ॥ १४
तां कम्पयित्वा भगवान्प्रह्लादमिदमब्रवीत् ।
पश्य वीर्यं कुमारस्य नैतदन्यः करिष्यति ॥ १५
सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः ।
जग्राह तां तस्य शक्तिं न चैनामप्यकम्पयत् ॥ १६

नादं महान्तं मुक्त्वा स मूर्छितो गिरिमूर्धनि ।
विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः ॥ १७
यत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः ।
तपोऽतप्यत दुर्धर्षस्तात नित्यं वृषध्वजः ॥ १८
पावकेन परिक्षिप्तो दीप्यता तस्य चाश्रमः ।
आदित्यबन्धनं नाम दुर्धर्षमकृतात्मभिः ॥ १९
न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः ।
दशयोजनविस्तारमग्निज्वालासमावृतम् ॥ २०
भगवान्पावकस्तत्र स्वयं तिष्ठति वीर्यवान् । C. 12. 12334 B. 12. 328[7].23 K. 12. 335. 23

---

सह्य: $G_2$ अप्रसह्य; $G_6$ संप्रहस्य (for स प्रहस्य). —$^{d}$) $Da_4$ $D_4$ शक्ति- (for शक्तिं). $K_1$ प्रज्वाल्लितां; $K_6$ $B_8$ (marg.).9 $Da_{3.a4}$ तां ज्वलितां; $B_3$ (orig.) तां महतीं (for प्रज्वलितां). $K_{1.2.4.7}$ $M_{1.5-7}$ तथा (for तदा). —$^{e}$) $B_9$ कल्पयामास (for कम्प°).

13 $V_1$ missing (cf. v. l. 1). —$^{a}$) $K_2$ शक्त्या; $Da_4$ शक्यां (for शक्त्यां). $K_{2.4}$ $B_{0.6-9}$ $Da_3$ $Dn_{1.n4}$ $D_8$ $G_{2.6}$ $M_{5-7}$ कंप्यमानायां. —$^{b}$) $D_7$ तथा (for तदा). $M_5$ विष्णुना प्रभविष्णुना.

14 $V_1$ missing (cf. v. l. 1). —$^{a}$) $K_6$ $D_8$ $D_{5.7}$ शक्रेण; $K_7$ शक्तो न; $Da_{3.a4}$ शक्तिना (for शक्तेन). —$^{b}$) $K_{1.2.4}$ न भूद्धृता (sic); $K_{6.7}$ $B_{0.6-9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ [अ]भवत्तदा; $D_4$ ननूद्धृता; $D_9$ न भूर्द्धृता; $T_1$ $G_{2.3.6}$ ह्यनुद्धृता (for न तूद्धृता). —$^{c}$) $K_7$ $B_9$ $Dn_{1.n4}$ $D_{3.4.9}$ $M_{1.5.6}$ Cv (gloss: प्रतिज्ञा रक्षिता) रक्षिता; $D_{5.7}$ रक्षितां (for रक्षता). $D_2$ -रायस्य; $D_{5.7}$ -देवस्य (for -राजस्य). —$^{d}$) $K_{1.2.4}$ विष्णुना; $Da_{3.a4}$ $D_8$ T $G_{1-3.6}$ Ca (gloss: तेजोवधरूपं) धर्षणं; $Dn_1$ $D_{2.8.9}$ धर्षणा; $Dn_4$ धर्मणां; $D_{5.7}$ हर्षेण (for धर्षणां). $K_{1.2}$ प्रभविष्णुतां. ❀ Cv: कम्पनाद्धर्षिता, अनुद्धरणाद्रक्षिता चेति भावः । ❀

15 $V_1$ missing (cf. v. l. 1). —$^{b}$) $K_{1.2.4}$ $D_8$ $D_7$ $T_1$ $G_{1.3.6}$ प्रह्लादम्. $M_{1.5-7}$ विष्णुः प्रह्लादमब्रवीत्. —$^{d}$) $K_{1.2.4}$ तरिष्यति (for करि°).

16 $V_1$ missing (cf. v. l. 1). —$^{a}$) $D_{5.7}$ $T_1$ $G_{2.3.6}$ तं चार्थं (for तद्वाक्यं). —$^{b}$) $K_2$ -निश्चिताः; $B_6$ (marg. as in text) $Ds_2$ $G_6$ -निश्चयः (for -निश्चितः). $G_{2.3}$ समूलं रणनिश्चितं ($G_3$ °कः). —$^{d}$) $K_{1.2.4}$ चैताम् (for चैनाम्). $K_7$ $D_{4.5.7.9}$ T $G_{1-3.6}$ अभ्यकंपयत् (for अप्य°). $Da_3$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ न चैनां स व्यकंपयत्.

17 $V_1$ missing (cf. v. l. 1). —$^{a}$) $B_8$ (marg.).9 $T_2$ कृत्वा स ($B_3$ तु); $Da_4$ मुक्तस्य; $Ds_1$ $D_9$ मुक्ता स; $D_7$ T $G_{1-3.6}$ मुक्त्वा तु (for मुक्त्वा स). —$^{b}$) $B_0$ om. गिरि. —$^{c}$) $D_8$ विह्वळः. $K_7$ $G_3$ प्रपतद्.

18 $V_1$ missing (cf. v. l. 1). —$^{a}$) $K_{2.4}$ $B_0$ $Da_4$ $Dn_{1}$ $n_4$ $D_8$ $D_{2.3.8}$ तत्र (for यत्र). $G_3$ दिशां (for दिशं). —$^{b}$) $G_{2.3}$ पार्श्वगः (for °तः). —$^{c}$) $K_{4.6}$ $B_{0.6-9}$ $Da_{3.a4}$ $Dn_{1.n4}$ $Ds_2$ $D_{2.3.5.8}$ $G_{2.3}$ दुर्धर्षं (for °र्षस्). —$^{d}$) $K_1$ तपो; $K_2$ ततो; $Dn_1$ तं तु; $T_1$ $G_{3.6}$ स्नातो (for तात). $G_2$ अस्नातो नित्यवृद्धजं (sic).

19 $V_1$ missing (cf. v. l. 1). —$^{a}$) $B_{0.7.8}$ (orig.) $Da_3$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ T $G_{1-3.6}$ परिक्षिप्तं; $B_8$ (marg.) समाक्षिप्तो (for परि°). —$^{b}$) $K_{1.2.4}$ $D_{5.7}$ दीप्यते; $M_{1.6.7}$ दीप्यमान् (for दीप्यता). $B_8$ (orig.) वा समं; $D_7$ चाश्रमं. $K_7$ $B_0$ $Dn_{1.n4}$ $D_8$ $D_{2-4.8.9}$ T $G_{1-3.6}$ दीप्यता ($T_1$ $G_6$ दीव्यता; $G_{2.3}$ दिव्यका) यस्य चाश्रमं ($K_7$ $D_{4.9}$ °मे; $Ds_2$ °यं); $B_8$ (marg.) दीप्यते यस्य चाश्रमे. —$^{c}$) $K_{1.2.4.6}$ $B_{0.6.8}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ -पर्वतं; $K_7$ $D_{4.5.7.9}$ -वर्धनं (for -बन्धनं). —$^{d}$) $K_{1.2.4}$ दुर्ध($K_2$ °र्वं)र्षमपराजितः ($K_1$ °तं); $Da_4$ °मकृतात्मनि.

20 $V_1$ missing (cf. v. l. 1). —$^{c}$) $G_1$ -विस्तीर्णम् (for -विस्तारम्). —$^{d}$) $G_2$ -समावृतः (for °वृतम्).

21 $V_1$ missing (cf. v. l. 1). —$^{a}$) $K_{1.7}$ $D_{4.9}$ पावकिस् (for °कस्). — $G_3$ om. (hapl.) 21$^{b}$–22$^{a}$. —$^{b}$) $K_{1.2.4}$ नित्यदा (for वीर्यवान्). —$^{c}$) $K_{4.6}$

C. 12. 12334
B. 12. 328[7]. 24
K. 12. 335. 24

सर्वविघ्नान्प्रशमयन्महादेवस्य धीमतः । २१
दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः ।
देवान्संतापयंस्तत्र महादेवो धृतव्रतः ॥ २२
ऐन्द्रीं तु दिशमास्थाय शैलराजस्य धीमतः ।
विविक्ते पर्वततटे पाराशर्यो महातपाः ।
वेदानध्यापयामास व्यासः शिष्यान्महातपाः ॥ २३
सुमन्तुं च महाभागं वैशंपायनमेव च ।
जैमिनिं च महाप्राज्ञं पैलं चापि तपस्विनम् ॥ २४
एभिः शिष्यैः परिवृतो व्यास आस्ते महातपाः ।
तत्राश्रमपदं पुण्यं ददर्श पितुरुत्तमम् ।
आरणेयो विशुद्धात्मा नभसीव दिवाकरः ॥ २५
अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकम् ।
ददर्श सुतमायान्तं दिवाकरसमप्रभम् ॥ २६
असज्जमानं वृक्षेषु शैलेषु विषमेषु च ।
योगयुक्तं महात्मानं यथा बाणं गुणच्युतम् ॥ २७
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः ।
यथोपजोषं तैश्चापि समागच्छन्महामुनिः ॥ २८
ततो निवेदयामास पित्रे सर्वमशेषतः ।
शुको जनकराजेन संवादं प्रीतमानसः ॥ २९
एवमध्यापयञ्शिष्यान्व्यासः पुत्रं च वीर्यवान् ।

---

Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 7. 8 T1 G6 सर्वान् ( for सर्व- ). T1 G3 प्रमथयन् ( for प्रशम° ).

22 V1 missing ( cf. v. l. 1 ). G2 om. $22^{a-c}$ ( cf. v. l. 21 ). — $^{a}$ ) K7 D4. 9 T1 G3 दिव्य- ( for दिव्यं ). K1. 2 -सहस्रं तु; K7 D4. 5. 9 -सहस्राणि ; B8 ( marg. ) -सहस्रं स; Da4 °स्रं वै ( for °स्रं हि ). — $^{b}$ ) T1 M1. 5–7 विष्ठि( T1 °ष्ठ )तः ( for तिष्ठतः ). D2 पादेन प्रतितिष्ठतः. — K1 transp. $22^{cd}$ and $23^{ef}$. K2. 4 transp. $22^{cd}$ and $23^{ab}$. — $^{c}$ ) K6 संतर्पयंस् ; B6 संतापयेत् ( for °यंस् ). K7 B7 D4. 9 देवान्संतापयामास. — $^{d}$ ) K7 D4. 9 T1 G6 दृढव्रतः ; Bo Dn1. n4 Ds D2. 3. 8 महा° ; G2 वृताव्रतः ( for धृतव्रतः ).

23 V1 missing ( cf. v. l. 1 ). K2. 4 transp. $22^{cd}$ and $23^{ab}$. — $^{a}$ ) G1 ऐंद्रिं तु ; G2 ऐंद्रीशां ; G3 ऐंद्रियं ( for ऐन्द्रीं तु ). — $^{b}$ ) K1 तत्र तु ; Ds पार्श्वतः ; M1. 5–7 मूर्धनि ( for धीमतः ). — $^{c}$ ) K1 त्रिवक्ते ; Dn4 विविक्त- ( for °क्ते ). D8 -मठे ( for -तटे ). B8 ( marg. ) विविक्ते पर्वते तत्र. — $^{d}$ ) D9 महायशाः ( for °तपाः ). K1 पराशर्यो महातपः ; Ds1 पराशर्यमहानयाः. — K1 transp. $22^{cd}$ and $23^{ef}$. K2 om. ( hapl. ) $23^{ef}$. — $^{f}$ ) Da4 om. व्यासः. K1 D2 महातपः ; K4 °यशा ; K7 Ds2 D4. 9 °मनाः ; D7 T G1–3. 6 °मुनिः ; M1. 5–7 °मतिः ( for °तपाः ).

24 V1 missing ( cf. v. l. 1 ). — $^{a}$ ) K1 समंतुं ; K2. 4 सुमंतुश्च ; K7 Ds D4. 7. 9 सुमंतं ( for सुमन्तुं ). K1 महाभाग- ; K2. 4 °भागो ( for °भागं ). — $^{b}$ ) K2 वैशंपायन. — $^{c}$ ) D7 T1 G2. 3. 6 महात्मानं ( for °प्राज्ञं ). K1. 2, 4 जैमनिश्च ( K1 °मिनिं च ) महाप्रज्ञः. — $^{d}$ ) T2 G1 M1. 5–7 चाति ( for चापि ). K2. 4 पैलश्चापि महातपाः ; D7 T1 G2. 3. 6 पैलं चामिततेजसं.

25 V1 missing ( cf. v. l. 1 ). — $^{a}$ ) K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 यत्र ; G2 यो हि ( for एभिः ). — $^{b}$ ) K1. 2. 4 आसीन् ( for आस्ते ). — $^{c}$ ) K1. 7 D4. 9 तदाश्रम- ; Bo. 6. 8. 9 Dn1. n4 Ds1 तमा° ; Ds2 तस्या° ( for तत्रा° ). Bo. 8 ( marg. as in text ) Dn1. n4 D2. 3 रम्यं ; D8 रम्ये ( for पुण्यं ). — $^{e}$ ) Da3 आरण्येयो. — $^{f}$ ) M1. 7 दिवाकरं.

26 V1 missing ( cf. v. l. 1 ). — $^{a}$ ) D7 अध ( for अथ ). K7 D4. 9 [अं]तरि( K7 °री )क्षस्थं ; M1. 6. 7 परिक्षिप्तो ( for °क्षिप्तं ). — $^{c}$ ) K6. 7 Bo 6. 7. 8 ( marg as in text ) 9 Da3. a4 Dn1 n4 Ds D2–5. 8. 9 ददृशे ( for ददर्श ). — $^{d}$ ) Da4 -प्रभां ( for -प्रभम् ).

27 V1 missing ( cf. v. l. 1 ). — $^{ab}$ ) T1 G1 3. 6 M1. 6. 7 अमज्यमानं ; G2 आसज्य°. K1 2. 4 transp. वृक्षेषु and शैलेषु. D5. 7 असह्यमानं सर्वत्र. K2. 7 Dn1. n4 Ds D4. 7. 9 G1–3 विषयेषु ; B7 विशमेषु ; Da3. a4 विविधेषु. — $^{c}$ ) G2. 3 योगमुक्तं ( for °युक्तं ). — $^{d}$ ) Da4 बाण- ( for बाणं ). K1 गुणं च्युतं ; K2 T2 G1 M1 गुणाच्युतं ; K7 D7 T1 G3. 6 M5–7 गुणाच्च्युतं.

28 V1 missing ( cf. v. l. 1 ). — $^{a}$ ) D5 गुरोः ( for पितुः ). — $^{b}$ ) K6. 7 Ds1 अवगृह्णाद्. K1. 2. 4 जग्राहाथारणीसुतः. — $^{c}$ ) K7 D4. 9 यथोपयोगं ; B9 °युज्यं ; Ca ( gloss : यथासुखं ) °जोषं ( as in text ). K1. 2. 4 च ततः ; D7 T G1–3. 6 तं चापि ( for तैश्चापि ). — $^{d}$ ) K1. 2. 4. 7 D4. 5. 9 महामतिः ( for °मुनिः ).

29 V1 missing ( cf. v. l. 1 ). G3 M6 om. ( hapl. ) 29–30. — $^{b}$ ) K1. 2. 4 पितुः ; D4 पित्र्ये. — $^{c}$ ) D4

उवास हिमवत्पृष्ठे पाराशर्यो महामुनिः ॥ ३०
ततः कदाचिच्छिष्यास्तं परिवार्यावतस्थिरे ।
वेदाध्ययनसंपन्नाः शान्तात्मानो जितेन्द्रियाः ॥ ३१
वेदेषु निष्ठां संप्राप्य साङ्गेष्वतितपस्विनः ।
अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम् ॥ ३२
महता श्रेयसा युक्ता यशसा च स्म वर्धिताः ।
एकं त्विदानीमिच्छामो गुरुणानुग्रहं कृतम् ॥ ३३
इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाच ह ।
उच्यतामिति तद्वत्सा यद्वः कार्यं प्रियं मया ॥ ३४
एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः ।
पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ॥ ३५
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम् ।
यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम ॥ ३६
काङ्क्षामस्तु वयं सर्वे वरं दत्तं महर्षिणा ।
षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः ॥ ३७
चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः ।
इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ॥ ३८
शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित् ।
पराशरात्मजो धीमान्परलोकार्थचिन्तकः ।
उवाच शिष्यान्धर्मात्मा धर्म्यं नैःश्रेयसं वचः ॥ ३९ C. 12. 12354 B. 12. 329[7]. 43 K. 12. 335. 43

---

-राजसं; G2 -राजेंद्र (for -राजेन).

30 V1 missing (cf. v. l. 1). G3 M6 om. 30 (cf. v. l. 29). — a) K2.4 एवमद्यापि शिष्यास्तं. — K1.2.4 om. (hapl.) $30^{b}$–$31^{a}$. — d) D4 महातपाः (for °मुनिः).

31 K1.2.4 om. $31^{a}$ (cf. v. l. 30). — b) K1.2.4 पर्यवार्य (for परि°). D4.7.9 T G1–3.6 M1.5–7 [उ]प- (for [अ]व-).

32 a) D5 निश्चयं (for निष्ठां सं-). — b) K7 B0.6–8 Dn1.n4 Ds D2–5.7–9 T G1–3.6 अपि (for अति-). T2 G1 तपस्विनां. — c) K2 Da4 अथोच्युस्. D5 तं (for ते). K2 D7 तथा (for तदा). — d) B0 गुरुः (for गुरुम्).

33 Before 33, K6.7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2–5.7–9 ins. शिष्या ऊचुः. — a) K1.2.4 V1 भवता (for महता). K6 V1 B6–9 Da3.a4 Dn1.n4 Ds D2–4.8 तेजसा; B8 (marg.) तपसा; M1 श्रेयसो (for °सा). — b) K6 च स्व-; K7 D4.9 चाप्सु; B6 स्म च (by transp.); Dn1 चापि; D5 तव. D7 T G1–3.6 यशसा च समन्विताः. — $33^{cd}$ is partly damaged in V1. — c) D4.9 एवं (for एकं). K2.4 पृच्छामो (for इ°).

34 Before 34, D8 ins. भीष्म उवाच. — a) K1.2.4 transp. तेषां and श्रुत्वा. — b) M1.5–7 महर्षिस् (for ब्रह्मर्षिस्). — c) K6 B0 यद् (for तद्). G2 व्यासो (for वत्सा). K2 उइयत्वामिति तद्वत्स्स (sic). — d) M1.7 यच्च (for यद्वः). D7 T G1–3.6 कृतं (for प्रियं). B6 मम (for मया).

35 a) K1.2.4 इति (for एतद्). — b) Da4 -मानसः. — c) B8 (marg.) सर्वे (for भूत्वा).

36 a) K7 D4.9 सहसा (for सहिता). — Before $36^{cd}$, B8.9 ins. शिष्या ऊचुः. V1 partly damaged in $36^{cd}$. Da3.a4 om. (hapl.) $36^{cd}$. — c) G1 इति (for यदि). K2 प्रीता (for प्रीत). G2 उपायोन्यो (for °ध्यायो). K1 यदि प्रीतितपाध्यातो. — d) K6 B6.7 D5 M1.7 स्म; D7 ते (for स्मो). K7 D5 -सत्तमा; D4 -सत्तमः. — After 36, Ds1 reads $38^{cd}$ for the first time, repeating it in its proper place.

37 a) V1 कांक्षामहे वरं दत्तं; M1.6.7 कांक्षायम- (M6 °मय)स्तु सर्वेषां. — b) K1 वर- (for वरं). Da3 Dn1.n4 D2.3.8 दातुं (for दत्तं). Da4 महर्षिणः. V1 वयं सर्वे महर्षिणा. — c) D7 गतः; G3 न मे (for न ते). — d*) V1 B8 (marg. as in text) इति (for अत्र). K7 D4.9 प्रसीदत (D4 °तः) (for °द नः).

38 b) K1.2 B6.9 Da3 Ds2 तु (for च). G2 पंचमं. — Ds1 reads $38^{cd}$ for the first time after 36. — c) D5 प्रतिष्ठेत. — d) K1.2 इति (for एष). K6 वः (for नः).

39 K1 D5 om. $39^{abcd}$. — b) K6 सर्वे-; B6 Da3.a4 स वै (for व्यासो). K2.4.7 D4.9 व्यासो वचनमब्रवीत्; D7 T G1–3.6 M1.5–7 महर्षिप्र(G1 °र्षिः प्र)-वरस्तदा. — $39^{cd}$ is partly damaged in V1. — c) D4.9 शुको ममात्मनो धीमान्; M1 पराशरात्मनो धी°. — d) K2 परलोकाक्ष- (for °कार्थ-). Da4 -चिंतकाः.

